VOL XXXII. 1910

# काशीविद्यासुधानिधिः

# THE PANDIT

## A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE,

DEVOTED TO

SANSKRIT LITERATURE.

NEW SERIES.



PRINTED BY A C CHAKRAVARTY AT THE MAHAMANDAL
SHASTRA PRAKASAK SAMITI PRESS,
AND
PUBLISHED BY ALOPI PRASAD FOR E J LAZARUS & CO.
BENARES CANT

 *[Price Rs. 9/ per annum*

# INDEX OF VOLUME XXXII, NEW SERIES



All literary matters, correspondence etc
To be addressed to

*The Publishers,*
E. J LAZARUS & Co
MEDICAL HALL PRESS,
*Benares Cantonment*

॥ श्रीगणेशायनमः ॥

यद्यत्कापुरुषादनुव्रजनतस्तच्चित्तसंरक्षणात्
तत्तद्वागनुवादतश्च विबुधाः क्लिश्यन्ति लब्धुं प्रियम् ॥
तत्सर्वं पुरुषोत्तमाद्वयमनायासेन लिप्सामहे
भक्तिस्तच्चरणद्वये ऽप्रतिहता यद्यस्ति किं दुर्लभम् ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन त्रिनायकेन ।
शास्त्रे पराशरकृते क्रियते व्यवस्था
ऽध्यायेऽष्टमेऽत्र नवमे विहितव्रतानाम् ॥

एवमष्टमाध्याये ऽभिहितानां व्रतविधानां निमित्तविशेषे व्यवस्थापनाय नवमाध्यायमारभते । तत्रादौ निमित्तविशेषे प्रायश्चित्तनिमित्ततामपवदति ।

गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः ।
तद्वधं तु न तं विद्यात्कामाकामकृतं तथा ॥ १ ॥

गवां सम्यग्रक्षायै श्वशृगालादिभयनिवृत्त्यै रात्रौ यो रोधः शालादौ प्रतिबन्धो यश्च बन्धो रज्ज्वादिना नियन्त्रणं तयोः क्रियमाणयोः सतोः यदि गवां मरणं स्यात्तदा तत्कर्ता न दुष्येत्‌दोषभाक् भवति तत्र हेतुमाह यतस्तं रोधादिव्यापारं तासां गवां वधं निषिद्धं न विद्यात् । तस्य फलमाह । कामाकामाभ्यामुत्पन्ने निमित्ते कृतं प्रायश्चित्तं तथा न विद्यात् । एवं भयशङ्काभावेऽपि स्वेच्छया लोभादिना बद्धानां गवां बन्धनयोक्त्रादिना मरणे पूर्वोक्तप्रायश्चित्तस्य विषये नेत्येतदाहाङ्गिराः ।

सायं सङ्गोपनार्थं तु न दुष्येद्रोधबन्धयोरिति ।

अकामतो रोधादावुक्तप्रायश्चित्तस्य कामतो द्वैगुण्यमाह ।

दण्डादूर्ध्वं यदन्येन प्रहाराद्यदि पातयेत् ।
प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधं चरेत् ॥ २ ॥

दण्डाद् अङ्गुष्ठमात्रस्थूलइत्यादिवक्ष्यमाणलक्षणात् ऊर्ध्वमधिक-प्रमाणेनान्येन लगुडादिना प्रहारात् प्रहृत्य यदि गाम्पातयेत् घातये-त्तदा अकामतो घाते यत्प्रायश्चित्त प्रोक्त पूर्वाध्याये प्रतिपादित तत्का-मतो घाते द्विगुण चरेत् घात इति रोधादीनामप्युपलक्षणम् । तथा चैव फलति । अकामतो रोधे एकः पादः कामतो द्वौ अकामतो बन्धने द्वौ पादौ कामतश्चत्वारः अकामतो योक्त्रे त्रयः पादाः कामतः षट्, अका-मतो घाते प्राजापत्यम् कामतो द्वाविति । यद्यप्यत्र कामत इति न श्रूयते तथाप्यकामकारप्रायश्चित्तस्य द्वैगुण्यविधानं कामकारविषयमिति गम्यते ।

विहितं यदकामाना कामात्तद्विगुण भवेदितिस्मरणात् ।
यथाकाभानुबन्धेन व्रतद्वैगुण्य तथा गोगुणानुबन्धेनापि ज्ञेयम् ।

तदाहबृहस्पतिः ।

गर्भिणीं कपिला दोग्ध्रीं होमधेनु च सुव्रतीम् ।
खड्गादिना घातयित्वा द्विगुण व्रतमाचरेदिति ॥

इदानीमुक्तप्राजापत्यविधान निमित्तविशेषे व्यवस्थापनाय तद्भेद-मुपन्यस्यति ।

**रोधबन्धनयोक्त्राणि घातश्चेति चतुर्विधम् ।**

वक्ष्यमाणलक्षणानि रोधादीनि घातश्चेति चतुर्विधम् वधनिमि-त्तमिति शेषः । तत्र प्रायश्चित्तव्यवस्थामाह ।

**एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥ ३ ॥**
**योक्त्रेषु हीनपादं स्याच्चरेत्सर्वं निपातने ।**

पूर्वाध्याये षोडशरात्रः कृच्छ्रो विहितः तस्य तत्रोक्तपादकल्पन-यैवात्र रोधादिनिमित्तेषु वधेषु प्रायश्चित्तान्यवगन्तव्यानि ।

तानि चेत्थम् । एकभक्तनक्तायाचितोपवासैः क्रमानुष्ठितैरेकः पादो रोधे कार्यः । तैरेव स्वस्थानविवृद्धैर्द्विगुणैर्द्वौ पादौ बन्धने कार्यौ ।

त्रिगुणैस्त्रयः पादा योत्क्रे कार्याः । चतुर्गुणैः सर्वं प्राजापत्यं निपातने कार्यमिति ।

तदाहापस्तम्बः ।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥
एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत्सर्वं निपातने इति ।

इह चाऽकामतो रोधादौ ज्ञेयम् । पूर्वाध्यायादावकामत इत्युपक्रम्यास्यार्भिधानात् । कामतस्त्वेतदेव द्विगुणमित्युक्तमेव दण्डादूर्ध्वमित्यनेन घाते त्वकामकृतेऽपि वयोविशेषेणैतद्व्यवस्थामाह बृहत्प्रचेताः ।

एकवर्षे हते वत्से कृच्छ्रपादो विधीयते ।
अबुद्धिपूर्वं पुंसः स्याद्द्विपादस्तु द्विहायने ।
त्रिहायने त्रिपादं स्यात्प्राजापत्यमतः परमिति ।
कामतो घाते त्वनयैव दिशा द्वैगुण्यं कल्प्यम् ।

यद्यपि रोधादौ गोवयोविशेषो न श्रूयते तथापि चतुर्हायनघाते प्राजापत्यदर्शनात् तादृशस्यैव रोधादौ पादकृच्छ्रादीति ज्ञेयम् । तथा चैकवर्षादीनां घाते पादकृच्छ्रादिविधानात् रोधादौ पादकृच्छ्राणां तुरीयांशः एकोपवासादिः कल्प्यः । तथा एकवर्षस्य रोधे द्वावुपवासौ बन्धे चत्वारः योजने षट् घाते द्वौ पादौ । त्रिवर्षस्य रोधे त्रय उपवासा बन्धे षट् योजने नव घाते त्रयः पादाः चतुर्वर्षस्य रोधे एकः पादो बन्धे द्वौ योजने त्रयः घाते प्राजापत्यमिति कामतस्तु तत्तदेव द्विगुणमिति समुदायार्थः । इदमित्थमेव व्याख्येयम् । अन्यथा चतुर्हायनरोधादौ ये पादकृच्छ्रादयस्त एवैकहायनादिरोधादिष्वपीति विरोधापातात् ।

इदानीमुद्दिष्टस्य रोधस्य स्वरूपमाह ।

**गोवाटे वा गृहे वापि दुर्गेष्वप्यसमस्थले ॥ ४ ॥**
**नदीष्वथ समुद्रेषु त्वन्येषु च नदीमुखे ।**
**दग्धदेशे मृता गावस्तम्भनाद्रोध उच्यते ॥ ५ ॥**

गोवाटे गोष्ठे गृहे शालाया दुर्गेषु पर्वतादिसङ्कीर्णमार्गेषु असमस्थले निम्नोन्नतप्रदेशस्थले नदीसमुद्रयोर्मध्ये नदीसमुद्रशब्दौ तत्तीरमुपलक्षयतः। तेन यत्र बहूनां गवामाकस्मिकनदीवृध्या समुद्रवृद्ध्या च गवामुपघातो भवति तादृशस्थलमुच्यते। अन्येषु वाप्यादिषु नदीसमुद्रसङ्गमे दग्धदेशे चाग्न्यादिसन्तप्ते देशे च स्तम्भनाद्गावो मृता भवन्ति इति तत्स्तम्भनं रोध इत्युच्यते।

बन्धनस्वरूपमाह।

**योक्त्रदामकदोरैश्च कण्ठाभरणभूषणैः।**
**गृहे वापि वने वापि बद्धः स्याद्गौर्मृतो यदि ॥ ६ ॥**
**तदेव बन्धनं विद्यात्कामाकामकृतं च यत्।**

योक्त्रं पाशः दामकं शकटयुगसम्बद्धं ग्रैवेयकं दोरो रज्जुमात्रं कण्ठाभरणं घण्टा किङ्किण्यादि भूषणं ललाटपट्टिकाचामरवराटकादि एतैर्बद्धो गौर्गृहे वने वा यदि मृतः स्यात् म्रियेत तदा तत् मरणनिमित्तं योक्त्रादिकमत्र बन्धनमित्युच्यते। तच्च द्विविधं मरणाभिसन्धिनायोक्त्रादियोजनं कामकृतं बन्धनं तदनभिसन्धिना चाकामकृतमिति।

योक्त्रस्वरूपमाह।

**हले वा शकटे पङ्क्तौ पृष्ठे वा पीडितो नरैः ॥ ७ ॥**
**गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्वधः।**

हलशकटयोर्योजनेन, पङ्क्तौ गले मेटीबन्धनेन, गोण्यद्यारोपणेनातिपीडितः क्षुत्तृष्णाश्रमाद्यनपनयनेनातिवाहितो गोपतिर्बलीवर्द्दो यदि म्रियेत तदाऽसौ बधो योक्त्रो भवति। इदं च दमनादीनामप्युपलक्षणम्।

दमने दामने रोधे सङ्घाते चैव योजने।

नस्तः सकलपाशे वा मृते पादोनमाचरेत्।

इत्यापस्तम्बस्मारणात्।

अशिक्षितबलीवर्द्दस्य भारोद्वहनशिक्षणं दमनम्। मेठ्यां बद्धस्य खलस्थितधान्यमर्दनाय प्रचारणं दामनं रोधो मर्द्यमानधान्यभक्षणनिवा-

रणाय मुखबंधन सङ्घातः समर्दः योजनं द्वित्राणां गवां परस्परगलबन्धः नस्तो नासिकाया दोरप्रवेशनं सकलपाशा इत्येतानि बन्धनानि एतैरतिपीडया मृते पादोनकृच्छ्रमिति ।

घातस्वरूपमाह ।

**मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः ॥ ८ ॥**
**कामाकामकृतक्रोधो दण्डैर्हन्यादथोपलैः ।**
**प्रहृता वा मृता वापि तद्धि हेतुर्निपातने ॥ ९ ॥**

मत्तो धनादिना प्रमत्तो मद्यादिपानेन परवशः उन्मत्तः पञ्चविधोन्मादाविष्टः स यदि चेतनः सावधान अचेतनो असावधानो वा कामाकामकृतक्रोधो घातनेच्छाकामस्तदभावश्चाकामस्ताभ्यां कृतः क्रोधो यस्य तादृशः दण्डोपलादिभिः हन्यात्ताडयेत्तेन ताडनेन प्रहृता व्यथिता मृता यदि गौः तत्ताडनमेव निपातने हेतुर्घात इत्यर्थः । अयमर्थः मत्तादिः सावधानः कामतः क्रोधेन यदि गा ताडयेत्तदा ताडनमेव गोर्घातो यद्यसावधानो ऽकामतः क्रोधेन प्रमापयति तदा तदेवेत्युभयमपि घात इति । यद्यपि ताडनप्रमापणयोस्तुल्यत्वं न सम्भवति तथापि मरणोद्देशेन ताडिताया दैवाज्जीवनेऽपि मरणप्रायश्चित्तातिदेशात्तुल्यत्वम् ।

तथा च याज्ञवल्क्यः । चरेद्व्रतमहत्वापि घातार्थं चेत्समागत इति । नचात्रातिदेशात्पादोनं व्रतं चरेत्सर्वं निपातन इत्युपदेशात् ।

यदुक्तं दण्डादूर्ध्वमिति तत्राकाङ्क्षित दण्डलक्षणमाह ।

**अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रः प्रमाणतः ।**
**आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते ॥ १० ॥**

अङ्गुष्ठप्रमाणोऽङ्गुष्ठमात्रो यावान् स्थूलः, तेनाधिकस्थौल्यव्यावृत्तिः प्रमाणतो दैर्घ्येण बाहुमात्रो बाहुप्रमाणः तेनाधिकदैर्घ्यव्यावृत्तिः, आर्द्रत्वं सपलाशत्वं च वेदनानुत्पत्त्यर्थं सपलाशत्वेनार्द्रत्वसिद्धौ पुनरुपादानं सत्वत्वबोधनाय तादृशोऽत्र दण्डोऽभिधीयते इति ।

हतस्य गोर्यथोक्तदण्डेन ताडितस्य मरणेऽपि क्वचित्प्रायश्चित्ताभावमाह ।

**मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु ।**
**उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशाथ वा ॥ ११ ॥**
**ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद्यदि ।**
**पूर्वं व्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते ॥ १२ ॥**

यो गौः पूर्वमेव व्याध्युपसृष्टो यथोक्तदण्डेन ताडितो मूर्च्छितः पतितो वा भवति स एव पुनरुत्थितः सन् पञ्च सप्त दश वा पदानि गच्छति अथोत्थातुमशक्तस्तत्रैव ग्रासं तृणादिकं वा भक्षयेत् भक्षयितुमपि अशक्तः तोयं वा यदि पिबेत् पश्चान्म्रियेतापि तदा ताडयितुः प्रायश्चित्तं सम्पूर्णं न भवति किन्त्वर्धमेव पूर्वव्याधिकृतत्वान्मरणस्य सर्वथाप्यताडने वारणाद्यसम्भवाच्च । उत्थानाद्यन्यतममकृत्वा प्रहारानन्तरमेव मरणे तु प्रायश्चित्तं भवतीत्यर्थादेव सिद्धम् ।

तत्र विशेषमाह यमः ।

अतिवृद्धामतिकृशामतिबालां च रोगिणीम् ।
हत्वा पूर्वविधानेन चरेदर्द्धं व्रतं द्विज इति ॥

गोगर्भवधे प्रायश्चित्तमाह ।

**पिण्डस्थे पादमेकं तु द्वौ पादौ गर्भसंमिते ।**
**पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ १३ ॥**

चतस्रो गर्भावस्थाः पिण्डः समितः अचेतनः सचेतनश्चेति तत्र गर्भाशयगतं शुक्रं कललबुद्बुदादिक्रमेणार्धमासेन पिण्डत्वमापद्यते सा प्रथमा स एव मासमात्रेण दीर्घमापन्नो गर्भः समित इत्युच्यते । गर्भमध्ये सम्यक् मितो दृढीभूत इति यावत् सा द्वितीया स च मासानन्तरमासप्तममासमचेतनः सा तृतीया । तदनन्तरं सप्तमे मासि प्राणवायुसञ्चाररूपां चेतनामापन्नः सचेतनो भवति सा चतुर्थी । तत्र क्रमेणावस्थात्रयस्थगर्भवधे यथोक्तप्राजापत्यस्यैकद्वित्रिपादा भवन्ति । चतुर्थावस्थवधे त्वग्रे वक्ष्यति ।

तथा च षट्त्रिंशन्मते

पाद उत्पन्नमात्रेतु द्वौ पादौ दृढता गते ।
पादोन व्रतमुद्दिष्ट हत्वा गर्भमचेतनमिति ॥

पादकृच्छ्रादिषु वपने विशेषमाह ।

**पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।**
**त्रिपादे तु शिखावर्जं सशिखन्तु निपातने ॥ १४ ॥**

अङ्गरोम्णा कचाधः स्थिताना पवन तत्पादकृच्छ्रे । अपिचेत्येवार्थे श्मश्रुण एव पवन कृच्छ्रार्द्धे । त्रिपादकृच्छ्रे शिखावर्जं वपनम् । निपातयति चतुरोपि पादानिति निपातनः कृच्छ्रस्तस्मिन् सशिख वपनमिति । रोमपद नखोपलक्षणार्थम् ।

तथाचापस्तम्बः ।

पादे तु नखरोमाणि द्विपादे श्मश्रु वापयेत् ।
त्रिपादे तु शिखा धार्या चतुर्थे सशिख स्मृतमिति ॥
शिखाधारणमपि स्त्रीशूद्रव्यतिरिक्तानाम् ।
शिखा यज्ञोपवीतं च कुशा मौन तथैव च ॥
वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षड् ॥

इति धर्मप्रदीपस्मरणात् ।

प्रमादात्तत्रापि शिखानाशे विशेषः काठकगृह्ये ।

अथ चेत्प्रमादाद्वि शिखः स्यात्तदा कौशा शिखा ब्रह्मचर्यन्यिसमन्विता दक्षिणकर्णोपर्याशिखाबन्धाद्वृधस्तिष्ठेदिति ।

वपनवत्पर्षद्दक्षिणायामपि विशेषमाह ।

**पादे वस्त्रयुगं चैव द्विपादे कांस्यभाजनम् ।**
**त्रिपादे गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम् ॥ १५ ॥**

पादकृच्छ्रे वस्त्रयुग तु उत्तरीयान्तरीयरूप अर्द्धकृच्छ्रे पूर्णाहाराधारक्षम कांस्यपात्र पादन्यूने गोवृष बलीवर्द्द पूर्णकृच्छ्रे गोद्वय धेनुवृषभौ दद्यात् ।

विष्णुस्तु द्विपादे तैलद्काञ्चनमित्याह।

इदानीं चतुर्थावस्थागोगर्भे चेत्प्रायश्चित्तमाह ।

**निष्पन्नसर्वगात्रस्तु दृश्यते वा सचेतनः ॥**

**अङ्गप्रत्यङ्गसंपूर्णे द्विगुणं गोव्रतं चरेत् ॥ १६ ॥**

यो गर्भो निष्पन्नसर्वाङ्गः स सप्तमे मासि सचेतनश्च भवत्यसावङ्गप्रत्यङ्गसंपूर्णः तस्मिन् हते द्विगुणं गोहत्याव्रतं पूर्वोक्तं प्राजापत्यद्वयं चरेत् ।

तथा च षट्त्रिंशन्मते ।

अङ्गप्रत्यङ्गसंपूर्णे गर्भे चेतःसमन्विते ।
द्विगुणं गोव्रतं तत्र एषा गोघ्नस्य निष्कृतिरिति ॥

ननु वध्यगर्भस्य वयोवस्थोत्कर्षेण प्रायश्चित्ताधिक्ये प्रसवानन्तरं वत्सहननेन इतोऽपि प्रायश्चित्तमधिकं स्यात्तथा चैकवर्षे हते वत्से कृच्छ्रपादो विधियत इति विरुध्येत । न च गर्भस्थहनने द्विगुणं व्रतं निर्गतहनने च पादकृच्छ्रमिति युज्यते वयोवस्थाया उत्कृष्टत्वात् । तस्मादिदं तत्तदवस्थगर्भवतीहननविषयमस्तु । एवं च गर्भिणीहनने बार्हस्पत्यं व्रतद्वैगुण्यमपि घटते इति चेत् । मैवम् । हत्वा गर्भमचेतनमिति वचनविरोधात् । न च न्यायविरोधः ब्राह्मणवधे सवनस्थतारूपनिमित्तस्येव गोवधे गर्भस्थसचेतनतारूपनिमित्तस्यापि प्रायश्चित्तद्वैगुण्यापादकत्वे बाधकत्वाभावात् । तस्माद्गर्भवधे एवेदं न गर्भिणीवधे इति स्थितम् ।

अवयवविशेषोपघाते प्रायश्चित्तविशेषमाह ।

**पाषाणेनैव दण्डेन गावो येनाभिघातिताः ।**

**शृङ्गभङ्गे चरेत्पादं द्वौ पादौ नेत्रघातने ॥ १७ ॥**

**लाङ्गूले पादकृच्छ्रं तु द्वौ पादावस्थिभञ्जने ।**

**त्रिपादं चैव कर्णे तु चरेत्सर्वं निपातने ॥ १८ ॥**

येन पुंसा पाषाणेन तत्साहचर्यादशास्त्रीयेण दण्डेन वा गावस्ताडिता असौ शृङ्गनेत्रोपघातयोः पादार्द्धकृच्छ्रौ चरेत् । तथा लाङ्गूले

लाङ्गूलच्छेदे पादाद्यस्थिभङ्गे च पादार्धकृच्छ्रोचरेत् कर्णे कर्णच्छेदे पादोनं प्राजापत्य निपातने शृङ्गादिभङ्गश्चैव कालान्तरे गोमरणे च सर्वप्राजापत्य चरेत् ।

यत्वङ्गिरसा ।

अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पातन चैव शृङ्गस्य मासार्द्धं यावक पिबेदित्युक्तम् ।

यदपि शृङ्गादिभङ्ग न तत् कालान्तरमरणविषयमेवेति ज्ञेयम् ।

कि तत्कालान्तरमित्यपेक्षित आह ।

**शृङ्गभङ्गे ऽस्थिभङ्गे च कटिभङ्गे तथैव च ।**
**यदि जीवति षण्मासान्प्रायश्चित्तं न विद्यते ॥ १९ ॥**

शृङ्गास्थिकटिभङ्गेषु तथैव कर्णाक्षिपुच्छत्वक्च्छेदेषु च यदि षण्मासान् जीवति पश्चान् म्रियते तदा शृङ्गादिभङ्गकृतमरणनिमित्त प्रायश्चित्तं प्राजापत्यरूप न भवति ।

किन्तु शृङ्गादिभङ्गनिमित्त पादकृच्छ्राद्येव अनेन शृङ्गादिभङ्गानन्तरं षण्मासाभ्यन्तरमरणे तन्निमित्तं प्राजापत्य भवत्येवेत्युक्त भवति ।

शृङ्गादिभङ्गेषु कर्तव्यान्तरमप्याह ।

**व्रणभङ्गे च कर्तव्यः स्नेहाभ्यङ्गस्तु पाणिना ।**
**यवसश्चोपहर्तव्यो यावद्दृढबलो भवेत् ॥ २० ॥**

व्रणस्त्वक्च्छेदो भङ्गः शृङ्गादेस्तयोः समाहारो व्रणभङ्ग तस्मिंश्चिकित्सार्थं स्वपाणिना स्नेहाद्यौषधाभ्यङ्गः कर्तव्यः यवसोऽभिनव तृणमन्यदपि हित भक्ष्यमुपहरेत् यावद्यथा पूर्वबलस्ताडिता गौर्भवति तस्मिंश्चिरव्रणे व्रतोत्तराङ्गं समाप्यमिति ।

यवसश्चोपहर्तव्यो यावद्रोहेच्च तद्व्रणम् ।
सम्पूर्णे दक्षिणादद्यात्ततः पापात्प्रमुच्यते ॥

तदाह शङ्खः ।

एवं चिकित्सितस्य जीवनानन्तरं कर्तव्यमाह ।

**यावत्संपूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः ।**

**गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्जयेत् ॥ २१ ॥**

न केवलं बलाधानपर्यन्तमेव चिकित्सादिकरणं किन्तु यावद्व्रणाद्युपेतमङ्गं सर्वं सम्पूर्णावयवं भवति तावत्तं पोषयित्वानन्तरं प्रकृतावस्थं गोरूपं यस्य कस्यापि ब्राह्मणस्याग्रे मृतशङ्कापरिहाराय प्रदर्श्य नमस्कारपूर्वकं विसर्जयेत् यस्मै कस्मै चिद्दद्यात् ।

सम्यक् चिकित्सिताया अपि मरणे प्रायश्चित्तमाह ।

**यद्यसंपूर्णसर्वाङ्गो हीनदेहो भवेत्तदा ।**
**गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्दिशेत् ॥२२॥**

सम्यक्चिकित्स्यमानोऽपि गौर्यद्यसम्पूर्णसर्वाङ्गो न सम्पूर्णं व्रणादिस्थाने सर्वमङ्गं यस्यासर्वादृश एव हीनदेहः तदा तस्य प्राजापत्यस्यार्द्धं प्रायश्चित्तं गोघातकस्य गोताडयितुर्विनिर्दिशेत् । अनेन चरेत्सर्वं निपातनं इत्युक्तं प्राजापत्यं शृङ्गभङ्गादिष्वनन्तरमचिकित्सितगोमरणे द्रष्टव्यः ।

इदानीमौद्धत्येन गोवधे निमित्तविशेषेण प्रायश्चित्तविशेषमाह ।

**काष्ठलोष्ठकपाषाणैः शस्त्रेणैवोद्धतो बलात् ।**
**व्यापादयति यो गां तु तस्य शुद्धिं विनिर्दिशेत् ॥२३॥**
**चरेत्सातपनं काष्ठे प्राजापत्यं तु लोष्ठके ।**
**तप्तकृच्छ्रं तु पाषाणे शस्त्रेणैवातिकृच्छ्रकम् ॥ २४ ॥**

काष्ठं दण्डातिरिक्तम् । लोष्ठं मृत्पिण्डः पाषाणः प्रसिद्धः तेनेष्टकादेरपि ग्रहणम् । शस्त्रं खड्गादि एतैर्यस्त्वौद्धत्येन बलात्कामात् गां व्यापादयति तस्य शुद्धिं प्रायश्चित्तं विनिर्दिशेत् । तदेवाह चरेत्सातपनमित्यादिना तत्र सान्तपनातिकृच्छ्रयोः स्वरूपं दशमैकादशयोर्वक्ष्यति । तप्तकृच्छ्रप्राजापत्ययोस्तु चतुर्थाष्टमयोरुक्तम् । ननु दण्डादूर्ध्वमित्यनेन काष्ठहननप्रायश्चित्तमुक्तमेव किमर्थं पुनरत्र काष्ठग्रहणमिति चेन्नैवम् । अस्यौद्धत्यविषयत्वेन तस्यानौद्धत्यविषयत्वात् । तर्ह्यस्य पूर्वोक्तान्न्यूनताऽसङ्गतेति चेत्, न दक्षिणागवीनामतिरेकेणाधिकत्वात् । नच काष्ठा-

दीना वधनिमित्तत्वाविशेषे व्रतवैषम्यमयुक्तमिति शङ्कनीयम्। वाचनिकेऽर्थे यौक्तिकोपालम्भस्यायुक्तत्वात्।

उक्तव्रतेषु दक्षिणाविशेषानाह।

**पञ्चसान्तपने गावः प्राजापत्ये तथा त्रयः।**
**तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २५ ॥**

सान्तपनप्राजापत्यं तप्तकृच्छ्रातिकृच्छ्रेषु पञ्च तिस्रोऽष्टौ त्रयोदश गावो भवन्ति देया इति शेषः।

परकीयगोहनने विशेषमाह।

**प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्।**
**तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ २६ ॥**

माहिषाद्यादिवधेप्येतत्समानमिति बोधयितु प्राणभृत्पदोपादान तेषां प्राणिना प्रमापणे मरणे तत्प्रतिरूपक तस्याः हतायाः व्यक्तेः प्रतिरूपकं वयोगुणादिभिः समान व्यक्त्यन्तर तत्स्वामिने दद्यात्। तादृशव्यक्त्यन्तरालाभे तस्य प्राणिनो देशकालाद्यनुरूप मध्यस्थकल्पित मूल्यं वा दद्यादिति मनुरब्रवीत्। अत्र पुनर्दानवचन यथा कथ चित्स्वामिसन्तोषस्यावश्यककर्त्तव्यताबोधनार्थम्।

तथाच मनुः।

यो यस्य हिंस्याद् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समिति ॥

अध्यायादावुक्तस्य रोधबन्धयोर्दोषहेतुत्वापवादस्यातिदेशमाह।

**अन्यत्राङ्कनलक्ष्याभ्यां वाहने मोचने तथा।**
**वाहने गोपनार्थे च न दुष्येद्रोधबन्धयोः ॥ २७ ॥**

यथा सायं सङ्गोपनार्थे गवा रोधबन्धयोर्न दुष्यति तथा वाहने गोयाद्यारोपणे मोचने तदवरोपणे च क्रियमाणे गोमरणेपि न दुष्यति तयोः शास्त्राभ्यनुज्ञातत्वात्। किमेतत्सर्वबलीवर्द्दसमान नेत्याह। अन्यत्रेति। वृषोत्सर्गादौ दाहादिना चक्रशूलादिस्थिरचिन्हकरणमङ्कन

तदर्थमेव गोमयादिना तात्कालिकचिन्हकरणं लक्ष्य ताभ्यामन्यत्र तद्रहि-तेषु बालीवर्देष्वित्यर्थः । तथाच लक्षितांकिताभ्यामन्येषां बाहनमोच-नयोर्मरणेपि न प्रत्यवायः तयोश्च बाहनादौ प्रत्यवाय इत्युक्तं भवति ।

पुनरपि नैमित्तिकविशेषाभिधानाय निमित्तविशेषानाह ।

**अतिदाहेतिबाहे च नासिकाभेदने तथा ।**
**नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत् ॥ २८ ॥**

रोगादिचिकित्सोपयुक्तदाहातिरिक्तोऽतिदाहः अक्लेशवाह्यभारा-धिकभारारोपणमतिवाहः रज्जुप्रवेशनार्थं छिद्रकरणं नासिकाभेदन सम्भावितमरणयोर्नदीपर्वतयोश्चारणम् । एतेषु निमित्तेषु वक्ष्यमाणप्राय-श्चित्त विनिर्दिशेत् ।

तदेवाह ।

**अतिदाहे चरेत्पादं द्वौ पादौ बाहने चरेत् ।**
**नासिक्ये पादहीनं तु चरेत्सर्वं निपातने ॥ २६ ॥**

अतिदाहातिवाहनासाभेदेष्वेकद्वित्रिपादाः प्राजापत्यस्य भवन्ति निपातने निपातनानुकूले व्यापारे नदीपर्वतयोश्चारणरूपे सर्वमुक्तलक्षणं प्राजापत्य चरेत् । यद्यपि निमित्तनैमित्तिकवाक्ययोरतिदाहादेरेव शृङ्ग-भङ्गादिवन्निमित्तता प्रतीयते न तु मरणपर्यवसायिनस्तथापि नस्तः सकलपाशैर्वा मृते पादोनमाचरेदित्यापस्तम्बेन विशेषाभिधानान्मरणपर्य-वसायिन एव निमित्ततावगन्तव्या तथाचरणाभावेप्यतिदाहादिमात्रेपि प्रायश्चित्तान्तरं कल्पनीयम् । ननु रोधस्वरूपे दुर्गनदीपर्वतादिसचारो गणित एव स कथं पुनरत्रोपदिश्यत इति चेत् । सत्यम् । तत्र नदीपर्वता-दिषु गवां स्तम्भनं निषिद्धमत्र तु तेष्वेव गवां पतनानुकूलो व्यापारः सचार एव निषिद्ध इति न पौनरुक्त्यम् । अत एवैकपाद चरेद्रोध इति चरेत्सर्वं निपातन इति च युक्तमेव प्रायश्चित्तवैलक्षण्यमिति । अति-दोह इति पाठे च वत्समनपेक्ष्य क्षत्क्षीरदोहनमतिदोहनमतिदोहस्सोऽपि वत्सोपघातनिमित्तत्वात्प्रायश्चित्तनिमित्तमिति ।

इदानीं गृहदाहेन गोदाहे प्रायश्चित्तमाह ।

**दहनात्तु विपद्येत आनड्वान् योक्त्रयन्त्रितः ।**
**उक्तं पराशरेणैव ह्येकं पादं यथाविधि ॥ ३० ॥**

यदि योक्त्रयन्त्रितोनड्वान् अनडुत्वाविवक्षया गौर्वा गृहदहनाद्विपद्येत तदा वृद्धपराशरेणोक्तमेकं कृच्छ्रपादं चरेदितिशेषः ।

तदाहापस्तम्बः ।

कान्तारेष्वथ वा दुर्गे गृहदाहे खलेषु च ।
यदि तत्र विपत्तिःस्यात्पाद एको विधीयते इति ॥

इदं त्वग्निनिर्वापणार्थमकृते प्रयत्ने द्रष्टव्यम् । कृते तु प्रयत्ने प्रायश्चित्ताभावस्य वक्ष्यमाणत्वात् ।

उक्तानि वधनिमित्तान्यविक्षेपायोपसंहरति ।

**रोधनं बन्धनं चैव भारः प्रहरणं तथा ।**
**दुर्गप्रेरणयोक्त्रं च निमित्तानि वधेषु षट् ॥ ३१ ॥**

रोधबन्धयोक्त्राणि व्याख्यातानि प्राक् भारोऽतिवाहनं प्रहरणमुक्तलक्षणो घातः दुर्गयोर्नदीपर्वतयोः प्रेरणं संचारः एतानि षडुक्तानिवधनिमित्तानि षडिति प्रचयशिष्टसंख्यानुवादो न परिसंख्या तेनातिदाहनासिकाभेदनयोरपि चकाराद्रुपसंग्रहः ।

योक्त्रयन्त्रितगोदहनप्रायश्चित्तप्रसङ्गेन स्वभावतोऽपि गोर्मरणकाले बन्धसद्भावे प्रायश्चित्तमाह ।

**बन्धे पाशसुगुप्ताङ्गो म्रियते यदि गोपशुः ।**
**भवने तस्य पापी स्यात्प्रायश्चित्तार्द्धमर्हति ॥ ३२ ॥**

यदि गोजातीयः पशुर्बन्धहेतुना पाशेन सुगुप्ताङ्गः सम्बद्धगलचरणादिः भवने गृहे स्वभावतोऽपि म्रियेत तदा तस्य भवनस्य गोपेशोर्वा स्वामी पापी स्यात्स पूर्वोक्तस्य पादप्रायश्चित्तस्यार्द्धं दिनद्वयमर्हति एतेन गोर्मरणकाले पाशमोचनमावश्यकमित्युक्तं भवति इदमित्थमेवव्या-

ख्येयं न बन्धनिमित्तमरणे कृच्छ्राद्दुःप्रायश्चित्तविषयत्वेन द्वौ पादौ बन्धने चरेदित्यनेन पौनरुक्त्यात् ।

बन्धनप्रसङ्गेन वर्ज्यान् रज्जुविशेषानाह ।

न नारिकेलेन न शाणवालैर्न
वापि मौञ्जेन न वध्रशृङ्खलैः ।
एतैस्तु गावो न निबन्धनीया
बध्वापि तिष्ठेत्परशुं गृहीत्वा ॥ ३३ ॥

नारिकेल नारिकेलवृक्षत्वङ्निर्मित शाण शणनिर्मितं बाणं बाण वृक्षत्वग्निर्मित मौञ्ज मुञ्जनिर्मित बध्रा चर्मरज्जु वल्केति पाठे पलाशादिवल्कलनिर्मितं दाम, शृङ्खल लोहादिनिर्मित एतैर्गावो न बन्धनीया यदि दामान्तरासम्भवेन कदाचिदेतैरेव बध्येरंस्तदा तज्जनितापविवारणाय तच्छेदार्थं परशुं गृहीत्वा सावधानस्तिष्ठेत् । अनेन दृढरज्जुमात्रमुपलक्ष्यते । अत एवाङ्गिराः ।

न नारिकेलेन न फलकेन न मौञ्जिना नापि च वल्कलेन ।
एतैर-नड्वाव निबन्धनीयो बध्वापि तिष्ठेत्परशु गृहीत्वति ॥
कार्पासटसरीपट्टादिफलभवन्तंतुनिर्मित फालकम् ।
तर्हि कैर्बन्धनीया इत्यत आह ।

कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम् ।

कुशकाशादिभिराशुच्छेद्यैर्दक्षिणाभिमुख गोजातीय पशु बध्नीयात् पाशवत्स्थानस्यापि निर्दोषतामाहव्यासः ।

कुशैः काशैश्च बध्नीयात्स्थाने दोषविवर्जिते इति ।

ननु कुशादिपाशेष्वपि लग्नेनाग्निना गोदाहश्चेत्कथमित्यत आह ।

पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते ॥ ३४ ॥

गृहदाहादौ कुशादिपाशान्सहसैव त्रोटयित्वा पलायमानानां गवां गलगतपाशलग्नेनाग्निना किञ्चित्त्वग्दाहे मरणेऽपि वा प्रायश्चित्त नास्ति । एवमपोदितस्यापि प्रायश्चित्तस्य क्व चित्प्रतिप्रसवमाह ।

यदि तत्र भवेत्काष्ठं प्रायश्चित्तं कथं भवेत् ।
जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात् ॥ ३५ ॥

कुशादिपाशानां भक्षणवारणाय तत्र यद्यन्तरा किञ्चित्काष्ठं बद्धं स्यात्तद्गतेनाग्निनोपद्रवबाहुल्येन यदि गौर्दह्येत म्रियेत वा तदा प्रायश्चित्तं किं स्यादित्यपेक्षायां पावनीं देवीं गायत्रीमष्टोत्तरशतवारं सहस्रवारं वा यथायथं जप्त्वा तत्र तस्मिन्निमित्ते निष्पापो भवतीति । पावमानीयामिति पाठे पवमानसूक्तमेकवारं त्रिवारं वा जप्त्वेति व्याख्येयम् ।

ये पुनर्नदीपर्वतसञ्चारे चरेत्सर्वं निपातने इत्याभ्यां निमित्तनैमित्तिके उपन्यस्ते तयोरेव विषयवैभवमाह ।

प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ।
गवाशनेषु विक्रीणन् स्वतः प्राप्नोति गोवधम् ॥ ३६ ॥

सम्भावितमरणेषु वापीकूपतडागेषु जलपानाद्यर्थं प्रेरयन् तथा यत्र प्रौढा वृक्षा छिद्यन्ते तत्र शाखापातेन सम्भावितमरणे वनेषु चारणार्थं गाः पातयन् तथा गवाशनेषु गोमांसभक्षकेषु म्लेच्छेषु विक्रीणन् स्वत एव निमित्ताद्गोवधं प्राप्नोत्यतस्तेषु निमित्तेषु गोवधप्रायश्चित्तं प्राजापत्यं चरेदिति ।

उद्वृषभयज्ञादौ गवोपघाते प्रायश्चित्तमाह ।

आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत् ।
श्रवणं हृदयं भिन्नं मग्नो वा कूपसङ्कटे ॥ ३७ ॥
कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः ।
स एव म्रियते तत्र त्रीन्पादांस्तु समाचरेत् ॥ ३८ ॥

उद्वृषभयज्ञे हि बलीवर्दमाराध्य धावयन्ति तत्रातित्वरयाघातो यदि कक्षाकुक्षिप्रदेशः कर्णौ हृदयं वा भिद्येत कूपसङ्कटे सङ्कीर्णे कूपे वा पातस्ततउद्धरणे यदि ग्रीवापादयो भङ्गः स एव तादृशएव भिन्नकक्षादिरेव चेन्म्रियते तदा त्रीन्पादान्प्राजापत्यस्य समाचरेत् । अवताडनहेतु-

कास्थिभङ्गादिनिमित्तमरणाभावेन न तन्निमित्तं प्रायश्चित्त सम्भवतीति पृथक्प्रायश्चित्तोपन्यासः । तेन तादृशस्य जीवने न किञ्चत्प्रायश्चित्त-मिति गम्यते । आधावित इति पाठेऽप्ययमेवार्थः । अवारित इति पाठे तु धावने कूपसङ्कटपातसम्भावनायामवारित इति व्याख्येयम् ।

उक्तस्य कूपपातनिमित्तप्रायश्चित्तस्य क्वचिदपवादमाह ।

**कूपखाते तटाबन्धे नदीबन्धे प्रपासु च ।**
**पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते ॥ ३९ ॥**

कूपस्य खाते कूपखाते सर्वतो विशीर्णावयवः कूपः तटेषु तीरेषु समन्तान्निर्गत्तिमुख जल बन्ध्यत इति तटाबन्धः नदीबन्धो नदीसेतुः प्रपाः गवा जलपानार्थं निर्मिता गर्त्तास्तेषु पानीयार्थं स्वत एव प्रवृत्ताना गवा मरणे न स्वामिनः प्रायश्चित्त भवति परन्तु परोक्ष निवारणे वा कृते समक्षमनिवारणे तु प्रत्यवायोऽस्त्येवेति ।

एवमपोदितस्य प्रायश्चित्तस्य क्वचित्प्रतिप्रसवमाह ।

**वेश्मद्वारे निवासेषु यो नरः खातुमिच्छति ।**
**स्वकार्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत् ॥ ४० ॥**

वेश्मनो गृहस्य द्वार प्रवेशनिर्गममार्गः निवासाः गोनिवासस्थानानि शालादीनि तेषु यः खनति तस्य स्वकार्यार्थं निस्त्याद्यर्थं गृहाङ्गणादिखातेषु गोमरणे पूर्वोक्त पादत्रय प्राश्चित्त विनिर्दिशेदिति ।

पूर्वोक्तस्य प्रायश्चित्तापवादस्य विषयवैभवमाह ।

**निशि बद्धनिरुद्धेषु सर्पव्याघ्रहतेषु च ।**
**अग्निविद्युद्विपन्नेषु प्रायश्चित्तं न विद्यते ॥ ४१ ॥**

रात्रो संरक्षणार्थं पाशादिभिर्बद्धाः शालाया निरुद्धा वा गावो यदि सर्पव्याघ्रादिभिः व्यापद्येरन् ग्रामदाहाग्निविद्युत्पाताभ्या वा म्रियेरन् तदा स्वामिनः प्रायश्चित्त न भवति ।

ननु दहनात्तु विपद्येतेत्यनेन प्रायश्चित्ताभिधानेनेदं प्रायश्चित्त-निराकरणं विरुद्धमिति चेत् सत्यम् । यत्ने कृते विपद्येतेत्यस्य सर्वशेषतया

character of the cause (towards effective action), and that which is a mere negative entity is wholly devoid of all effective action As for the point of time itself, it is the object of sensuous cognition, as it is a real entity, being quite capable of effective action, and it has been said that this point of time does not fall in with the time of the definite cognition Under the circumstances, how can the Sensuous Cognition and the Definite Cognition be regarded as having one and the same object? (and hence the latter cannot be said to have an object that has been already cognised) Or, we may grant (for the sake of argument) that both these cognitions have one and the same object, in the form of *something* without any definite form, which is capable of being in keeping with the subsequent activity of the cogniser Even then the Definite Cognition cannot lose its character of being a right form of cognition, because like a *serial cognition* it is independent of previous cognitions, in the matter of its own objective, and also because it is capable of leading the cogniser to what is cognised by itself The character of the right form of cognition being thus assured to Definite Cognition, it could be none other than 'Sensuous' in its character, because there are no such factors as that of the inferential mark and so forth, and also because it is found to follow always upon the contact of the sense-organ and the object It is true that though born directly of the object, it does not, like indeterminate cognition, follow immediately after the contact of the sense-organ with it, but that is due to the fact of the observer not remembering, at that moment, the expressive word (denoting the object), which is a necessary aid to the object and the sense-organ (in the bringing about of definite cognitions)

*Objection* "The definite cognition, following as it does upon the *remembrance* (of the expressive word), cannot but be regarded as *born of the remembrance*, and not of the object and the sense-organ, as between these two and the cognition there is the intervening factor of the remembrance"

*Reply* Well sir, does an auxiliary hide away the potentiality of an object? If it does so, then what have you to say to the case of the seed being productive of the sprout, when the seed will have its potentiality hidden away by the auxiliaries, earth and water?

*Objection* "In what way does the remembrance of the word help the object and the sense-organ, that it could be regarded as their *aid* or *auxiliary*?"

*Reply* Just as the definite cognition needs, for its production, the contact of the object and the sense-organ, so also does it need the said remembrance, and hence the help that is given by this remembrance to the object and the sense-organ is only this that while these latter are not by themselves capable of bringing about the effect (in the shape of Definite Cognition), they become so capable when they obtain the aid of the remembrance The view, that those things that do not add something to the form of the thing cannot be regarded as 'auxiliaries,' we have refuted while refuting the theory of the momentary character of all things (see above).

*Objection* "Sensuous cognition is devoid of *kalpanā*, ('definiteness' or 'determinateness,' verbal or objective), and the cognition of definiteness is determinate, and as such this cannot be a right form of knowing things"

*Question* What is this '*kalpanā*'?

"There are two kinds of *kalpanā* cognising the *qualified* object (I) Verbal, consisting of the connecting of the object with a word, and (II) objective, consisting of the connecting of the object with (other) objects"

*Reply* This is not right, as the theory does not stand the test of an examination of its alternative forms. For instance, as for the *cognition connecting with words*, (*a*) does this connect the word with the object? (*b*) or does it itself

become connected with the object? If the former, then too, we ask—(1) does it reduce the object to the character of the word? (2) or does it cognise the object as tainted by the form of the word? (3) or does it call the object by name of the word?

[Page 192] The first of these is not possible, because in Determinate cognition also the object appears exactly in the same form as in Indeterminate cognition, and also because it is found to accomplish an effective action (which could not be done by a mere word) If it were not so, then there could not be a simultaneous activity, with regard to it, of the person knowing the meaning of the word and another who does not know it

In the case of (2) it is not right to assert that the Determinate cognition cognises the object as tainted by the form of the word, because such is not found to be the case, as what actually happens is that when the object has been comprehended by means of the Indeterminate Cognition, the previously known word denoting that object is remembered at the sight of its counterpart (in the form of the object), and the well-known word being remembered qualifies the object with regard to its own denotation, and it is not that the object is cognised as tainted by the form of the word, in the same manner as the rock-crystal is tainted with the blue colour (of the object placed near it), because the word is not visible, and it is the object only that is cognised as 'such and such a thing' (by name), just as in the case of Indeterminate Cognition Nor is it that when the expressive word is remembered, there is any harm done to the form of the thing denoted by it, and hence the contact of the object and the sense-organ being present, the mere remembrance of the name cannot deprive the cognition of its 'sensuous' character, as has been well said 'the name, even though remembered, does not set aside the sensuousness of the object to which the name belongs, because the name is absolutely indifferent, and not capable of concealing the form or character of an object'

(3) Nor can we believe that the cognition names or mentions the object as connected with the word Because it is the intelligent Self which, through its power of recalling impressions, remembers the expressive word he had come to know at the time of the convention determining its meaning, and then names or speaks of the object by means of that word—e g, 'this is a jar,' this cannot be done by the Cognition which, being unintelligent, is devoid of the faculty of recalling impressions Hence it is proved that the Cognition cannot connect the object with the word

(*b*) Nor does the object by itself become connected with the word, because the Cognition as well as the form that is inseparable from it, being momentary, is each independent by itself, and hence no word being capable of belonging to a number of these in common, they are incapable of any convention, and hence they cannot become connected with words, and also because the word which denotes the *object* cannot be used to speak of either the *object* or the *cognition of that object* which is something wholly different from the *object*

*Objection* "Determinate cognition has its object such as is connected with words And the object becoming connected with the word comes to be spoken of by means of that word, and it is with reference to this that we have the conventional denotation of the word This convention too pertains to that which is non-momentary in its character, and is common among many things, and neither the 'specific individuality,' nor the cognition of the specific individuality, nor the form of the cognition, is either common or non momentary As for the externality of the form of cognition, that too is something distinct from the form of the cognition, and is something wholly uncommon or specific Then as for Generality there is no such real entity, as that has been shown to be incapable of standing the test of examination Consequently, there being no comprehension of difference among the particular

forms of the cognition, each of which in its external character is imposed upon it by the determinate cognitions, and singleness also being imposed upon it through the exclusion of all that is other than that cognition,—there follows the convention with regard to the word This being proved by proper evidence cannot be denied Thus then, the determinate cognition, functioning towards the unreal object connected with the word, brings about the cognizance of an object that has no existence, and this is what is meant by '*kalpanā* or '*jnāna*,' 'cognition' As has been well said 'In any *kalpanā* the form, that appears as one, coming as it were from elsewhere, and being something excluded from other things,—has no real essence (or existence) because it does not form a factor in actual (sensuous) cognition "

**[Page 193]** *Reply* —If the nature of *kalpanā* lies in the comprehending of something qualified by the generality, there being no such real entity as generality by itself,—then it would consist in something having for its object that which has no existence, and not in the comprehending of something connected with word Under the circumstances, if we succeed in proving the existence of generality, then, even though Determinate Cognition might be comprehensive of objects connected with words, it could not but be regarded as 'Sensuous,' inasmuch as it is produced by the contact of the object with the sense-organ, specially as that which contains a direct and distinct manifestation is 'Sensuous,'—as we find in the case of Indeterminate Cognition, and Determinate Cognition is one that contains a direct and distinct manifestation Cognitions are indirect whenever they are not produced by the contact of the object with the sense organs, as we find in the case of inferential cognition, and the fact of being produced by such contact of the object with the sense organ, which is the contradictory of the fact of not being produced by such contact, is distinctly cognisable in Indeterminate Cognition, and hence your theory would involve the 'contradiction of the *vyāpaka*' (*i e*, in

determinate cognition we find the character of *being produced by sense-contact,* and this character is contradictory to the character *of not being produced by sense-contact*, this latter is always accompanied by *indirectness*, hence the attributing of *indirectness,* which would necessarily imply the presence of the character of *not being born of sense-contact,* to Determinate Cognition would involve a contradiction)

*Objection* "We can bring forward a similar argument in support of the opposite view That cognition which is preceded by remembrance is non-sensuous,—as inferential cognition, Determinate cognition is preceded by remembrance, (hence it is non-sensuous)"

*Reply* If *sensuousness* is ever perceived, it is only in determinate Cognitions, and hence it cannot be denied, as all denial is preceded by the previous *presence* of (that which is denied)

*Objection* "*Sensuousness* is cognised in Indeterminate cognitions by an inference based upon the fact of the appearance of Indeterminate Cognitions being invariably concomitant with the contact of the object with the sense-organs"

*Reply* If you once admit the truth of the inference of *sensuousness* from invariable concomitance (of sense-contact), then (as this concomitance would be present in the case of Determinate Cognitions also) the Inference whereby you seek to negative the sensuousness of these cognitions would be operaing against that former inference, and as such would be negatived by that same inference, just like the proposition 'sound is not perceived by the ear"

Thus then *kalpanā* cannot be a cognition consisting in the *connecting of word*

II—Nor can *kalpanā* be the cognition of a qualified object, and consist in the *connection of objects*, as the qualification, the qualified, and the relationship between these two of the differen-

tium and the differentiated,—are all real (and as such cannot be called '*Kalpanā*' which by its very nature, must be unreal)

*Objection* "A Cognition consists in the comprehension of an object, and it appears from sense-contact, exactly in accordance with the character of the object as it presents itself at first sight, and it does not operate after any deliberation A determinate cognition however is deliberate in its character, involving many such deliberations,—'this is the qualification,—that the qualified,—such and such is the relationship between them,—the ways of men are such that they speak of the *man with the stick*, and not of *the stick with the man*' and so forth, and the observer having considered all these facts collates them and then arrives at the determinate cognition that 'this is the man with a stick' If the qualified character of the object were real, then at the very first sight it would be cognised as such And as it is not so cognised at first sight, its qualified character cannot be regarded as real, it must be unreal and adventitious Hence we conclude that the cognition of the qualified character of an object is *Kalpanā*"

*Reply* Ill argued has this been by you, my good Sir! It is the intelligent self who, having comprehended each one of the qualification etc, and thought over them, comes to cognise, by his sense-organs, the qualified character of the object, and this is not done by the Cognition, which is unintelligent and as such incapable of thinking over the qualifications, specially as it does not operate intermittently As for the object, it is always *qualified*, on account of its connection with qualifications, and the fact of its not being perceived as qualified by the sense-organ is due to the absence of the necessary aids in the form of the comprehension of the qualifications, and as soon as these qualifications are comprehended, it at once becomes cognised as qualified Thus then, even in presence of the indubitable fact of the qualified cognition being born of sense-contact, if sensuous character be denied to it, merely for the fault of being qualified,—then such

a reasoning is too clever to be refuted ! So we close this discussion here

[Page 194] The author proceeds to describe the causes of the sensuous cognition of Colour &c —*Ruparasa etc, etc* The word '*anekadravyam*' means that *substance* which inheres in, is made up of, many component parts The '*svagata viçesha*' is the *character of taste* in Taste, *the character of odour* in Odour, *the character of touch* in Touch, and so forth From the contact of their substrates with the cognitive sense-organs, appears a distinctive cognition brought about by each one of the sense-organs—*viz* the cognition of colour is brought about by the Eye, that of taste by the Tongue, that of odour by the Nose, and that of touch by the Skin As the specific character of each is also a cause of perception, there is a restriction as to the operation of the sense-organs, otherwise, if there were no difference, there would be a confusion in the sense-operations As for sound, which inheres in the Ear, its perception is brought about by the 'contact of three'—*viz* of the self, the mind and the sense-organ, as for the contact of the object (sound) with the organ, this is implied in the qualification 'which inheres in the Ear' (sound inhering in the ear, there is no need of contact), it is perceived by that same organ'—*i e* by the Ear.

*Number etc down to Action, when inhering in perceptible substances, are perceived by the Eye and the organ of Touch*

*Objection* "We cannot allow that Action is perceptible, as when a substance moves, we do not perceive anything else except certain conjunctions and disjunctions (and these are only Qualities, while Action is a distinct category) As for the notion 'it moves,' it pertains to an act inferred from the said conjunctions and disjunctions"

*Reply* In this argument there is nothing to recommend itself If Action were imperceptible, and only to be inferred from conjunctions and disjunctions, then, inasmuch as these

conjunctions and disjunctions always belong to two substrates (*f i* the moving object and the ground it moves upon), the action (of moving) could be inferred (and believed) to exsit in the other substrate (ground) also As a matter of fact, however, we find that when the monkey moves from the tree to its root, and again from the root to the top, we have no such notion as that 'the tree moves,' though the tree also is the substrate of the conjunctions and disjunctions (of the monkey)

*Objection* · "The non-inference of Action in the tree is due to the fact that in the case in question the monkey has certain other conjunctions also, as for instance those with the points of space and the like, and these other conjunctions are not known to be bought about by any action *of the tree*"

*Reply* If such be the case then, for the sake of these other conjunctions of the monkey with the points in space, we might assume another action of the monkey, in any case the assumption of action in the tree would not be set aside There is a general law to the effect that the substratum, of the cause (action) is the same as the substratum of the effect (conjunction and disjunction) and if this law were rejected in one instance, how could we believe in it in other instances ?

*Objection* "When we have assumed the action of the monkey (on the strength of inference from conjunctions and disjunctions), that is found enough to explain all such conjunctions of the monkey as those with the tree and with the points in space, and as such there is no ground for assuming the action of both (the monkey and the tree)"

*Reply* It is not so, as all that is needed for inference is that whenever the *pervaded* (or less extensive) *mark* is perceived, it points to the presence of its *pervasive* (more extensive) concomitant And in what way could such an inference be disturbed, as Apparent Inconsistency is, by other explanations (of the premisses) ? Nor is the Inference an intelligent being like man, that it should operate with due regard to

certain purposes in view If you seek to assume the conjunctions and disjunctions of any one point in space as the cause of the inference of action,—then we say that such an assumption cannot be made, because of the imperceptibility of the conjunctions and disjunctions of space which is beyond the reach of the senses If, then, the action be sought to be inferred from the series of conjunctions and disjunctions of a certain portion of the Earth-globe, then the action of the flying bird would be absolutely inexplicable and incomprehensible. If the inferential mark in this case were sought to be found in the conjunctions and disjunctions of the light overspreading the atmosphere,—then there could be no basis or explanation for such notions as 'my arm is throbbing,' 'my eyebrow is moving',—notions born of the sense of touch as controlled by the invisible internal organ,—actions which appear, in dense darkness, by reason of the action of disordered wind in the body, how too could you explain the notion of moving that we have, in an intensely dark and cloudy night, with regard to the lightning flash which lasts for a moment (and is not perceived as having any conjunctions or disjunctions)?

The perception of *buddhi* and other qualities belonging to the self is due to its inherence in something in conjunction with the sense-organ As for *sattā*, 'being,' *dravyatva* and other such (abstract) qualities, these are perceived by the same sense-organ by which their substrates are perceived

(1) The perception of Substance is due to Conjunction (direct contact of the sense-organ), (2) that of Quality &c, is due to their inherence in something in direct contact with the sense-organs, (3) that of '*gunatva*,' 'the character of quality' is due to their inherence in something inhering in that which is in direct contact with the sense-organs, (4) that of sound is due to inherence (in the sense-organ), (5) that of '*çabdatva*' is due to its inherence in that which inheres in the sense-organ, (6) and that of negation is due to its qualifying that which is related to the sense-organs, these are the six kinds of

'sense-contact' There are certain perceptions of negation,—such for instance as (*a*) the perception of the absence of taste &c, in colour, which is due to its qualifying that which inheres in a thing in contact with the sense-organ, (*b*) that of the negation of '*rasatva*' &c, in '*rūpatva*,' which is due to its qualifying the qualification existing in something inhering in that which is in contact, (*c*) that of the absence of the letter '*kha*' in the letter '*ka*,' which is due to its qualifying that which inheres in the sense-organ, and (*d*) that of the absence of '*khatva*' in '*katva*,' which is due to its qualifying that which inheres in something inhering in the sense-organs All these sources of perception however are included in the 'qualifying of that which is related to the sense-organ' (which has been mentioned as the cause of the perception of negation in general)

Some people regard either Conjunction only or Inherence only as the cause of perception, and they deny the intervening relationships mentioned above

The nature of things is such that they are perceived only through contact with something else (the sense-organs), as for the possibility of confusion and uncertainty of perception, it is obviated by the restriction or limitation due to the proximity of their substratum

*Recapitulation* Such is the perception of us, who are not *Yogis* The author proceeds to describe the 'sensuous cognition' of the *Yogis* *As for those that differ from us &c*, by '*yoga*' here we mean 'ecstacy,' and it is of two kinds the Conscious or Concrete and the Unconscious or Abstract The 'concrete ecstacy' consists in the contact of the mind, which has been controlled and concentrated upon a portion of the self, with the self in whom there is a desire for knowledge, and the 'Abstract ecstacy' consists in the contact without any end in view, of the controlled mind with a part of the self arising from 'non-rising' or undisturbed state of the mind

Of these two, the latter belongs to the seeker after deliverance, and serving the purpose of dissipating ignorance, comes to be fully developed in the last life of the *jīva* upon earth, it does not add any *dharma*, because of the absence of the necessary accessory cause in the shape of a longing or desire (for either acquiring *dharma* or avoiding *adharma*), nor does it tend torwards any external object, being centered in the self alone, the former (concrete) ecstacy on the other hand, is always aided by a certain desire, and as such brings about *dharma*, and it always illuminates that external object with regard to which there is in the mind a desire to know the truth These are the two kinds of ecstacy or yoga, and those who have once experienced this ecstacy, are called '*yogis*' even when they have fallen of from that condition, because of the capability in them (of returning to the same condition).

Inasmuch as the yogis have no perception of supersensuous objects, until the covering of impurities have been removed from thier minds, the author adds that while in the state of ecstacy, by means of their minds helped by *dharma* born of *yoga*, they obtain perfectly true conceptions with regard to their own selves as well as to those of others, and also with regard to *akīça* (space), time, air, atoms, minds, the qualities belonging to the last two, and inherence By ourselves the self is always cognised in the character of the *doer* and the *possessor* as expressed in the notions of 'I' and 'mine', both these characters however are due to the connection of the self with such limitations as those of the body &c, and they are not natural to the self, whereby both these notions are called 'false perception,' in all systems of philosophy, simply because they contain conceptions contrary to the true state of things The natural form of the self is perceived by the *yogis* alone When the *yogi* makes up his mind to know the true character of the self as taught in the *Vedāntas* (*Upanishats*), he withdraws his mind from the external sense-organs, and fixing it upon a definite part of the self he continues one-pointedly to practise

meditation upon the self, and then there coming into manifestation such of his *dharma* as tends to the accomplishment of his true knowledge, there clearly appears before his mind the real self free from all impositions of the 'I' or the 'mine' When however he practises meditation with a view to learn the truth with regard to other selves or with the regard to space, time &c then there comes about a *dharma* of considerable force helping his acquisition of true knowledge with regard to those things, and by the force of this, his internal organ shooting out of his external body, comes into contact with those other selves &c, and then brings about the due cognition of these through contact, of their qualities through the inherence of these in something in contact with the internal organ, of the *gunatva* of the qualities through inherence in something inhereing in that which is in direct contact, and of the absence of Inherence through the qualification of that which is related to the internal organ Even in the case of the sciences and the arts we find that even when there is no proper knowledge of these, when due attention is paid and the mind fixed in constant meditation upon those subjects, the knowledge comes in due course

These arguments have elsewhere been put in the form of the following inferential reasonings —(1) The collective force of constant contemplation of the self, *ākaça* and such things, is the cause of the true knowledge of these,—because it is a particular kind of practice,—like the practice of learning the sciences and arts, and (2) the varying grades of the intellect (involved in the practice) have a certain limit beyond which it does not go,—because they are varying grades,—like the varying grades of dimension [And the true knowledge of self &c would be those limits]

*Objection* "In the case of water that is being heated we find that there are varying grades of heat, and yet we never find it ever reaching the highest limit of heat by being turned into fire itself (and from this it is clear that the mere presence of varying grades does not necessitate the reaching of the

निश्चयं चाप्यगत्वैव गङ्गावतरणे ततः ।
व्याधिना [1]नरशार्दूल कालस्य वशमीयिवान् ॥ ७ ॥
[2]इन्द्रलोकं गतो राजा [3]सोऽर्जितं पुण्यकर्मणा ।
राज्यं भगीरथे पुत्रे निक्षिप्य पुरुषर्षभः ॥ ८ ॥
[4]भगीरथोऽथराजाभूद्धार्मिको रघुनन्दन ।
अनपत्यः सदा काङ्क्षन् सदृशीमात्मनः प्रजाम् ॥९॥
[5]सत्तपो महदातस्थे गोकर्णेऽनुपमद्युतिः ।
ऊर्ध्वबाहुः पञ्चतपा ग्रीष्मे भूत्वा यतव्रतः ॥ १० ॥
जलशायी च हेमन्ते वर्षास्वभ्रावकाशिकः ।
शीर्णपर्णकृताहारो यतात्मा यतमैथुनः ॥ ११ ॥

---

the following Sl B 5 9 दिलीपस्तु महातेजा. श्रुत्वापैतामहवध । दु खोपहतया बुध्या निश्चय नाध्यगच्छत ॥ कथ गगावतरण कथ तेषा जलक्रिया । तारयेयं कथ चैतानिति चिन्तापरोऽभवत ॥ तस्यचिन्तयतोनित्य धर्म्मेण विदितात्मन । पुत्रो भगीरथो नाम जज्ञेपरमधार्म्मिक ॥ दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान । त्रिंशद्वर्ष सहस्राणि राजा राज्यमकारयत ॥ अगत्वानिश्चय राजा तषामुद्धरण प्रति । (a)व्याधिना नरशार्दूल कालधर्म्ममुपेयिवान् ॥ (a) V आधिना etc Before Sl 6 of our text P reads the lines दिलीपोऽपि महातेजा श्रुत्वा पैतामह वच । दु खोपहतया बुध्या नाध्यगच्छत सनिश्चय । कथ गगावतरण कथ तेषा जलक्रिया । तारयेय कय बन्धूनितिचिन्तापरोऽभवत ॥ तस्यचिन्तयतो नित्य धर्म्मेण विदितात्मनः । पुत्रो भगीरथो नाम जज्ञेपरमधार्म्मिक ॥ 1 P नरशार्द्दूल etc 2 For this Sl B 10 इन्द्रलोकगतो राजा स्वार्जितेनैव कर्म्मणा । राज्ये भगीरथपुत्रमभिषिच्यनरर्षभ । 3 P स्वार्जित etc 4, For this Sl B 11 भगीरथस्तुराजर्षिर्धार्म्मिको रघुनन्दन । अनपत्यो महाराज प्रजाकामस्सचाप्रजः ॥ 5 For this, and the following 2 Slokas, B 12-14 मन्त्रिष्वाधाय तद्राज्य गंगावतरणे रतः । तपोदीर्घसमातिष्ठद्गोकर्णे रघुनन्दन ॥ ऊर्ध्वबाहु पंचतपा मासाहारो जितेन्द्रियः । तस्य वर्षसहस्राणि घोरे तपसि तिष्ठत ॥

तस्य वर्षसहस्रान्ते तपसोग्रेणतोषितः ।
आजगामाश्रमं ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ १२ ॥
[1]वृतः सुरगणैः श्रीमान् विमानवरमास्थितः ।
स एनमाभाष्य तदा तप्यमानं ततोऽब्रवीत् ॥ १३ ॥
[2]भगीरथ महाभाग प्रीतस्तेऽहं नरेश्वर ।
[3]गृहाण वरमस्मत्तः काङ्क्षितं पृथिवीपते ॥ १४ ॥
[4]तमुवाच ततो दृष्ट्वा ब्रह्माणं स्वयमागतम् ।
भगीरथो महातेजाः कृताञ्जलिरिदं वचः ॥ १५ ॥
यदि मे [5]भगवान् प्रीतो यद्यस्ति [6]तपसः फलम् ।
[7]ततः सगरपुत्रास्ते मत्तः सलिलमाप्नुयुः ॥ १६ ॥
[8]गङ्गाजलप्लुते तस्मिन् देहभस्मनि पाविताः ।
गच्छेयुरमलाः स्वर्गं सर्वे नः प्रपितामहाः ॥ १७ ॥
[9]इयञ्च सन्ततिर्देव [10]नच्छिद्येत कथञ्चन ।
इक्ष्वाकूणां कुले गच्छेदेषमे[11]ऽस्तु वरोवर ॥ १८ ॥

अभीतानि महाबाहो तस्यराज्ञामहात्मन. । सुप्रीतो भगवान् ब्रह्मा प्रजानाप्रभुरीश्वर ॥ 1 For this SL B 15 तत· सुरगणै सार्द्धमुपागम्य पितामहः । भगीरथ महात्मान तप्यमानमथाब्रवीत ॥ 2 For this Sl B 16 भगीरथ महाराज प्रीतस्तेऽह जनाधिप । तपसा च सुतप्तेन वरवरय सुव्रत ॥ 3, G 14 गृहाणत्ववरमत्त· etc but P agrees with our text 4 For this Sl B, 17 तमुवाच महातेजाः सर्वलोकपितामह । भगीरथो महाबाहु कृताञ्जलिपुट·स्थित. ॥ 5 V & S भगवन् etc 6 G 16 तपसोबलं. 7 B. 18 सगरस्यात्मजा· सर्वे(a)मत्त सलिलमाप्नुयु· ॥ (a) V गंगासलिल etc 8 For this Sl B 19 गगाया सलिलक्लिन्ने भस्मन्येषा महात्मना । स्वर्गं गच्छेयुरत्यन्त सर्वे (a) च प्रपितामहाः ॥ (a) V ते &c 9 For this Sl B 20 (a) देव याचेह सतत्यै नावसीदेत् कुल च नः । इक्ष्वाकूणा कुलेदेव एष मेऽस्तुवरः पर ॥ (a) V, यया च सततिर्देव &c, 10 G 18 नावसीद &c P नावसीदेत् etc, 11. G 18 प्रवरोवरः, P · स्तु परोवर. ।

णमित्युक्त ऽपि साधकतममिति गम्यते तदेतत् तमग्रहणं ज्ञापकमन्यत्र तमग्रहणेन विना प्रकर्षो न लभ्यते । तेनाधारोऽधिकरण इत्यनेन मुख्यामुख्ययोरधिकरणत्वं सिद्धम् । तिलेषु तैलम् । गङ्गायां घोषः । साधकतमस्याविवक्षायां स्वातन्त्र्याद्धनुर्विध्यतीति भवति । पुंल्लिङ्गनिर्देशः किमर्थः । परिक्रयणमित्यनवकाशया सम्प्रदानसञ्ज्ञया बाधा मा भूत् । शतेन परिक्रीतः । वचनात् साऽपि भवति । शताय परिक्रीतः । दिवः कर्म इत्यत्र च समावेशो यथा स्यात् । अक्षैर्दीव्यति ॥

## दिवः कर्म ॥ ११४ ॥

दिवेः साधकतमं कारकं कर्मसञ्ज्ञं भवति । अक्षान् दीव्यति । शलाकां दीव्यति । नपा निर्देशात् करणत्वमपि ॥

## आधारो ऽधिकरणः ॥ ११५ ॥

आध्रियते ऽस्मिन् क्रियेत्याधारः । इदमेव निपातनमधिकरणे घञः । आधारो यस्तत् कारकमधिकरणसञ्ज्ञं भवति । यद्येवं कर्तृकर्मणोरधिकरणसंज्ञा प्राप्ता तदाश्रितत्वात् क्रियायाः । एवं तर्हि कर्तृकर्मणोः क्रियाश्रययोर्धारणादाधारोऽभिप्रेतः । पूर्वं तमग्रहणेन ज्ञापितं गौणस्याप्याधारस्याधिकरणत्वम् । कर्तृकर्मणोः सत्यपि क्रियाधारत्वेऽनवकाशत्वात् कर्तृकर्मसञ्ज्ञे भविष्यतः । भेदविवक्षायामधिकरणत्वमपि । अशनक्रिया देवदत्ते वर्तते । विक्लेदनं तण्डुलेषु । औपश्लेषिको वैषयिकोऽभिव्यापक इत्याधारस्त्रिविधः प्रोक्तः । कटाकाशतिलेषु च । औपश्लेषिकः । कटे आस्ते । स्थाल्यां पचति । वैषयिकः । आकाशे

शकुनयः । गङ्गायां घोषः । गुरौ वसति । यदधीना यस्य स्थितिः स तस्याधारोऽभिव्यापको विभागाप्रतीतेः । तिलेषु तैलम् । दधनि सर्पिः । अधिकरणप्रदेशा ईबधिकरण इत्येवमादयः ॥

## कर्मैवाधिशीङ्स्थासः ॥ ११६ ॥

अधिपूर्वाणां शीङ् स्था आस् इत्येषामाधारो यस्तत् कारकं कर्मसञ्ज्ञमेव भवति । ग्राममधिशेते । पर्वतमधितिष्ठति । प्रासादमध्यास्ते । एवकारः पुंल्लिङ्गाधिकरणसञ्ज्ञासमावेशनिवृत्त्यर्थः । कर्मप्रदेशाः कर्मणीवित्येवमादयः ॥

## वसोऽनूपाध्याङः ॥ ११७ ॥

अनु उप अधि आङ् इत्येवम्पूर्वस्य वसतेराधारो यस्तत् कारकं कर्मसंज्ञं भवति । ग्राममनुवसति । गिरिमुपवसति । गृहमधिवसति । वनमावसति । इह कथं ग्रामे उपवसति । भोजननिवृत्तिं करोतीत्यर्थः । अत्रापि त्रिरात्रादेराधारस्य कर्मत्वं प्रतीयते ॥

## अभिनिविशश्च ॥ ११८ ॥

अभिनि इत्येवंपूर्वस्य विशतेराधारो यस्तत् कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते । गेहमभिनिविशते । चकारात् कचिदधिकरणसंज्ञाऽपि भवति । या या संज्ञा यस्मिन्नभिनिविशते । अर्थेष्वभिनिविष्टः । कल्याणेऽभिनिवेशः ॥

## कर्त्राप्यम् ॥ ११९ ॥

कर्त्रा क्रियया यदाप्यं तत् कारकं कर्मसंज्ञं भवति ।

कर्तृग्रहणादाप्यग्रहणसामर्थ्याद्वा क्रियां लभते । तत्र कर्म ॥

प्राप्यं विषयभूतञ्च निर्वर्त्यं विक्रियात्मकम् ।
कर्तुश्च क्रियया व्याप्यमीप्सितानीप्सितेतरत् ॥

आप्यत्वसामान्यं सर्वत्र विद्यते । प्राप्यम् । ग्रामं गच्छति । आदित्यं पश्यति । विषयभूतम् । जैनेन्द्रमधीते । हिमवन्तं शृणोति । निर्वर्त्यम् । घटं करोति । ओदनं पचति । विक्रियात्मकम् । काष्ठानि दहति । घटं भिनत्ति । ईप्सितम् । गुडं भक्षयति । ओदनं भुङ्क्ते । अनीप्सितम् । ग्रामं गच्छन् व्याघ्रं पश्यति । कण्टकान्मृद्नाति । अनुभयम् । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । कर्त्रेति किम् । माषेष्वश्वं बध्नाति । अश्वेन कर्मणा भक्षणक्रियया माषाणामाप्यानां कर्मसंज्ञा मा भूत् । अथ सर्वाणि कारकाणि कर्त्राप्यन्त इति कर्मसंज्ञा प्राप्नोति । नैष दोषः । सर्वेषु कारकेष्वाप्येषु आप्यग्रहणसामर्थ्यादाप्यतमे संप्रत्ययः । तेन करणादिषु न भवति । पयसा ओदनं भुङ्क्ते । इह कथं कर्मत्वं गेहं प्रविशतीति । आधारस्याविवक्षया ॥

अकथितञ्च ॥ १२० ॥

अकथितमसङ्कीर्तितम् । अपादानादिभिर्विशेषकारकादिभिरकथितञ्च यत् कारकं तत् कर्मसंज्ञं भवति । अकथितमप्रधानमिति गृह्यमाणे इह देवदत्तात् गां याचत इत्यप्रधानतयाऽपादानसंज्ञा कर्मसंज्ञया बाध्येत ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ॥

हरतिकृषजयत्यादयो द्विकर्मका उपलभ्यन्ते । तेषां कथं द्विकर्मकत्वं प्रधानाप्रधानकर्मणोः सामान्येनाप्यत्वात् । अजां नयति ग्रामम् । भारं वहति ग्रामम् । भारं हरति ग्रामम् । शाखां कर्षति ग्रामम् । देवदत्तो जिनदत्तं शतं जयति । देवदत्तो ग्रामं शतं दण्डयति । अयं तु विशेषः ।

प्रधानकर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

नीयते अजा ग्रामम् । उह्यते भारो ग्रामम् । ह्रियते भारो ग्रामम् । कृष्यते शाखा ग्रामम् । जीयते जिनदत्तः शतम् । दण्ड्यते जिनदत्तः शतम् । अप्रधाने कर्मणि दुहादीनाम् । दुह्यते गौः पयः । याच्यते माणवको गाम् । अवरुध्यते गां व्रजः । पृच्छ्यते आचार्यो धर्मम् । भिक्ष्यते देवदत्तो गाम् । अवचीयते वृक्षः फलानि । उच्यते माणवको धर्मम् । शिष्यते माणवको धर्मम् । ण्यन्ते कर्तुश्च कर्मण इति उत्तरसूत्रेणाण्यन्तावस्थायां यः कर्ता ण्यन्तावस्थायां कर्मतामापन्नः प्रयोज्यस्तस्याभिधाने लादीनाहुः । बोध्यते माणवकः शास्त्रम् । गम्यते माणवको ग्रामम् । भोज्यते माणवक ओदनम् । आस्यते माणवको मासम् । अध्याप्यते माणवकौ जैनेन्द्रम् । ननु ण्यन्तेषु धुषु ण्यन्तवाच्यया क्रियया प्रेषणाध्येषणलक्षणया यदाप्यते तत् प्रधानं कर्म । अवयवक्रियया यदाप्यतेऽप्रधानम् । एवं च सति प्रधानकर्मण्यभिधेये लादीनाहुरित्यनेनैव सिद्धत्वादनर्थकमिदं ण्यन्ते कर्तुश्च कर्मण इति । नानर्थकं समुच्चयार्थमेतत् प्रधाने कर्मणि लादयो भवन्त्यप्रधाने च । तेन बोध्यते माणवकं धर्मः । भोज्यते माणवकमोदनः । अध्याप्यते माणवकं

जैनेन्द्रः । अकर्मणां गत्यर्थानां च प्रधान एव कर्मणि, लादयः । आस्यते माणवको मासम् । आस्यते माणवको गोदोहम् । गम्यते माणवको ग्रामम् । प्राप्यते माणवको ग्रामम् ॥

## ज्ञागम्यद्यर्थधेरणि कर्ता णौ ॥ १२१ ॥

ज्ञार्थानां गम्यर्थानामद्यर्थानां धोनाञ्च धूनामण्यन्तानां यः कर्ता स णौ सति कर्मसंज्ञो भवति । ज्ञार्थानाम् । जानाति माणवको धर्मम् । ज्ञापयति माणवकं धर्मम् । बुध्यते माणवको धर्मम् । बोधयति माणवकं धर्मम् । पश्यति माणवको ग्रामम् । दर्शयति माणवकं ग्रामम् । गम्यर्थानाम् । गच्छति माणवको ग्रामम् । गमयति माणवकं ग्रामम् । याति माणवको ग्रामम् । यापयति माणवकं ग्रामम् । अद्यर्थानाम् । भुङ्क्ते ओदनं माणवकः । भोजयति माणकमोदनम् । अश्नाति माणवक ओदनम् । आशयति माणवकमोदनम् । धीनाम् । आस्ते माणवकः । आसयति माणवकम् । शेते माणवकः । शाययति माणवकम् । अत्रापि पूर्ववणिजन्तवाच्यया क्रियया प्रेषणाध्येषणलक्षणया आप्यत्वात् कर्मसंज्ञा सिद्धा । यद्यपि स्वातंत्र्यमाप्यत्वञ्चास्ति तथापि कर्मैवेत्यवधारणात् कर्तृसंज्ञा न भवतीति । एवं सिद्धे नियमार्थमिदं तेषामेवाणौ कर्ता ण्यन्ते कर्मसंज्ञो भवति नान्येषाम् । पचत्योदनं देवदत्तः । पाचयत्योदनं देवदत्तेन । अणि कर्तेति किम् । गमयति देवदत्तो जिनदत्तम् । तमन्यः प्रयुङ्क्ते । गमयति देवदत्तेन जिनदत्तम् । नयत्यादयः प्रापणार्था न गत्यर्थास्तेनेह कर्मसंज्ञा न भवति । अजां नयति देवदत्तः । नाय-

यति देवदत्तेन। भारं वहति वाहीकः। वाहयति वाहीकेन। यदा गत्यर्थताऽसंभवस्तदा भवति कर्मसंज्ञा। वहन्ति बलीवर्दा यवान्। वाहयन्ति बलीवर्दान् यवान्। प्रवहत्युदकं देवदत्तः। प्रवाहयत्युदकं देवदत्तम्॥ अद्यर्थेषु अदिखाद्योः प्रतिषेधो वक्तव्यः॥*॥ अत्ति देवदत्तः। आदयति देवदत्तेन। खादयति देवदत्तः। खादयति देवदत्तेन॥ अथवा सर्वमद्यर्थकार्यमदेर्न भवति इति वक्तव्यमधिकरणे तद्विधिं मुक्त्वा॥ * ॥ आदयते माणवकेन। चल्यद्यर्थादिति ममापि न भवति। भक्षिरहिंसार्थः कर्मसंज्ञो न भवति इति वक्तव्यम्। भक्षयति पिण्डीं देवदत्तः। भक्षयति पिण्डीं देवदत्तेन। अहिंसार्थस्येति किम्। भक्षयति बलीवर्दो यवम्। भक्षयति बलीवर्दं यवम्। अत्र हिंसाऽस्ति। वनस्पतिकायानां प्राणित्वात्। प्रकृतेन कर्मणा अकर्मका इह गृह्यन्ते तेन णिग्रहणे कालादिकर्मणः कर्ता कर्मसंज्ञो भवति। आस्ते मासं देवदत्तः। आसयति मासं देवदत्तम्। आस्ते गोदोहं देवदत्तः। आसयति गोदोहं देवदत्तम्। आस्ते क्रोशं देवदत्तः। आसयति क्रोशं देवदत्तम्॥

## शब्दे च॥ १२२॥

शब्दे कर्मभावेन क्रियाभावेन च यो धुर्वर्तते तस्याण्यन्तस्य कर्ता णौ कर्मसंज्ञो भवति। शब्दकर्मणः। शृणोति देवदत्तः शब्दम्। श्रावयति देवदत्तं शब्दम्। उपलभते देवदत्तः शब्दम्। उपलम्भयति देवदत्तं शब्दम्। अधीते माणवकस्तर्कम्। अध्यापयति माणवकं तर्कम्। शब्दक्रियस्य। जल्पति देवदत्तः। जल्पति देवदत्तम्। विलपति

देवदत्तः । विलापयति देवदत्तम् । चशब्दो ऽनुक्तसमुच्चयार्थः । तेन ह्वयत्यादिषु न भवति । ह्वयति देवदत्तः । ह्वापयति देवदत्तेन । क्रन्दति देवदत्तः । क्रन्दयति देवदत्तेन ।

## हृक्रोर्न वा ॥ १२३ ॥

हृ कृ इत्येतयोरण्यन्तयोर्यः कर्ता स ण्यन्तयोर्न वा कर्मसंज्ञो भवति । नवेति निर्देशात् प्राप्ते चाप्राप्ते च विकल्पः । प्राप्ते । अभ्यवहरति देवदत्तः । अभ्यवहारयति देवदत्तं देवदत्तेनेति वा । विहरति देवदत्तः । विहारयति देवदत्तं देवदत्तेनेति वा । विकुर्वते सैन्धवाः । विकारयन्ति सैन्धवान् सैन्धवैरिति वा । अध्यर्थगम्यर्थे धिसंज्ञायां पूर्वेण प्राप्तिः । अप्राप्ते । हरति माणवको भारम् । हारयति माणवकं माणवकेन वा । करोति कटं देवदत्तः । कारयति कटं देवदत्तं देवदत्तेन वा । चकारोऽनुक्तसमुच्चयार्थोऽनुवर्तते । तेन अभिवदिदृश्योर्दविषये विकल्पः । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तं देवदत्तेन वा । पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् भृत्यैरिति वा । णिच इति दविधिः ।

## स्वतन्त्रः कर्ता ॥ १२४ ॥

स्वतन्त्र आत्मप्रधानः । क्रियासिद्धौ स्वतन्त्रो योऽर्थस्तत् कारकं कर्तृसंज्ञो भवति । देवदत्तः पचति । देवदत्तेन कृतम् । प्रेषितः करोतीत्यत्रापि स्वातन्त्र्यं गम्यते । अनिच्छायामकरणात् । इह स्थाली पचतीति स्वातन्त्र्यं विवक्षितम् ॥

## तद्योजको हेतुः ॥ १२५ ॥

योजकः प्रेरकस्तस्य स्वतन्त्रस्य योजको योऽर्थस्तत्कारकं हेतुसंज्ञं भवति । पुल्लिङ्गकर्तृसंज्ञासमावेशात् कर्तृसंज्ञं च । कारयति । भोजयंति । हेतुत्वाद्धेतुमतीति णिच । कर्तृत्वाल्लकारवाच्यता । गौणस्यापि योजकस्य हेतुत्वम् । भिक्षा वासयति । कारीषोऽग्निरध्यापयति । तद्योजक इति वचनं ज्ञापकं तृजकाभ्यां कर्तरीत्यस्य तासप्रतिषेधस्यानित्यत्वम् ॥

निः ॥ १२६ ॥

अधिकारोऽयम् । प्राग्धोस्ते इत्यतः प्राक् । यानित ऊर्ध्वमनुक्रमिष्यामो निसंज्ञास्ते वेदितव्याः । वक्ष्यति चादिरसत्वे । च वा ह अह एव । निरिति पुल्लिङ्गनिर्देशः किमर्थः गितिसंज्ञाभ्यां समावेशो यथा स्यात् । निप्रदेशा निरेकाजनाङित्येवमादयः ॥

चादिरसत्वे ॥ १२७ ॥

सीदत अस्मिंल्लिङ्गसंख्ये इति सत्वम् । लिङ्गसंख्यावद्द्रव्यमित्यर्थः । चादयो निसंज्ञका भवन्ति न चेत् सत्वे वर्तन्ते । च वा हा अह एव एवम नूनम् शश्वत् सूपत् कूपत् कुवित् नेत् चेत् चण् कचित् यत्र नह हन्त माकिम् नकिम् माङ् । ङकारो माङि लुङीति विशेषणार्थः । अङिति माशब्दे मा ऽभवत् मा भविष्यति । न नञ् । ञकारो नञिति विशेषणार्थः । नहि वात्वाक ननु चत्वेच तु द्वै न्वै नुवै रूवै रेवै श्रौषट् वौषट् स्वाहा स्वधा ओम् तथाहि खलु किल अथ अवस् स्म अस्मि आ इ उ ऊ ऋ लृ ए ऐ ओ औ उञ् सुञ् आदह आतङ्क वेलायाम् मात्रायाम् यावत् यथा किम् यत् तत् यदि पुरः धिक् हे है पाट प्याट उताहो

आहो अथो अधो मानो ननु नाना मन्ये असि ब्रूहि हिनु तु इति इव वत धवत एवं आ आं शं हिकम् हिरुक् शुभम् सुकम् शुकम् तुकम् नहि कम् ऊतम् सत्यम् अद्धा नो हि मुधा न चेत् जातु कथम् ऋते कुत्र अपि आदक आवहानोश्चित् वाह्यस् वत् दिष्ट्या पशु युगपत फट् सह अनुषक् ताजक् नाजक अङ्ग पुत्र अये अरे अवे वट् वेट वाट् उं श्वक्तिवत् मर्या ईप कीम् सीम् णिविभक्तीस्वरप्रतिरूपकाश्च । णिप्रतिरूपका अवदत्तमित्यादौ । दुर्न्नीतन्दुर्नय इति णत्वं न भवति । असत्व इति किम् । अस्यापत्यमिरिति ॥

## प्रादिः ॥ १२८ ॥

प्रादयो निसंज्ञा भवन्त्यसत्वे । प्रपरापसमनिर्दु-र्व्याङन्यधयोऽप्यतिसुदभयश्च । प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र । असत्व इत्येव । विप्रातीति विप्रः । परा जयति सेना । पृथक्करणमुत्तरार्थम् । प्रादीना-मेव णिसंज्ञा यथा स्याचादीनां मा भूत् । उत्तरत्र प्रादि-ग्रहणे क्रियमाणे अक्रियायोगे निसंज्ञा न स्यात् । आ एवं नु मन्यसे । आ एवं किल तत् ॥

## क्रियायोगे गि ॥ १२९ ॥

क्रियायोगे प्रादयो गिसंज्ञा भवन्ति । प्रणमति । परिणायकः । गेरसेऽपि विकृतेरिति णत्वं सिद्धम् । क्रिया-योग इति किम् । प्रगता नायका अस्माद्देशात् प्रनायको देशः । नन्वत्रापि क्रिया ऽस्ति । योगग्रहणसामर्थ्यात् यदुक्रियायुक्तास्तं प्रति गितिसंज्ञा भवति । गमिक्रियया चात्र योगः । मरुच्छब्दस्योपसंख्यानम् । मरुत्तः । गिस्तोऽच इति अनजन्तत्वेऽप्युपसंख्यानसामर्थ्यात्तादेशः । प्रज्ञाश्र-

डाचौवृत्तिभ्यो ण इति निर्देशादद्विषये अतो गित्वम् । तिरोऽन्तर्द्धाविति निर्देशादन्तःशब्दस्यापि क्यादिविषये ॥

## ति ॥ १३० ॥

तिसंज्ञाश्च प्रादयो भवन्ति क्रियायोगे । प्रकृत्य । प्रस्तुत्य । तिसंज्ञायां तिकुप्रादय इति षसः । प्यस्तिवाक्से त्क इति प्यादेशः । पुंल्लिङ्गा गिसंज्ञा समाविशति । अभिषिच्य । प्रणम्य । षत्वणत्वे सिद्धे । योगविभागः किमर्थः । उत्तरत्र तिसंज्ञैव यथा स्यात् गिसंज्ञा मा भूत् । इह ऊरीस्यादिति । गिप्रादुर्भ्यां यच्चस्तेरिति षत्वं स्यात् ॥

## च्विडाजूर्यादिः ॥ १३१ ॥

च्व्यन्तो डाजन्तमूरीप्रभृतयश्च शब्दाः क्रियायोगे तिसंज्ञा भवन्ति । अशुक्लं शुक्लं कृत्वा शुक्लीकृत्य । डाच् । अपटत् पटत् कृत्वा पटपटाकृत्य । कृभ्वस्तियोगे च्विडाचौ विहितौ तत्साहचर्यादूर्यादीनामपि कृभ्वस्तिभिरेव योगे तिसंज्ञा भवति । ऊर्यादिषु च्व्यर्थो न संभवति । ऊरीकृत्य । उररीकृत्य । ऊरीभूय । उररीभूय । ऊरीउररीशब्दावङ्गीकरणे विस्तारे च । पांपीशब्दो विध्वंसे माधुर्ये सकरुणविलापे । चंतालीआंतालीशब्दौ वर्णे । वेताली वैरूप्ये । धूसीशब्दः कान्तौ वाञ्छायाञ्च । सकलासंमकलाध्वंसकलाभ्रंसकला एते हिंसायाम् । गुलुगुधाशब्दौ पीडायाम् । सजः सहार्थे । फलू फली विक्ली अक्ली एते विकारे । आलंबी आलोष्टी केवासी केवाली वर्षाली मस्ससा मस्मसा एते हिंसायाम् । श्रौषट् वौषट् वषट् स्वाहा स्वधा एते दानार्थाः । चादिषु च पाठादक्रियायोगे

ऽपि निसंज्ञा। प्रादुस् अत् आविस । प्रादुःकृत्य । प्रादुर्भूय । अद्धाय । आविर्भूय । आविःशब्दः साक्षादादौ च पठ्यते । तस्य वा कृञीति करोतियोगे तिसंज्ञाविकल्पः । आविष्कृत्य । आविष्कृत्वा ॥

## अनितावनुकरणम् ॥ १३२ ॥

अव्यक्तो व्यक्तो वा शब्दोऽनुक्रियते तेनेत्यनुकरणम् । अनितिपरमनुकरणं क्रियायोगे तिसंज्ञं भवति। खाट्कृत्य । पटत्कृत्य । अनिताविति किम् । खाडिति कृत्वा निरष्ठीवत् । खाटछब्दस्य धेः प्राक प्रयोगः सविधिश्च प्रसज्येत । ध्वादेः षः स इत्यत्र सुब्धुष्ठीवतिष्वष्कतिष्व्यायतीनां प्रतिषेध उक्तः ॥

## सदादरानादरयोः ॥ १३३ ॥

आदरः सम्भ्रमः । अवज्ञानमौदासीन्यं वा ऽनादरः। सच्छब्द आदरानादर इत्येतयोरर्थयोस्तिसंज्ञो भवति । आदरे । सत्कृत्य । अनादरे । असत्कृत्य । अनादर इत्यर्थनिर्देशात् सच्छब्दस्य तदन्तविधिरिष्टः । तेनेहापि भवति। परमसत्कृत्य । तिसंज्ञायां निसंज्ञासमावेशः। निसंज्ञस्यासंख्यत्वाज्झिसञ्ज्ञा । आदरानादरयोरिति किम्। सत्कृत्वा काण्डं गतः । विद्यमान कृत्वेत्यर्थः ।

## भूषापरिग्रहे ऽलमन्तः ॥ १३४ ॥

अलमन्तरित्येतौ शब्दौ भूषायामपरिग्रहे चार्थे यथासंख्यं तिसंज्ञौ भवतः । अलङ्कृत्य । भूषयित्वेत्यर्थः। अन्तर्हत्य । मध्ये हत्वेत्यर्थः । भूषापरिग्रह इति किम् । अलं कृत्वा । अन्तर्हत्वा मूषिका गताः । पर्याप्तं कृत्वेत्यर्थः।

परिगृह्येत्यर्थः । तिरोन्तर्द्धाविति ज्ञापकादन्तःशब्दस्य गिसंज्ञाऽपि । अङ्किविधिणत्वेषु प्रयोगदर्शनात् । अन्तर्द्धा । अन्तर्द्धिः । अन्तर्णयः ॥

कणेमनः श्रद्धाघाते ॥ १३५ ॥

श्रद्धाघातोऽभिलाषनिवृत्तिः । कणेमनःशब्दौ श्रद्धाघातेऽर्थे तिसंज्ञौ भवतः । कणेशब्द ईबन्तप्रतिरूपको निसंज्ञोऽभिलाषातिशये वर्तते । मनःशब्दोऽपि तत्साहचर्यादिह तादृशः । कणेहत्य भुङ्क्ते । मनोहत्य भुङ्क्ते । श्रद्धाघात इति किम् । तन्दुलावयवे कणे हत्वा गतः । मनो हत्वा गतः । चेतो हत्वेत्यर्थः ॥

पुरोऽस्तं भिः ॥ १३६ ॥

पुरस् अस्तमित्येतौ भिसंज्ञौ क्रियायोगे तिसंज्ञौ भवतः । पुरःशब्दः पूर्वाधरावराणां पुरधवोसीत्यत्र साधितः । अस्तंशब्दोऽनुपलब्धौ वर्तते । पुरस्कृत्य गतः । अस्तङ्गत्य पुनरुदेति । नमःपुरसोस्त्योरिति सत्वम् । भिरिति किम् । पूः पुरौ पुरः कृत्वा गतः । अस्तं कृत्वा काण्डं गतः ॥

गत्यर्थवदेऽच्छः ॥ १३७ ॥

झिरिति वर्तते । अच्छशब्दो झिसंज्ञः गत्यर्थे वदतौ च तिसंज्ञो भवति । अच्छगत्य । अच्छगम्य । प्ये वा म इति वा मस्य खम् । अच्छोद्य । अच्छशब्दो दृढार्थे आभिमुख्ये च वर्तते । भिरित्येव । उदकमच्छं गत्वा ॥

अनुपदेशो ऽदः ॥ १३८ ॥

अवचनात्मिका प्रतिपत्तिरनुपदेशः । अदःशब्दोऽनुपदेशे तिसंज्ञो भवति । अदःकृत्य । अनुपदेश इति किम् । अदः कृत्वा गतः । एतत् कृत्वा गत इति परस्य कथयति ॥

## तिरोऽन्तर्द्धौ ॥ १३९ ॥

तिरःशब्दोऽन्तर्द्धाने तिसंज्ञो भवति । तिरोभूय । अन्तर्द्धाविति किम् । तिरो भूत्वा स्थितः । तिर्यग्भूत्वा स्थित इत्यर्थः ॥

## वा कृञि ॥ १४० ॥

तिरःशब्दोऽन्तर्द्धौ कृञि वा तिसंज्ञो भवति । प्राप्ते विकल्पः । तिरस्कृत्य । तिरः कृत्वा । तिरसो वेति सत्वम् । अन्तर्द्धावित्येव । तिरः कृत्वा काष्ठं गतः ॥

## उपाजेऽन्वाजे ॥ १४१ ॥

उपाजे अन्वाजे ईवन्तप्रतिरूपकावेतौ कृञि वा तिसंज्ञौ भवतः । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । दुर्बलस्य भग्नस्य वा बलाधानं कृत्वेत्यर्थः ॥

## साक्षादादिः ॥ १४२ ॥

वेति वर्तते । साक्षात्प्रभृतीनि शब्दरूपाणि कृञि वा तिसंज्ञानि भवन्ति । च्विडाजूर्यादिरित्यतो मण्डूकप्लुत्या च्विग्रहणमर्थपरमनुवर्तते । तेन च्व्यर्थे तिसंज्ञाविकल्पोऽयम् । साक्षात्कृत्य । साक्षात्कृत्वा । मिथ्याकृत्य । मिथ्याकृत्वा । यदा च्विरुत्पद्यते तदा च्विडाजूर्यादिरित्यनेन नित्यं तिसंज्ञा भवति । साक्षात् । मिथ्या । चिन्ता ।

भद्रा । रोचना । लोचना । अमा । आस्था । श्रद्धा । आस्रा । प्राजर्या । प्राजरुहा । वीजर्या । वीजरुहा । संसर्या । अर्थे । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । तिसन्नियोगे लवणादीनां मकारान्तत्वं निपात्यते । अग्नौ । वसे । विकम्पने । विहसने । अग्नौप्रभृतय ईबन्तप्रतिरूपका निपातनं वा । वेति व्यवस्थितविभाषानुवर्तनाल्लवणादीनां च्व्यन्तानां मकारौकारनिपातनं न भवति । लवणीकृत्य । वसीकृत्य । नमस् । प्रादुराविःशब्दौ ऊर्यादिष्वपि पठ्येते । तयोः कृञि विकल्पार्थ इह पाठः ॥

## मनस्युरस्यनत्याधाने ॥ १४३ ॥

मनसिउरसिशब्दौ ईबन्तप्रतिरूपकौ निपातनं च । अत्याधानमुपश्लेषः । मनसि उरसि इत्येतौ अनत्याधानेऽर्थे कृञि वा तिसंज्ञौ भवतः । उरसिकृत्य । उरसि कृत्वा । मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अनत्याधान इति किम् । उरसि कृत्वा पाणिं शेते ॥

## मध्ये पदे निवचने ॥ १४४ ॥

अनत्याधान इति वर्तते । मध्ये पदे निवचने इत्येते शब्दाः कृञि वा तिसंज्ञा भवन्ति अनत्याधाने । एकारान्तता पूर्ववद्वेदितव्या । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचने इति वचनाभावे वर्तते । निवचनेकृत्य । निवचने कृत्वा । अनत्याधान इत्येव । हस्तिनः पदे कृत्वा हस्तमास्ते ॥

## हस्ते पाणौ स्वीकृतौ तिः ॥ १४५ ॥

हस्ते पाणौ इत्येतौ स्वीकृतावर्थे कृञि तिसंज्ञौ भवतः । हस्तेकृत्य । पाणौकृत्य । भार्यां कृत्वेत्यर्थः ।

स्वीकृताविति किम् । हस्ते कृत्वा कार्षापणं गतः । नात्र दारस्वीकारः । पुनस्तिग्रहणं नित्यार्थम् ॥

प्राध्वं बन्धे ॥ १४६ ॥

प्राध्वमिति मकारान्तो ञिसंज्ञः शब्द आनुलोम्ये वर्तते । प्राध्वंशब्दः कृञि तिसंज्ञो भवति बन्धो निमित्तं चेत् । प्राध्वङ्कृत्य । बन्धनिमित्तमानुलोम्यमिह प्राध्वंकरणम् । बन्ध इति किम् । प्रगतमध्वानं प्राध्वं कृत्वा शकटं गतः । तिकुप्रादय इति षसः । गेरध्वन इति सान्तोऽकारः । प्रतिपदोक्तपरिभाषानाश्रयणे प्रत्युदाहरणमिदम् ॥

जीविकोपनिषदाविवे ॥ १४७ ॥

उपनिषद्रहस्यम् । जीविका उपनिषदित्येतौ शब्दाविवशब्दस्यार्थे कृञि तिसंज्ञौ भवतः । जीविकाकृत्य । उपनिषत्कृत्य । जीविकामिव उपनिषदमिव कृत्वेत्यर्थः । इवार्थ इति किम् । जीविकां कृत्वा गतः ॥

प्राग्धोस्ते ॥ १४८ ॥

प्रयोगनियमोऽयम् । ते गितिसंज्ञा धोः प्रागेव प्रयोक्तव्याः । तथा चैवोदाहृतम् । ते इति वचनं किमर्थम् । अनन्तराणां तीनां गीनां च ग्रहणार्थम् ॥

लो मम् ॥ १४९ ॥

नवानां लकाराणामनुबन्धापाये ल इति सामान्येन निर्देशः । लादेशो मसंज्ञो भवति । मिप् वस् मस् सिप् थस् थ तिप् तस झि शतृ । नपा निर्देशः पुंल्लिङ्गया दसंज्ञया बाधा यथा स्यात् । समावेशे हि आक्रमत

तत्राह । न चाविद्येति । तत्र वक्तव्यम् । किमविद्यानिवर्तकं यन्मनः संयोगाश्रयत्वमिन्द्रियत्वमुताविद्यानिवर्तको यो मनःसंयोगस्तदाश्रयत्वं वा । नाद्यः आत्मनोपीन्द्रियत्वप्रसङ्गात् । द्वितीये मनःसंयोगस्य किं चक्षुर्मनःसंयोगत्वादिरूपेण कारणत्वमिन्द्रियमनःसंयोगत्वेन वा । आद्ये कारणतावच्छेदकाननुगमदोषः । द्वितीये इन्द्रियत्वे ज्ञाते तत्संयोगत्वेन जनकज्ञानं, तस्मिन् ज्ञाते च तदाश्रयत्वलक्षणेन्द्रियत्वज्ञानमिति परस्पराश्रयः स्यादित्यभिप्रेत्याह । तेन रूपेणेति । इन्द्रियार्थसन्निकर्षेष्वपि संयोगादिसाधारणं जातिरुपाधिर्वानुगतं सम्भवतीत्याह । तत्सम्प्रयोगस्येति ॥

ननु मन एवाविद्यानिवृत्तिमात्रे ऽनुगतं कारणं रूपाद्यविद्यानिवृत्तौ च चक्षुरादिकमपि विशेषकारणमिति चेन्न । व्यासङ्गे मनसश्चक्षुरादेश्च सत्त्वे ऽपि कार्यादर्शनात् । ननु तदा मनसश्चक्षुरादिसंयोगाभावात् कार्याभाव इति चेन्न । तस्यातीन्द्रियस्य व्यतिरेकग्रहायोगात् । कार्याभावानुपपत्त्या कारणभावकल्पनायां प्रत्यक्षतया झटित्युपस्थितानित्यज्ञानाभाव एव कल्प्यतामित्यभिप्रेत्योपसंहरति । तस्मादिति ॥

(उपसंहारमुद्रयान्तःकरणवृत्तिनिरूपणम्) तस्माद्व्यासङ्गे यद्विरहादज्ञाननिवृत्तिविरहो यत्रेन्द्रियाणामन्वयव्यतिरेकौ सान्तःकरणवृत्तिरेषितव्या । अन्यथा परमते विज्ञानसाधनादेव व्यवहारोपपत्तौ किं विज्ञानेन । किञ्च युगपदनेकेषु पठत्सु युगपदनेकशब्दावच्छे-

देन श्रोत्रमनःसंयोगे सत्यपि यच्छब्दविषयिणी जिज्ञासा तस्यैवाज्ञानं निवर्त्तते नान्यस्येत्यनुभवसिद्धम्। इच्छा च स्वगोचर एव हेतुः स्वापेक्षया गमनादर्शनात्। न चाविद्यानिवृत्तिविशिष्टमेव चैतन्यं जिज्ञासागोचरः। अविद्यानिवृत्तय एनं ज्ञातुमिच्छामीति जिज्ञासायास्तदगोचरत्वात्। अस्या अविद्यानिवर्त्तकज्ञानगोचरत्वात्। परोक्षजिज्ञासानुपपत्तेश्च। तथाच शाब्दान्तरे यद्विरहादज्ञानं न निवर्त्तते तदेवागन्तुकं ज्ञानम् जिज्ञासाजन्यान्वयव्यतिरेकाभ्यां वृत्तिरप्यविद्यानिवृत्तौ साक्षात्कारणं तन्निवर्तते तदेवागन्तुकं ज्ञानं जिज्ञासाजन्यं वृत्तिरित्यन्वयव्यतिरेकाभ्यां वृत्तिरेकयोश्चेदंत्वविषययोरिवावच्छेदकविषयत्वेनाप्युपपत्तेः॥

तद्धेतोरेवास्त्विति नायस्य नात्र प्रसङ्गो जन्यज्ञानासिद्धौ तद्धेतोरेवासिद्धेरित्यभिप्रेत्याङ्गीकृत्यापि परमतेपीदं दूषणं समानमित्याह।अन्यथेति। ननु परमते अनुभूयमानत्वान्न तद्पन्हव इति चेत्तर्ह्यस्मन्मतेप्यनित्यविषयत्वाहङ्कारधर्मत्वादिरूपेणानुभवान्नापन्हव इति तुल्यम।किञ्च समनस्केन्द्रियसन्निकर्षे सत्यपि वृत्तिविरहादेवाविद्यानिवृत्तिविरहो दृश्यत इत्याह। किञ्च युगपदिति। ननु तादृश-

स्थले जिज्ञासाया अपि विशेषकारणत्वादन्यत्र तदभावादेवाविद्यानिवृत्तिविरहो न तु वृत्तिविरहादित्यत आह । इच्छा चेति। इष्यमाणजनकत्वाज्ज्ञानस्यैवेष्यमाणत्वाच्चाज्ञाननिवृत्तौ कारणतेत्यर्थः । तर्ह्यविद्यानिवृत्तेरपीष्यमाणतया तत्साध्यत्वमित्याशङ्क्य तद्धेतोरेवाऽगन्तुकस्येष्यमाणत्वमनुभूयत इत्याह। न चाविद्येति। परोक्षविषयेऽपि जिज्ञासादर्शनात्तत्राविद्यानिवृत्तेरसम्भवाज्जन्यज्ञानाभावे तदनुपपत्तिरित्याह । परोक्षेति । जिज्ञासाया अविद्यानिवृत्त्यहेतुत्वसाधनफलमाह । तथा चेति । निवर्तकचैतन्यावच्छेदकत्वेन वृत्तेरुपयोग इति मतान्तरमाह । तन्निवर्त्तकेति । तर्हि तन्निरूपितवृत्त्यन्वयव्यतिरेकविरोध इत्यत आह । अन्वयेति ॥

वृत्तेर्हेतुत्वाच्छेदकत्वं मतद्वयेप्यावश्यकत्वमित्युपसंहरति । सर्वथेति ।

(वृत्तेरविद्यानिवर्तकत्वोपसंहारः प्रकाशनिवर्त्यत्वं च)

सर्वथाप्युपयुज्यतेऽविद्यानिवृत्तौ वृत्तिः । एतेन तस्याः प्रकाशनिवर्त्त्यत्वाद्वृत्तेश्चाप्रकाशत्वादिति निरस्तम् । अविद्यायाः वृत्तिनिवर्त्त्यत्वेऽपि चैतन्यनिवर्त्त्यत्वेन प्रकाशनिवर्त्यत्वानपायात् । प्रकाशमात्रजन्यत्वस्य प्रतियोगिजन्याविद्यानिवृत्तावसम्भवात् । अपि च न प्रकाशत्वेन ज्ञानमज्ञाननिवर्त्तकं, न चावृत्तित्वेन वृत्तिः । परोक्षवृत्तौ तदभिव्यक्तप्रमांशे च भावरूपाज्ञाननि-

वृत्त्यदर्शनात्। किं त्वपरोक्षप्रमाणज्ञानत्वेन । तच्च वृत्त्युपसर्जनचैतन्यस्य चैतन्यवृत्त्योर्वाविद्यानिवर्त्तकत्वे ऽविशिष्टम्। एतेन न जानामीति ज्ञानविरोधित्वमज्ञानस्यानुभूयते न वृत्तिविरोधित्वं, ज्ञानं च स्वरूपमेवेति प्रत्युक्तम्। वृत्तिशबलचैतन्यं वृत्त्युपहितं वा ज्ञानपदार्थ इति सिद्धान्तद्वये ऽप्यविद्यानिवृत्तौ वृत्तेरपेक्षितत्वात्। नञर्थस्य विरोधित्वस्य तत्सम्बन्धिपदार्थप्रतियोगित्वनियमात् ॥

किञ्च तरति शोकमात्मवित् ज्ञानेन तु तदज्ञानं येषां नाशित मात्मन इत्यादिश्रुतिस्मृतिष्वात्मविषयज्ञानादेवाविद्यानिवृत्तिश्रवणात्स्वरूपज्ञानस्य वस्तुविषयत्वाभावात्तदतिरिक्तवृत्तिरभ्युपेयेति भावः । चैतन्यस्याप्यविद्यानिवर्तकत्वाङ्गीकारात्पूर्वोक्तचोद्यं निरस्तमित्याह।एतेनेति। किमविद्यायाः प्रकाशनिवर्त्यत्वमात्रमभिप्रेतमुत प्रकाशमात्रनिवर्त्त्यत्वमाद्यं न विरोध इत्याह । अविद्याया इति। अविद्यानिवृत्तावविद्याया अपि कारणत्वात् द्वितीयमसम्भवीत्याह। प्रकाशमात्रेति। नन्वविद्यानिवृत्तिःप्रतियोग्यतिरिक्तप्रकाशजन्या न भवति तमोवृत्तित्वादन्धकारनिवृत्तिवदित्याशङ्क्यान्धकारस्यापि मन्दप्रकाशेन सहानुवृत्तिदर्शनात् प्रौढप्रकाशेनैव तन्निवृत्तिर्वक्तव्या । तथा चैतन्यप्रकाशस्यापि परोक्षस्थले ऽविद्यया सहैवावस्थाना-

दपरोत्तवृत्त्यभिव्यक्तप्रकाशस्यैव तन्निवर्तकत्वमित्याह । अपि चेति । न वावृत्तित्वेनेति दृष्टान्तार्थमुक्तम् । नन्वेवं सत्यज्ञानस्य न जानामीति ज्ञानसामान्यविरोधित्वानुभवविरोध इति चेन्न । यथा वस्तुतः शस्त्रादिसम्पन्नसुरविनाश्या अपि दैतेया असुरा इति सुरसामान्यविरोधितया प्रतीयन्ते एवमज्ञानमिति ज्ञानमिति ज्ञानसामान्यविरोधितया प्रतीयमानस्यापि वस्तुतो वृत्तिविशेषाभिव्यक्तचैतन्येनैव निवृत्तिरिति भावः। वक्ष्यमाणयुक्तितो ऽपि वृत्तिनिवर्त्यत्वपक्षोक्तदूषणमयुक्तमित्याह । एतेनेति । न जानामीति हि ज्ञानपदवाच्येनाज्ञानस्य विरोधः प्रतीयते। तद्वाच्यं च वृत्तिविशिष्टं वृत्त्युपहितं वा चैतन्यमित्युभयथापि वृत्तिविरोधित्वमविद्यायाः प्रतीयत इत्याह । वृत्तिशबलमिति । तत्रहेतुमाह । नञर्थस्येति ।न जानामीत्यत्र नञर्थस्याज्ञानधर्मिकविरोधित्वस्य सम्बन्धिज्ञानपदस्य योऽर्थो वाच्यो वृत्तिकवलीकृतचैतन्यं तन्निरूप्यत्वनियमादित्यर्थः ॥

वृत्तिविरोधित्वे ऽपि चैतन्यविरोधित्वानपायादन्यदपि चोद्यं निरस्तमित्याह । एतेनेति ।

(चैतन्याविरोधितया ज्ञानस्य चोद्यान्तरपरिहारः)

**एतेन चैतन्याज्ञानयोरविरोधित्वे कथन्तयोः प्रकाशत्वाप्रकाशत्वे ज्ञानत्वाज्ञानत्वे च स्यातामिति निरस्तम् । वृत्तिसहकृतचैतन्यस्याज्ञानविरोधित्वाभ्युपगमात् । अत एवेदमपि परास्तम्, अनुमेयादि-**

गोचरपरोक्षवृत्तौ सत्यामपि नानुमेयादौ भावरूपाज्ञाननिवृत्तिः, इच्छादौ च वृत्तिमन्तरेणापि स्फुरणमात्रेणाज्ञाननिवृत्तिरित्यन्वयव्यतिरेकव्यभिचाराद्वृत्तिर्नाज्ञाननिवृत्तौ हेतुरित्यपरोक्षवृत्तेरेवाज्ञाननिवृत्तिहेतुतया परोक्षवृत्तेरन्वयव्यभिचारस्यादूषणत्वात् वन्ह्यनुमानिकाद्विशेषदर्शनादपरोक्षभ्रमो न निवर्त्तत इति नापरोक्षमपि विशेषदर्शनं तत्र हेतुः । इच्छादेश्चानावृतसाक्ष्यंशाध्यासादेवाज्ञानविरहात्स्फुरणमात्रादज्ञाननिवृत्तौ नोदाहरणम् । यच्चोक्तं वृत्तिर्यद्यर्थप्रकाशत्वरूपं विहाय जातिविशेषेणाविद्यातत्कार्यं निवर्त्तयेत्तदा रागनिवर्त्यद्वेषवत्तयोः सत्यत्वे ऽपि तदुपपत्तिः। अथार्थप्रकाशत्वेन तदा स्वरूपचैतन्यस्यापि तथात्वात्ततोप्यविद्यानिवृत्तिः स्यादिति । तन्मन्दमन्वयव्यतिरेकाभ्यामपरोक्षप्रमाणाज्ञानत्वेन तन्निवर्त्यस्यैव मिथ्यात्वात् । केवलसाक्षिणो ऽविद्यासाधनत्वाच्च नाविद्यानिवर्त्तकत्वम् ।

अत एवेदमिति । स्पष्टोऽर्थः । अपरोक्षप्रमाणहेतोरेवनिवर्त्तकत्वाभिधानात्तत्र नान्वयव्यभिचार इत्याह। अपरो-

न्नेति। परोक्षवृत्तेरविद्यानिवृत्तौ व्यभिचारेऽपि नापरोक्षवृत्तेर्व्यभिचार इत्यत्रोदाहरणमाह।न हीति।पीतः शङ्ख इति। भ्रमस्यानुमानिकत्वे यज्ज्ञानेनानिवृत्तावपि तदपरोक्षज्ञानस्य तन्निवृत्तौ हेतुत्वदर्शनादित्यर्थः। व्यतिरेकव्यभिचारश्च नास्तीत्याह। इच्छादेरिति। वृत्यभावेऽपि यद्यज्ञाननिवृत्तिस्यात्तर्हि व्यतिरेकव्यभिचारः स्यान्नैतदस्ति इच्छाद्यवच्छिन्नचैतन्यावरकाविद्याभावेन तन्निवृत्तिरपि नेत्यर्थः। वृत्तेः किं जातिविशेषप्रयुक्तमविद्यानिवर्तकत्वमुतार्थप्रकाशत्वप्रयुक्तमाद्ये तन्निवर्त्त्यस्य रागनिवर्त्त्यद्वेषवन्मिथ्यात्वं न सिद्ध्येत्। द्वितीये वृत्त्यभावेऽपि चैतन्यप्रकाशादेवाज्ञानं निवर्तेत। कारणतावच्छेदकाघच्छिन्ने सति वृत्तिव्यतिरिक्तापेक्षस्य कार्यं स्यादिति वाच्यम्। शुक्तिरजतादावेतादृशज्ञाननिवर्त्त्यस्य मिथ्यात्वनियमादिति दूषयति। तन्मन्दमिति। ज्ञानस्य स्वविषयाव्युदासकत्वादपि न केवलेति॥

तर्हि कदापि तस्य न निवर्तकत्वमित्याशङ्क्य सहकारिसमवधाने निवर्तकत्वं तस्यैवेति सदृष्टान्तमाह। न चैवमिति।

(वृत्तिसहकृता ज्ञानादविद्यानिवृत्तिः) **न चैवं वृत्तिसहकृतादपि तस्मात्कथं तन्निवृत्तिरिति वाच्यम्। साधकस्यापीश्वरज्ञानस्येव सहकारिविशेषान्निवर्तकत्वोपपत्तेः। तस्माद्यथा परमते संशयस्य स्थाणुत्वादिवैशिष्ट्यविषयत्वेऽपि न संशयविरो-**

धित्वम् । संशयधाराविलोपप्रसङ्गात् । किं तु निश्चयस्यैव । तथैवान्वयव्यतिरेकदर्शनात् । तत्रापि प्रमेयमिति ज्ञाने सर्वावभासे ऽपि घटत्वादिप्रकारकसंशयदर्शनेन संशयस्य स्वसमानप्रकारकनिश्चयविरोधित्वमास्थितम् । तत्राप्यानुमानिकविशेषदर्शने सत्यपि प्रत्यक्षभ्रमदर्शनादपरोक्षरूपमेव विशेषदर्शनं तन्निवर्त्तकमित्यन्वयव्यतिरेकाभ्यां स्वीक्रियते । एवमस्मन्मते ऽपि स्वप्रकाशसाक्षिणा स्वपरप्रकाशे ऽपि तद्गोचराविद्यानिवृत्तौ चक्षुरादिजन्यज्ञानान्वयव्यतिरेकदर्शनात् वेदान्तविज्ञानसुनिश्चितार्था इत्यादिशास्त्राच्चान्तःकरणवृत्तिरविद्यानिवृत्तौ हेतुरिति। प्रयोगश्च इन्द्रियसंयोगे सत्यप्यजायमानाऽविद्यानिवृत्तिः कादाचित्कहेतुजन्या, कार्यत्वात्, घटवत्, अन्यथा व्यासङ्गदशायामप्यविद्यानिवृत्तिप्रसङ्गात्। तच्च कादाचित्कं कारणं परिशेषादन्तःकरणवृत्तिरिति ॥

ईश्वरज्ञानस्येत्युपलक्षणम् । अस्मदादिघटज्ञानस्यापि मुद्गरादिसहकारिणि सति स्वविषयनिवर्तकत्वदर्शनादित्यर्थः । यत्त्वत्रार्वाचीनेनोक्तं ब्रह्मणः स्वप्रकाशत्वेनाज्ञात-

त्वमेव नास्ति कुतस्तन्निवृत्तौ वृत्तेरुपयोग इति तन्न। किं स्वप्रकाशत्वमज्ञातत्वाभावे प्रयोजकमुत प्रकाशमानत्वम्। नाद्यः आत्मनोऽन्यत्र तद्व्याप्तिस्थलाभावात्। द्वितीये यदि प्रकाशमानत्वं प्रकाशरूपत्वं तदा पूर्वोक्त एव दोषः। यदि प्रकाशप्रयुक्ताज्ञानाद्यगोचरत्वं तदा प्रयोज्यप्रयोजकयोरभेदः। अथ प्रकाशविषयत्वं प्रकाशमानत्वम्। तदपि न। ब्रह्मणः स्वपरप्रकाशाविषयत्वात्। अङ्गीकृत्यापि विषयत्वं तन्मात्रेणाज्ञातत्वाद्यभावः किं तु वृत्तिविशेषे सत्येवेति सदृष्टान्तमुपसंहारव्याजेनाह। तस्माद्यथेति। वेदान्तजन्य ज्ञानस्यानर्थनिवर्तकत्वश्रवणाच्चाविद्यानिवृत्तौ तदुपयोग इत्याह। तरति शोकमिति। तर्कितेऽर्थे ऽनुमानमाह। प्रयोगश्चेति। अविद्यानिवृत्तिरित्युक्ते चाविद्यानिवर्तकेन्द्रियसंयोगमादायार्थान्तरतास्यात्तन्निवृत्त्यर्थमिन्द्रियसंयोगेत्यादिविशेषणम्। कादाचित्केति। आदिमत्प्रयोज्येत्यर्थः। तथा च नाविद्ययार्थान्तरता, न वा वृत्त्यवच्छिन्नचैतन्यस्यैवाविद्यानिवर्तकत्वपक्षे बाधः। तन्मतेऽपि वृत्तिप्रयोज्यत्वात्। विपक्षे दण्डं पातयति। अन्यथा व्यासङ्गेति। मनःसंयोगस्य हेतुत्वनिरासात्तस्मिन् सत्यप्यनेकशब्दसमवाये शब्दान्तराविद्यानिवृत्त्यदर्शनाच्चेति भावः॥

पूर्वं विषयतया अनुभूयमानं ज्ञानमविषयचैतन्यादेवेत्युक्तमिदानीं स्फुरणस्य विषयसम्बन्धित्वेनानुभवाज्ज्ञानस्य च प्रमातृसम्बन्धित्वेनानुभवात्तदन्यज्ज्ञानमित्याह। किञ्चेति। १

(ज्ञान स्फुरणादन्यत्) किञ्च स्वरूपज्ञानातिरिक्तावृत्तिःस्वीक-

त्तव्या। देवदत्तो जानाति घटः स्फुरतीति तयो- र्भेदेनानुभवात् । ननु न वृत्तिस्फुरणयोर्भेदः, बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इत्यनर्थान्तरमित्य- क्षपादोक्तेरिति चेत्, देवदत्तो जानाति घटः स्फुरतीति तयोर्भिन्नाश्रयत्वेनानुभूयमानयो- रेकत्वायोगात्। न हि प्रमातृधर्मस्य ज्ञानस्य प्रमे- यतादात्म्यं सङ्गच्छते। अभेदे वा देवदत्तो घटं जानातीति वद्देवदत्तो घटं स्फुरतीति, घटः स्फुरतीति वत् घटो जानातीति च प्रत्ययप्रयो- गयोरापत्तेः । ननु जानातीति ज्ञानाश्रयत्वमनु- भूयते घटः स्फुरतीति च ज्ञानविषयत्वम्, अतो न स्फुरणज्ञानयोर्भेदो, न वा प्रतीतिवैपरीत्य मिति चेन्न। घटमहं जानामीत्यनुभूयमान- ज्ञानात्पृथगेव स मे घटः स्फुरतीति स्फुरणस्या- नुभूयमानत्वात्। ननु घटं जानामीत्यर्थविशेषणं ज्ञानमात्मन्यनुभूयते, घटः स्फुरति ज्ञानवि- षयो भवतीति ज्ञानोपसर्जनोर्थः प्रतीयत इति विशेषणविशेष्यभाव एव परं भिद्यते न त्वनुभ- वयोर्विषयभेद इति चेन्न। स्फुरतीति स्फुर- णानुभवस्य तदुपसर्जनतया शब्दवद्व्याख्या- नानर्हत्वात् ॥

ननु स्फुरणं नामोपलब्धिः बुद्ध्याद्यभेदस्याक्षपादैरेवोक्तत्वान्न तयोर्भेद इति चोदयति । ननु न वृत्तीति । प्रमातृप्रमेययोर्भिन्नत्वात्तत्तादात्म्येन प्रतीयमानयोरभेदायोगान्मूलप्रमाणानपेक्षमक्षपादवचनमनुपादेयमित्यभिप्रेत्याह । न देवदत्त इति । अयोगमेवोपपादयति । न हीति । सुखादौ तददर्शनादित्यर्थः । ननु द्वित्वादिवदुभयसम्बन्धित्वमुपपद्यतेत्याशङ्क्य तर्ह्युभयत्रोभयसम्बन्धप्रतीतिः स्यादित्याह । अभेदे वेति । ननु घटः स्फुरतीति न स्फुरणतादात्म्यं प्रतीयते किं तु प्रमातृधर्मस्फुरणविषयत्वं घटस्य, तथा च नोक्तदोष इति चोदयति । ननु जानातीति । सकर्मत्वाकर्मकत्वलक्षणविरुद्धधर्मवत्तयानुभूयमानत्वान्न तयोरभेद इत्याह । न घटमहमिति । ननु घटः स्फुरतीति सकर्मकज्ञानस्यैवानुभूयमानत्वान्नोक्तवैधर्म्यमिति चोदयति । ननु घटं जानामीति । घटश्चलतीति वत् घटः स्फुरतीति तत्तादात्म्यप्रतीतेर्नेदं व्याख्यानमुचितं शब्दस्यैव लक्षणादिवृत्त्यार्थान्तरस्य सम्भवादिति दूषयति । न स्फुरतीति ॥

व्यवसायतद्ग्राह्यज्ञानविषयो भवतीति व्याख्यानेऽपि यज्ज्ञानं प्रति विषयो घटस्तेनैव घटे स्वविषयत्वं गृह्यते किंवा ज्ञानान्तरेणेति विकल्प्य क्रमेण दूषयति । किञ्चेति ।

(स्वोपसर्जनमर्थं स्वस्य ज्ञानान्तरस्य वा विषयमिति विकल्प्य दोषयोजनम्)

किञ्च स्वोपसर्जनमर्थं स्वयं विषयो करोति ज्ञानान्तरोपसर्जनं वा । नाद्यः वेद्यज्ञानवादे स्वस्य स्वविषयत्वानुपपत्तेः । न द्वितीयः व्यवसा-

यानुपनीतस्य तद्विषयत्वस्यानुव्यवसाये भानायोगात् । स्वसम्वेद्यज्ञानवादे ऽपि किमुपसर्जनं ज्ञानं ज्ञेयेन सहैव स्वात्मनं विषयीकरोति, किं वा प्रथमं स्वात्मानं विषयीकृत्य ज्ञेयं विषयीकरोति । नाद्यः विशेषणज्ञानतत्सन्निकर्षयोः प्रथमं वक्तव्यत्वात् । विशेषणभूतज्ञानस्यैव विशिष्टज्ञानत्वे तस्य तज्ज्ञानतत्सन्निकर्षजन्यत्वायोगात् । अत एव न द्वितीयः बुद्धेर्विरम्यव्यापारानुपपत्तेश्च । सकर्मकाकर्मकयोर्ज्ञानस्फुरणयोरभेदासम्भवात् । ज्ञानेन स्फुरतीति भेदानुभवाच्च । नन्वेवमतीतादावपि स्फुरतीत्यनुभवात्तत्रापि स्फुरणापत्तिस्तत्र चाश्रयाभावेन स्फुरणाभावात् । ज्ञानेनैव तद्व्यवहारे प्रकृतेऽपि तथा किं न स्यादिति चेन्न । अतीतादावपि स्फुरणस्य सत्त्वात् । अन्यथा तद्व्यवहारानुपपत्तेः । व्यवहारस्यार्थप्रकाशजन्यत्वात्, वृत्तिमात्रस्याप्रकाशत्वात् । न चासत्याश्रये कथं स्फुरणं स्यादिति वाच्यम् । आश्रयाभावे कार्यमेव व्यावर्तते नत्वकार्यमपि । अन्यथा तव मते ऽपि प्रलये जातिविरहप्रसङ्गात् ॥

व्यवसायानुपनीतस्येति । व्यवसायतद्गतधर्मव्यतिरिक्तस्य व्यवसायविषयकत्वस्यैवानुव्यवसायत्वाद्व्यवसायविषयकत्वस्य च व्यवसायाविषयत्वान्न तस्यानुव्यवसायविषयतेत्यर्थः । अस्तु तर्हि स्वप्रकाशवादिमते स्वविषयत्वस्य स्वेनैव ग्रहणमित्याशङ्क्य नागृहीतविशेषणान्यायेन स्वेन स्वस्यापि ग्रहणं वक्तव्यम्, तथा च तस्यापि ग्रहणविकल्पासहत्वमित्याह । स्वसम्बन्धेति । विशेषणज्ञानतत्सन्निकर्षयोरिति मतभेदेनोक्तम् । अस्तु तर्हि स्वस्मात् पूर्वं विशेषणज्ञानादिकमित्याशङ्क्य स्वस्यैव विशेषणज्ञानत्वाद्विशिष्टज्ञानत्वाच्च न पूर्वं तत्सम्भव इत्याह । विशेषणेति । विशेषणज्ञानविशिष्टज्ञानयोरेकत्वादेव पूर्वं विशेषणज्ञानाभावात् क्रमपक्षोऽप्यनुपपन्न इत्याह । अत एवेति । शब्दबुद्ध्यादीनां जन्मातिरिक्तव्यापाराभावेन क्रमेण विषयसम्बन्धश्च न सम्भवतीत्याह । बुद्धिरिति । भवन्मतेऽपि ज्ञानस्फुरणयोरत्यन्तभेद एवेत्याह । सकर्मकेति । विषयागतस्फुरणाभावेऽपि स्फुरतीत्यनुभवान्न तस्य विषयत्वमिति चोदयति । नन्विति । इष्टापत्तिमाशङ्क्याह । तत्र चेति । तर्हि ज्ञानविषयत्वमेव तत्र स्फुरतीति व्यवह्रियत इत्यत आह । ज्ञानेनैवेति । गूढाभिसन्धिरुत्तरमाह । न, अतीतादाविति । स्वमते स्फुरणस्य नित्यत्वादित्यभिसन्धिः । अभिसन्धिमजानानस्य चोद्यमुद्भाव्य तत्प्रकटनेन निराकरोति । न चासतीति । जातिविरहेति पटत्वादिजातिविरामप्रसङ्गादित्यर्थः ।

आश्रितत्वमङ्गीकृत्येदमुक्तम, वस्तुतस्त्वनाश्रितमेव स्फुरणमित्याह । अस्माकमिति ।

(अनाश्रितमेव स्फुरणम्) अस्माकं च स्फुरणं नित्यात्मरूपमेवेति वक्ष्यते, तथापि विषयावच्छिन्नचैतन्यमभिव्यक्तं सत्स्फुरणमित्युच्यते। घटः स्फुरतीत्यनुभवात्। अतीतादौ च विषयाभावेन कथं तत्स्फुरणं स्यादिति चेन्न । विषयस्यावच्छेदकत्वं हि तादात्म्येन स्वरूपसम्बन्धेन वा । तत्र प्रत्यक्षे विषयस्य तादात्म्येनावच्छेदकत्वं स्फुरणस्यान्योन्याध्यासेन विषयाभिन्नत्वात् । परोक्षे तु विषयस्य स्वरूपसम्बन्धेनैवावच्छेदकत्वं, तत्क्वचिदविद्यमानस्यापि विषयस्य ज्ञान इव स्फुरणे ऽपि न विरुध्यते। नन्वेवमनुमेयस्यापि फलव्याप्यत्वापत्तिरिति चेन्न। कर्माश्रयस्यैव फलत्वात्। अनुमितौ त्वान्तरमेव चैतन्यं तदाकारवृत्त्या व्यज्यत इति न तत्फलमिति गीयते। किञ्चानुमितिगोचरे ऽपि परमाण्वादौ स्फुरणशून्ये कृतिः, तन्त्वादौ तु स्फुरणाश्रये कृतिरित्यन्वयव्यतिरेकाभ्यां विषयगतं स्फुरणं कृतिहेतुः। न च तत्र विषयस्यातीन्द्रियत्वादेव न कृतिरिति वाच्यम्। तन्त्वादावप्यनुमितिदशायां तदभावात् ॥

स्फुरणस्य नित्यत्वेपीदानीमतीतादिविषयावच्छेदकाभावात्कथं तत्स्फुरणं भवेदिति चोदयति । तथापीति । अपरोक्षविषयस्यैव तादात्म्येन स्फुरणावच्छेदकत्वमिति मुख्यसम्बन्धे स्वरूपसम्बधासम्भवात्परोक्षस्य तु नियमेन तदभावात्स्वरूपसम्बन्धेनैव परमते जन्यज्ञानवत्स्फुरणावच्छेदकत्वम् । तथाचातीतादिस्फुरणमिति न विरुद्ध्यत इति परिहरति । न विषयस्येति । अविद्यमानस्यापीत्यपिशब्देन वस्तुत आमोक्षमतीतादिसूक्ष्मरूपेण वर्तत इति द्योतयति । परोक्षविषयस्यापि स्फुरणरूपफलावच्छेदकत्वेऽपसिद्धान्तः स्यादिति चोदयति । नन्वेवमिति । विषयाधिष्ठानचैतन्यस्यैव वृत्त्यभिव्यक्तस्य फलत्वादनुमेयादौ वृत्तिनिर्गमनाभावेन तस्यानभिव्यक्तत्वान्न फलावच्छेदकत्वमित्याह । न कर्मेति । किञ्चाहमर्थधर्मज्ञानस्य कृतिकारणत्वायोगात्तत्कारणं विषयतादात्म्यापन्नं स्फुरणमावश्यकम् । तथाच तयोर्भेदसिद्धिरित्यभिप्रेत्याह । किञ्चानुमितीति । परमाण्वादेः प्रत्यक्षायोग्यत्वादेव कृतिविरहो न स्फुरणविरहादित्याशङ्क्य प्रत्यक्षयोग्येऽपि स्फुरणाभावे कृतिविरहो दृष्ट इत्याह । न च तत्रेति ॥

अस्तु तर्ह्यपरोक्षवृत्तिरेवाव्यभिचारिणी कृतिहेतुः, तद्व्यभिचारे स्फुरणस्यापि व्यभिचारात्तदभिव्यक्ताधिष्ठानचैतन्यस्यैव स्फुरणत्वादिति चोदयति । नन्विति ।

**ननु प्रत्यक्षज्ञानमेव स्वविषयकृतिहेतुः न तु स्फुरणं तद्विरहात् । प्रत्यक्षाभावे स्फुरणस्याप्यभावादिति । उच्यते अन्वयव्यतिरेकसहकृतकृतिनिरूपितकारणताग्राहकेणानुभवेन, देवदत्तकृति-**

देवदत्तज्ञानजन्या, देवदत्तनिष्ठप्रत्यक्षकार्यत्वा-त्तदिच्छावदित्यनुमानेन वा लाघवोपोद्बलितेन स्फुरणमेव कृतिकारणं विषयीक्रियते न तु प्रत्यक्षज्ञानानि तेषामनन्ततया गौरवेण तद-गोचरत्वात् । न च त्वत्पक्ष एव गौरवं ज्ञानाति-रिक्तस्फुरणाङ्गीकारादिति वाच्यम् । सर्वसम्प्रति-पन्नात्मन एव स्वयंप्रकाशस्फुरणतया ऽस्माभिः स्वीकारात् । नन्वेवमपि वृत्त्यभिव्यक्तस्फुरणमेव कृतिहेतुरस्तु किं विषयगतेनेति चेन्न । तस्या-नुमित्यादिसाधारणत्वात् । ननु विषयावच्छिन्न-चैतन्यस्यापि सर्वदा सत्त्वाज्ज्ञानमन्तरेणापि तद्विषयिणी कृतिः स्यादिति चेन्न । अभिव्य-क्तचैतन्यस्यैव स्फुरणपदार्थत्वात् । अभिव्यक्तेश्च वृत्तिज्ञानाधीनत्वात् । ज्ञानगतमपरोक्षत्वमपि न विषयस्फुरणं विना निर्वहति । अपरोक्षविष-यत्वं हि ज्ञानस्य परोक्षत्वं विषयस्यापरोक्षत्वं प्रमात्रव्यवहितत्वेन । तच्च तदुभयस्फुरणैकं विना न निर्वहतीति शब्दापरोक्षे वक्ष्यामः ॥

लाघवतर्कोपोद्बलितप्रत्यक्षानुमानाभ्यामेकस्यैव स्फुरणस्य कृतिमात्रकारणत्वसिद्धेर्नानन्तापरोक्षवृत्तीनां कारणतोचितेति दूषयति । उच्यत इति । यज्ञदत्तकृतै

भूहितत्वेन प्रायश्चित्तापवादस्याग्निनिर्वापणार्थं कृतप्रयत्नविषयत्वात्। तत्रैवाकृतप्रयत्नविषय प्रायश्चित्तमिति न विरोधः।

किञ्च।

**ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने।**
**अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते॥ ४२॥**

शत्रुभिः परग्रामे हन्यमाने विमुक्तैः शरैः ग्रामान्तःस्थिताना गवां निपातने तथा स्तम्भादिशैथिल्येन गृहभङ्गाद्वा गोमरणे बुधशुक्रसामीप्यादिना प्रवृत्तायामतिवृष्टौ शीतवातादिभिर्मृताना गवा च स्वामिनस्त दापन्निवृत्तये यथाशक्तिप्रवृत्तौ न प्रायश्चित्त भवति।

किञ्च।

**संग्रामे प्रहतानां च ये दग्धा वेश्मकेषु च।**
**दावाग्निग्रामघातेषु प्रायश्चित्तं न विद्यते॥ ४३॥**

शत्रुसैन्ययोरन्योन्ययुद्धे शत्रुभिर्द्विषाद्या गावो हतास्तासा तथा अल्पानि वेश्मानि वेश्मकानि ग्रामाद्बहिर्गोनिवासार्थं कृतास्तृणकुट्य इति यावत्, तेषु शत्रुभिर्दह्यमानेषु ये दग्धा तथा ग्रामदुर्गताये परितः कृते वने शत्रुभिर्दह्यमाने तेनैवाग्निना यदा ग्रामोऽपि दह्यते स्वभावतो वा सन्निहितवनाग्निना यदा ग्रामो दह्यते। तत्र सर्वत्र स्वामिनो यथा शक्तितन्निवारणप्रवृत्तौ प्रायश्चित्त न भवति।

किञ्च।

**यन्त्रिता गौश्चिकित्सार्थं गूढगर्भविमोचने।**
**यत्ने कृते विपद्यत प्रायश्चित्तं न विद्यते॥ ४४॥**

रोगादिचिकित्सार्थं दाहच्छेदशिराभेदादिप्रयोगे यन्त्रिता रज्ज्वादिना बद्धा गौर्यदि विपद्येत म्रियेत तथा गूटस्यान्तर्मृतस्य गर्भस्य स्वतो निःसरणशक्त्यभावात्तद्विमोचने हस्तप्रवेशेन निष्कासने क्रियमाणे यदि गौर्म्रियेत तदा तद्धितार्थं यत्नस्य कृतत्वात्स्वामिनोऽन्यस्यवा कर्तुर्न प्रायश्चित्त भवति।

तदाह संवर्त्तः ।

यन्त्रणे गोः चिकित्सार्थे गूढगर्भविमोचने ।
यदि तत्र विपत्तिः स्यात् न स पापेन लिप्यते ॥
औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु च ।
दीयमाने विपत्तिश्चेत् न स पापेन लिप्यते ॥
दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् ।
द्विजानां गोहितार्थञ्च प्रायश्चित्तं न विद्यते इति ॥

यन्त्रकरणस्य सर्वप्रायश्चित्तापवादशेषत्वेन उपेक्षया यन्त्राकरणे प्रायश्चित्तं भवत्येव ।

तथा च वक्ष्यति सर्वेषां पातकम्भवेदिति ।
प्रायश्चित्तं त्वत्र दहनात्तु विपद्येतेत्यादिनोक्तं पादकृच्छ्रमेव ।
यत्तु व्यासेन जलौघपल्वले मग्ना मेघविद्युद्धतापि वा ।
श्वभ्रे वा पतिता ऽकस्मात् श्वापदेनापि भक्षिता ॥
शीतवातहता वाह्याद्बन्धनमृता पि वा ।
शून्यागारे उपेक्षाया प्राजापत्यं विनिर्दिशेत् ।

इति प्राजापत्यमुक्तम् । तन्त्रिमासादिहनने प्रायश्चित्तवादिमन्वादिमते सङ्गतं न पराशरमते तत्र हननप्रायश्चित्तस्यैव प्राजापत्यरूपत्वात् । नच हननोपेक्षयोस्तुल्यं प्रायश्चित्तं सम्भवति । एतेन पल्वलौघमृगव्याघ्रश्वापदादिनिपातनेश्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेत् । अपालत्वात्तु कृच्छ्रं स्याच्छून्यागारे उपप्लवे इति विष्णुवचनमपि व्यवस्थापितमेवेत्यलम् ।

इदानीमेकप्रयत्ननिष्पन्नानेकगोवधे प्रायश्चित्तमाह ।

**व्यापन्नानां बहूनान्तु रोधने बन्धनेऽपि वा ।**
**भिषङ्मिथ्याप्रचारे च प्रायश्चित्तं विनिर्दिशेत् ॥४५॥**

यदि सकृत्कृते पूर्वोक्तलक्षणे रोधने बन्धने वाशब्दाद्योक्ते घाते वा बहूनां गवां व्यापत्तिर्भवति तदा तत्कर्तुः भिषजो वैद्यस्य मिथ्या अयथाशास्त्रप्रचारे चिकित्सायां च न प्रतिनिमित्तं नैमित्तिकावृत्तिर्नापि तन्त्रेण किन्तु वचनबलाद् द्विगुणमेव प्रायश्चित्तं विनिर्दिशेत् ।

तथाचापस्तम्बः ।

विपन्नाना बहूनां तु रोधने बन्धनेपिवा ।

भिषङ्मिथ्याप्रयोक्ताच द्विगुणं गोव्रतं चरेदिति ।

यदुक्तं यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं न विद्यते इति तस्य प्रत्युदाहरणमाह ।

**गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः ।**
**अनिवारयतां तेषां सर्वेषां पातकं भवेत् ॥ ४६ ॥**

गावश्च वृषाश्च गोवृषास्तेषां विपत्तौ पूर्वोक्तायां कूपादिपातरूपायां यावन्तो जना औदासीन्येन प्रेक्षका भवन्ति तेषां गवां विपत्तिमनिवारयतां सर्वेषां पातकं भवति । तत्र च पूर्वोक्तपादकृच्छ्रमेव प्रायश्चित्तं कार्यं तस्याकृतप्रयत्नविषयत्वात् । इदमपि शक्तौ सत्यामौदासीन्ये द्रष्टव्यम्।

अत एव पैठीनसिः ।

उपेक्षकः शक्तिमांश्चेद्दोषवक्तानुमोदकः ।

अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेद् ॥

इत्याह ।

नन्वेकप्रयत्ननिष्पन्नानेकगोवधे प्रायश्चित्तमुक्तम् । अनेकप्रयत्ननिष्पन्नैकगोवधे तु कथमित्यत आह ।

**एको हतो यैर्बहुभिः समेतै-**
**र्न ज्ञायते यस्य हतोऽभिघातात् ।**
**दिव्येन तेषामुपलभ्य हन्ता**
**निवर्तनीयो नृपसन्नियुक्तैः ॥ ४७ ॥**

यद्येको गौर्बहुभिः समेतैर्मिलितैर्हतस्ताडितस्सन्यस्याभिघातानन्तरमेव मृतः स चेन्न ज्ञायते तदा तं दिव्येन तुलाग्न्यादिना उपलभ्य हन्तृत्वेन निश्चित्यानन्तरमसौ नृपसन्नियुक्तैः पुरुषैः निवर्त्तनीयो ऽयमसौ

गोहन्तेति व्याख्याय ज्ञातिव्यवहाराद्बहिः कर्तव्यः । यद्यपि सर्वेषामपि प्रहाराणां वेदनाहेतुत्वं समानमेव तथापि यद्व्यतिरेकेण जीवनं यस्मिन्सत्यविलम्बेन च मरणं स एव तद्धेतुरिति तत्कर्तुरेव हन्तृत्वं सिध्यति हन्तृत्वनिश्चयश्च हनननिमित्तप्रायश्चित्तप्राप्त्यर्थः ।

तर्हि एतेषां किं न प्रत्यवाय इत्यत आह ।

**एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित् ।**
**पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥ ४८ ॥**

यद्येका काचित्सगुणा निर्गुणा वा गौर्बहुभिर्मिलित्वा दैवादज्ञानात् क्वचिद्व्यापादिता तदा ते सर्वे यादृग् विधगोहत्यायां यद्व्रतमुपदिष्टं तस्यैकैकं पादं चतुर्थांशं पादकृच्छ्रादि पृथक् पृथगेकैकशश्चरेयुः । एकाचेदित्युपलक्षणं तेन बहुभिर्द्वयोर्बहूनाञ्च व्यापादने प्रतिपुरुषं पादद्वयं पादत्रयं च कल्पनीयम् । कामतस्तु प्रत्येकं सर्वेषामपि निषेधातिक्रमस्य तुल्यत्वेन कृत्स्नदोषसम्बन्धात्कृत्स्नव्रतसम्बन्धो युक्तः सत्रिणामिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात् ।

एकं घ्नतां बहूनाञ्च यथोक्ताद् द्विगुणो दम इति प्रत्येकं दण्डद्वैगुण्यदर्शनाञ्च । यद्यप्येतदकामकारेऽपि तुल्यं तथापि वचनादेव तत्र पादप्रायश्चित्तविधानमिति न विरोधः । नन्वनेकानि गोमरणनिमित्तान्युक्तानि तेषां सन्देहे कथं निर्णय इत्यत आह ।

**हते तु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत् ।**
**लाला भवति दष्टेषु एवमन्वेषणं भवेत् ॥ ४९ ॥**

रुधिरेण प्रहारः कार्श्येन व्याधिः लालया च सर्पदंश इत्येवमाद्यभियुक्तप्रसिध्यान्वेषणं कार्यम् ।

ननु बाह्यलिङ्गाभावे अन्तरावयवभङ्गः कथं निश्चेयः इत्यत आह ।

**ग्रासार्थं चोदितो वापि अध्वानं नैव गच्छति ।**

योऽभीष्टग्रासार्थमपि न गच्छति नोपसर्पति योवा चोदितः

प्रेरितोऽप्यध्वानं वा न गच्छति सोन्तः पीडावानिति ज्ञेयम् । एवमव्यभिचारिभिरभियुक्तप्रसिद्धैरन्यैरपि लिङ्गैरन्विष्य तत्र तत्रोचितं प्रायश्चित्तं करणीयम् ।

ननूक्तेषु निमित्तविशेषेषूक्ता व्रतविशेषा भवन्तु अनुक्तेषु तु निमित्तेषु किं व्रतमित्यत आह ।

**मनुना चैवमेकेन सर्वशास्त्राणि जानता ।**
**प्रायश्चित्तं तु तेनोक्तं गोघ्नश्चान्द्रायणं चरेत् ॥५०॥**

येषु गोवधनिमित्तविशेषेषु प्रायश्चित्तविशेषा मयाभिहितास्तेषु त एवानुष्ठेया येषु पुनर्मया प्रायश्चित्तविशेषो नोक्तस्तेषु सर्वशास्त्रतत्त्वज्ञेनैकेन सकलमुनिमुख्येन तेन प्रसिद्धेन मनुनैवोक्तं चान्द्रायणप्रायश्चित्तम् एवं मदुक्तेतिकर्तव्यतया गोघ्नश्चरेत् ।

अयमभिसन्धिः । यथा अनुक्तविशेषेषूपपातकेषु चान्द्रायणमुपदिष्टं मनुना तदेवानुक्तविशेषे गोवधेप्युपपातकत्वाविशेषात्कर्तव्यं न तु स्मृत्यन्तरोक्तं विशेषप्रायश्चित्तमपीत्येतदेव दृढीकर्तुम् ऋष्यन्तरेभ्यो मनोर्वैशिष्ट्यप्रतिपादनायानेकविशेषणोपादानमिति । तथा च गोवधप्रायश्चित्तमभिधायाह मनुः ।

एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वेति ।

यदुक्तं सशिखं वपनं कृत्वा पादेङ्गरोमवपनमित्यादि तस्य कथंचिदसम्भवे कथमित्यत आह ।

**केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।**
**द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् ॥ ५१ ॥**

यस्तु लावण्यादिहानिभिया केशवापनं न चिकीर्षति स केशरक्षणार्थं यस्मिन्निमित्ते यद्व्रतमुपदिष्टं तद्द्विगुणमाचरेत् । परन्तु महापातकगोवधाऽवकीर्णव्यतिरिक्तनिमित्तेषु तत्र द्विगुणव्रताचरणेपि केशरक्षणं न भवत्येव ।

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवपनम् ।
ऋते महापतकिनो गोहन्तुश्चावकीर्णिनः ॥
इतिविशेषस्मरणात् ।
द्विगुणव्रताचरणेन केशरक्षणस्य सर्वत्र प्राप्तौ नियममाह ।

**राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।**
**अकृत्वा वपनं तेषां प्रायश्चित्तं विनिर्दिशेत् ॥ ५२ ॥**

राजाऽभिषिक्तः क्षत्रियः राजपुत्रो राज्यार्हकुमारः बहुश्रुतो ब्राह्मणो गौतमोक्तः ।

यथा स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येति हासपुराणकुशलस्तदपेक्षस्तद्वृत्तिरष्टाचत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीत इति । एतेषां वपनमकृत्वा अकारयित्वा प्रायश्चित्तमुपदिशेत् । अत्र चैतेषामेवेत्येव नयमो न त्वकृत्वैवेति ।

तेषामपि हारीतेन ।
राजा वा राजपुत्रो वा ब्रह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेदितिवपनस्मरणात् ।

अतएवापस्तम्बोप्येतेषामेव वपनाभावे व्रतद्वैगुण्यं तदुभयाभावेच पापतादवस्थ्यमाह ।

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
यस्तु नो वपनं कुर्यात्प्रायश्चित्तं कथं भवेत् ॥
केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।
द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत् ॥
यस्य न द्विगुणं दानं केशांश्च परिरक्षतः ।
तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत् ॥
यत्किञ्चित्क्रियते पापं सर्वं केशेषु तिष्ठति ।
तस्मात्सर्वप्रयत्नेन सशिखं कारयेद्द्विज इति ॥

ननु विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनमिति स्त्रियाः कोऽपि वपननिषेधात्कथं नात्र परिगणनमित्यत आह ।

सर्वान्केशान्समुध्दृत्य छेदयेदङ्गुलद्वयम् ।
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् ॥ ५३॥

सर्वं केशराशिमेकीकृतमूर्ध्वं धृत्वाऽग्रतोऽङ्गुलद्वयं छेदयेदेवं विधं नारीणामविधवानां कुमारीणामविवाहितानाञ्च शिरसो मुण्डनं स्मृतमाचार्यैः। नारीग्रहणेन सिद्धेऽपि कुमारीग्रहणे पुनरुपादानं तासामप्येवं विधमुण्डनप्राप्त्यर्थम् ।

यतः स्मृत्यन्तरे

सधवानां तु नारीणामलङ्काराय सर्वदा ।
केशसन्धारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तमैः ॥

इति सधवानामेव केशधारणं नियमितं नान्यासां। एवं च परिशेषाद्विधवानां सर्ववपनमेवाभ्यनुज्ञातं भवति ।

न च ।

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥

इति पर्युदासान्महापतकादिषु स्त्रीणामपि समूलमेव केशवपनं सिध्यतीति शङ्कनीयम् ।

केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु छेदयेदङ्गुलद्वयम् ॥

इति विशेषस्मरणेन तत्राप्यग्रच्छेदस्यैव विधानात् ।

नचैवं स्त्रीणां नेष्यते केशवापनमिति निषेधानुपपत्तिः। तस्य वापनशब्दशक्त्यैव समूलकेशवापनपरत्वात् । यद्यप्येतत्प्रायश्चित्तप्रकरणेऽभिहितं तथापि वाक्यबलाद्यत्र यत्र नारीकुमारीणां सामान्यवाक्येन तीर्थादौ मुण्डनप्राप्तिस्तत्र सर्वत्राप्येवं विधमेव मुण्डनमिति गमयति अन्यथा गोवधप्रायश्चित्तप्रकरणनियमितत्वेन प्रायश्चित्तान्तरेऽपि न स्यात्।

अत एव दिवोदासीये ।

सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम् ।

तीर्थादिषु सभर्तृणां स्यादेवं केशवापनम् ॥

इति साक्षादेव वचनमभिहितम् ।

किञ्च ।

क्षौरकर्म न शस्तं स्याद्योषितां तु वरानने ।
सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे ।
सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ॥

इति प्रभासखण्डीयसभर्तृकस्त्रीवपनपरिभाषायाः सर्वत्राप्यप्रतिहतत्वेन न क्वचित्समूलं वपनम् । नचेदमपि प्रभासतीर्थपरमेव प्रकरणादिति वाच्यम् । परिभाषायाः प्रकरणेनानियमात् । पित्र्ये तु द्विगुणा दर्भा इतिवत् । परिभाषात्वञ्चास्य सभर्तृकस्त्रीवपनमात्रविधिप्रतिपादकत्वात्

यदपि

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नानेन तस्मात्तांस्तत्र वापयेत्

इति वचनबलेन केशमूलवपनविधानमिति तदपि न पापानां केशमूलाश्रयणस्य वपनविध्यर्थवादतया स्वार्थविधिपरत्वाभावात् । तेन ह्यवाङ्क्ष्यत इत्यत्राप्रकरणत्वस्येव । तस्मात्स्त्रीणां न क्वचित्समूलं केशवपनमिति स्थितम् ।

पूर्वोक्तानामङ्गानां साधारण्यप्राप्तौ अकर्तव्ये केषांचिदपवादमाह ।

**न स्त्रियाः केशवपनं न दूरे शयनासनम् ।**
**नच गोष्ठे वसेद्रात्रौ नदिवा गामनुव्रजेत् ॥ ५४ ॥**
**न नदीसङ्गमे चैव अरण्येषु विशेषतः ।**
**न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत् ॥ ५६ ॥**

यदुक्तं सशिखं वपनं कृत्वेत्यादि तत्स्त्रिया न किन्तु द्व्यङ्गुलच्छेद एव । यच्चोक्तं सविशन्तीषु सविशेदिति तच्छयनासनं दूरे ग्रामाद्गृहाद्वा स्त्रिया न कार्यम् । यत्पुनर्गवां मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनुव्रजेदित्युक्तं

तदप्युभयं न स्त्रिया कार्यम् । अनुव्रजनविधिनैव नदीसगमारण्येष्वटन प्राप्त तदप्यपोह्यते । अनुव्रजनापवादे सिद्धे पुनर्वचन कथञ्चिद्ग्रामान्तरमनुव्रजनेपि नद्यादौ विशेषतो निषेधार्थम् । यदपि गोचर्मणा प्रावृत इत्युपसहारप्राप्तमजिनवासस्त्व तदपि स्त्रीणा न भवति तर्हि कि कार्यमित्यत आह व्रतमेव यथोक्तं प्राजापत्यादिकमेव कुर्यात् । एवकारो यथोक्ताङ्गनिवृत्तेर्द्योतनार्थम् ।

एवकारेण त्रिषवणस्नानादेरप्यपवादप्राप्तावाह ।

**त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा ।**
**बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् ॥५६॥**

यदुक्त त्रिसन्ध्यमवगाहनमिति तत्स्त्रीणामभ्यनुज्ञायते तथा सुराणामर्चनमधिक विधीयते । तथा तासामुक्त कृच्छ्रचान्द्रायणादिव्रत बन्धुमध्य एव करणीय नान्यत्रेति ।

व्रताचरणकालेस्थितिस्थानमाह ।

**गृहेषु सततं तिष्ठेच्छुचिर्नियममाचरेत् ॥ ५७ ॥**

व्रताचरणकालेपि गृहेषु गृहान्तिकेषु तिष्ठेत् वासोगृहान्तिके देय इति योगीन्द्रस्मरणात् । शुचिः,पापान्तरमकुर्वती नियम सप्राप्त प्रायश्चित्तमाचरेदिति ।

उक्तप्रायश्चित्तस्याकरणे बाधकमाह ।

**इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति ।**
**स याति नरकं घोरं कालसूत्रमसंशयम् ॥ ५८ ॥**
**विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते ।**
**क्लीबो दुःखी च कुष्ठी च सप्तजन्मनि वै नरः ॥५९॥**

यो गोवध कृत्वा इह कलौ प्रच्छादयितु रहस्यप्रायश्चित्तेनापाकर्तुमिच्छति सकालसूत्रसज्ञ घोर नरकमसशय निश्चित प्राप्नोति । तादृशनरकभोगानन्तर मनुष्यलोके उत्पन्नो नरो भूत्वा क्लीबो नपुंसको दुःखी रोगादिना कुष्ठी च सप्तजन्मनि प्रकर्षेण जायते इति ।

किं च यदि विभक्तौ न लक्षणा कथं तर्हि भाविनं घटं जानातीति विषयतायां कर्मत्वशक्ता द्वितीया विषयतैव द्वितीयार्थः क्रियाजन्यफलशालित्वापेक्षया लघुत्वादिति चेन्न । तर्हि ग्रामं गच्छतीत्यत्र कुतः कर्मत्वप्रतीतिर्लक्षणां विनेति विभावनीयमायुष्मता । आस्तां तत्रापि वृत्त्यन्तरमिति चेन्न क्लृप्तवृत्त्यैवोपपत्तेः ।

कृद्योगे षष्ठीशेष इत्यनेनैव षष्ठीर्भविष्यतीत्यत आह किं चेति घटमिति । घटविषयकज्ञानवान् इति बोधस्तत्र विषयत्वं द्वितीयार्थ इति विभक्तौ लक्षणाभवत्येवेति । अथ क्रियाजन्यफलशालित्वरूपकर्मत्वापेक्षया लाघवादखण्ड विषयतैव द्वितीयार्थोऽस्त्वित्याह विषयतैवेति तर्हि शक्त्या-विषयताया द्वितीयार्थत्वे गमनजन्योत्तरदेशसंयोगरूपकर्मत्वङ्कुत्र विना लक्षणा बोद्धव्यमिति विचारणीयमायुष्मता । अत्र क्रियाजन्यफलशालित्व कर्मत्व बहुस्थले दुष्टमित्यत आह विभावनीयमिति तत्रापि विषयत्वेपि । वृत्त्यन्तर व्यञ्जनारूपवृत्त्यन्तरं तथा च भाविनघट जानातीत्यादौ विषयत्व व्यञ्जनयैव बोद्धव्यमिति भावः । क्लृप्तवृत्त्यैव लक्षणारूपवृत्त्यैव ॥

मीमांसकास्तु अनुकूलव्यापारमात्रमाख्यातार्थः । रथो गच्छतीत्यादौ मुख्य प्रयोगस्तिङ इत्याहुस्तन्न यत्नत्वस्य जातित्वेन तस्यैव शक्यतावच्छेदकत्वात् कथं तर्हि पाकानुकूलता यत्नस्य भासत इति चेत् संसर्ग-विधयेत्यवेहि । कथं तर्हि जानातीच्छति यतते करो-तीत्यादयः प्रयोगाः । न हि ज्ञानाद्यनुकूलो यत्नोऽस्ति प्रतीयते वेति चेद् आश्रयतालक्षकत्वादाख्यातस्येति गृहाण ।

रथो गच्छतीत्यादिसाधारण्यायानुकूलव्यापारे शक्तिरित्याशयवता मीमांसकाना मतमाह मीमांसकास्त्विति यद्वा । नन्वाख्यातस्य कृधातोश्च न यत्नार्थकत्वं पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य चाप्रत्ययात् । प्रकृतिप्रत्ययोस्तुल्यतयान्वयायोगात् ॥ पौनरुक्त्यापत्तेश्चेत्यनुकूलव्यापार एवार्थोऽस्त्वित्यभिप्रायवता मीमांसकाना मतमाह मीमांसकास्त्विति । मुख्यप्रयोगः शक्त्या प्रयोगः । यत्नत्वस्य जातित्वेन लाघवात्तद्विशिष्ट एव शक्तिरित्यभिप्रायवानाह यत्नत्वस्येति । तस्यैव यत्नत्वस्यैव । तथा चैको द्वौ बहव इत्यादौ प्रकृतिप्रत्यययोरेकार्थत्ववद्यतते करोतीत्यत्राप्येकार्थत्वात्तत्र लक्षणेति भावः । इदमुपलक्षणं । रथो गच्छतीत्यादौ रथनोदनादिमति निश्चले गमनानुकूलव्यापारस्य सत्त्वेन गच्छतीति प्रयोगः स्यादित्यपि बोध्यम् । यदि च व्यापारत्वमखण्डोपाधिः । गमनविशिष्ट एवात्रव्यापारः प्रतीयत इति सूक्ष्ममीक्ष्यते तदा जानातीच्छति यतते द्वेष्टि विद्यते निद्रातीत्यादौ ज्ञानाद्याश्रयत्वमात्रस्य प्रतीयमानत्वेन धात्वर्थानुकूलकृतिव्यापारयोश्चाप्रतीयमानत्वेन चाश्रयत्वे लक्षणावश्यकीति । न च ज्ञानाद्यनुकूलव्यापारस्यात्ममनोयोगरूपस्य सत्त्वान्न लक्षणेति वाच्यम् विद्यत इत्यादौ विद्यमानत्वं सत्ता सा चात्र विद्यमानकालसम्बन्धरूपा । न तदनुकूलो व्यापारः गुणादावभावात् । एवं निद्रातीत्यत्रापि मिद्धानाडीमनःसंयोग एव निद्रा तदनुकूलासाधारणो व्यापारस्तदानीमात्मनि नास्ति अदृष्टं च साधारणमिति । न च मनो निद्रातीतिप्रत्ययः स्यात् मिद्धानाडीसंयोगस्य मनस्यपि सत्त्वादिति वाच्यम् परम्परासम्बन्धस्य निद्रात्वात् सचात्मन्येवास्तीति एवं विजातीयशरीरसंयोगोऽपि निद्राया प्रयोजकः सोऽप्यात्मन्येवेति । न च तत्र लक्षणास्वीकारे तुल्यमिति वाच्यम् व्यापारत्वस्याखण्डोपाधित्वकल्पने गौरवात् । धात्वर्थनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नतया रथो गच्छतीत्यादावाख्यातलक्षणां विना रथगमनयोरन्वयाभावाच्च । ननु पाकानुकूलत्वा

शेशक्त्यभावात्कथं तद्भासत इत्याह । कथमिति तर्हि आख्यातस्य यत्नवाचकत्वे । मस्गेति । इदमावयोः समानमिति भावः । अथ ज्ञाना द्यनुकूलयत्नस्य बाधात्तदनुकूलात्ममनोयोगरूपव्यापारस्यात्मनि सत्त्वाद्व्यापारे शक्तिरुच्यतामिति शङ्कते । कथमिति । आश्रयतेति । जानातीत्यादौ ज्ञानानुकूलयत्नस्य बाधादाख्यतस्याश्रयत्वे लक्षणा । आख्यातेन वर्त्तमान त्वादिकमन्यात्वर्थ एव बोध्यते । सविषयार्थकधातुयोगे वर्त्तमानत्वादीना धात्वर्थ एवान्वयः ॥ धात्वर्थस्याश्रयत्वे तच्च चैत्रे । तथा च चैत्रो घट जानातीत्यत्र घटविषयकवर्त्तमानज्ञानाश्रयश्चैत्र इति बोधः । एतेनाख्यातस्य न यत्ने न वा व्यापारे शक्तिः किं तु भावनापरपर्यायोत्पादनाया । तथा च चेतनाचेतनयोः साधारण्यात्सर्वत्राख्यातार्थे धात्वर्थोत्पादकतेति । तेन पचति रथो गच्छतीत्यादौ सर्वत्र मुख्य एव प्रयोगः पचतीत्यादौ पाकमुत्पादयतीति विवरणात् । रथो गच्छति गमनमुत्पादयति । जनातीत्यत्र ज्ञानमुत्पादयति यतते यत्नमुत्पादयतीत्यर्थात् ॥ कृञर्थश्चो त्पादकतैव । एवं पचति पाकमुत्पादयतीत्युत्पादकतार्थककरोतिना सर्वाख्यातविवरणात्किं करोतीति सामान्येनोत्पादनाप्रश्ने पचति पाकमु त्पादयतीत्युत्पादनाविशेषेणोत्तरमप्यत एव सङ्गच्छते । नचोत्पत्तेरुत्पत्त्यभावाच्चेत्र उत्पादयतीत्यत्र का गतिरिति वाच्यम् तत्रोत्पत्त्याश्रयत्वबोधकत्वात् ॥ उत्पादनार्थधातूत्तरवर्त्तिन अख्यातस्योत्पादनाश्रयार्थः । अनन्यलभ्यत्वात् । न च वह्निः पचतीति प्रयोगापत्तिरिति वाच्यम् । पाकादिधात्वर्थेनाक्षेपलभ्ययत्नस्याभावादिति रत्नकोशकारमतमप्यपास्तम् । चैत्रः पचतीत्यादौ यत्नस्यावश्यकतया प्रतीतेर्यत्न एवार्थोऽस्तु । यत्नत्वस्य जातित्वेन तस्यैव शक्यतावच्छेदकत्वं । लाघवाच्चोत्पादकत्वस्योपाधितया गौरवात् । इन्द्रियादीनामपि ज्ञानाद्युत्पादकत्वेन तेषामपि जानातीत्यादिप्रयोगापत्तेः चैत्रः पचतीत्यादावाक्षेपादिना वर्त्तमानयत्नस्यालाभाच्च । अस्मन्मते यत्नस्याख्यातार्थत्वे पचति पक्ष्यत्यपाक्षीदित्यत्र वर्त्तमानानागतातीतयत्नप्रत्ययादिति संक्षेपः ।

चिन्तामणिकृतस्तु जानातीत्यादौ धात्वर्थ एव चैत्रादौ साक्षादन्वेति आख्यातप्रतिपाद्यश्च कालः संख्या वा न तु यत्नोऽपि अयोग्यत्वादित्याहुस्तच्चिन्त्यम् । नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पत्तेः अन्यथा ओदनः पचतीत्यत्रोदनपाकयोः कर्मतासंसर्गेणान्वयः स्यात् ।

अथ चैत्रो घट जानातीत्यादौ धात्वर्थप्रकारकबोधे पदजन्यपदार्थोपस्थितित्वेनैव हेतुत्व न तु विभक्त्यर्थोपस्थितित्वेन तथा च ज्ञानस्य साक्षादेव चैत्रेऽन्वय इति मणिकारमतमाह चिन्तामणिकृतस्त्विति । धात्वर्थ एवेति । एवकारेण सख्याव्यवच्छेद । भावनाविशेष्ये सख्यान्वयाच्चैत्रस्य भावनाविशेष्यत्वाभावान्न चैत्रे सख्यान्वय इत्यर्थ । तर्हि आख्यातप्रतिपाद्य किमत आहाख्यातेति काल इति । कालो वर्त्तनानत्वादिः सख्याचैकत्वादिस्तत्र वर्त्तमानत्व धात्वर्थ एवान्वेतीत्यर्थः । अयोग्यत्वादिति । ज्ञानाद्यनुकूलयत्नस्यायोग्यत्वादित्यर्थः । तण्डुल पचतीत्यादौ पाके कर्मत्व प्रकार कर्मत्वे तण्डुल इति परम्परासम्बन्धेन पाके तण्डुलस्यान्वयः पाकस्य कृतौ कृतिश्चैत्रे इति साक्षादित्युक्त । स्तोक पचतीत्यादावभेदेनान्वयाद्भेदेनेत्युक्त । अन्यथा साक्षाद्धात्वर्थनामार्थयोरन्वयस्याव्युत्पन्नत्वाभावे ओदन इति । कर्मता ससर्गेणौदनप्रकारकपाकविशेष्यकान्वय.स्यादित्यर्थः । इदमुपलक्षण चैत्र पच्यते तण्डुल इत्यत्र कर्त्तृतासंसर्गेण चैत्रप्रकारकपाकविशेष्यकबोधः स्यादित्यपि बोध्यम् ।

वस्तुतो जानातीत्यादावाख्यातार्थानवभासे आख्यातार्थसंख्यान्वयो न स्यात्तस्या आख्यातार्थविशेष्यगामित्वनियमात् । विभक्त्यर्थाविशेषणीभूतो ना-

मार्थ आख्यातार्थविशेष्यः तेन चैत्र ओदनं पचतीत्यत्र तथाविधश्चैत्र आख्यातार्थविशेष्यो नत्वोदनः । द्वितीयार्थविशेषणत्वात् पच्यत इत्यत्र कर्म न कर्त्ता तृतीयार्थावरुद्धत्वात् स्थीयत इत्यत्र स्थित्यनुकूला कृतिरिति बोधात् आख्यातार्थे कस्यापि न विशेष्यत्वमिति संख्यानन्वितैव अत एवात्रौत्सर्गिकमेकवचनमेवेत्यूचुः । धात्वर्थविशेष्यकोऽत्रान्वयबोधः । नचैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः असाधुत्वादित्यपि कश्चित् । स्यादेतत् आख्यातार्थः कालः कुत्रार्थेऽन्वेतीति चेत् एकपदोपात्तत्वप्रत्यासत्त्या कृतावित्यवेहि धात्वर्थ इत्यपरे कथमन्यथा जानातीत्यादौ ज्ञाने वर्तमानत्वादि प्रतीयत इति ।

ननु विशेष्यतासम्बन्धेनाभेदातिरिक्तसंसर्गकप्रातिपदिकार्थप्रकारकबोध प्रति विशेष्यतासम्बन्धेन निपातकृत्तद्धितान्यतरजन्योपस्थितेर्हेतुत्वकल्पनयैवोदनः पचतीत्यादिवारणेऽपि जानातीत्यादौ धात्वर्थप्रकारकबोधे किं बाधकमत आह वस्तुत इति । तस्याः सङ्ख्यायाः । आख्यातार्थेति । एव चाख्यातार्थसङ्ख्यान्वयबोधत्वावच्छिन्न प्रति विभक्त्यर्थाविशेषणीभूतनामार्थोपस्थितेः कारणत्वमित्यर्थः । तेन जयेतेत्यादौ कृतिसाध्यत्वरूपाख्यातार्थविशेष्ये यागादौ सङ्ख्यानन्वयः । यागादेर्नामार्थत्वाभावात् । नन्वाख्यातार्थविशेष्य किमित्यत आह विभक्त्यर्थेति । तण्डुलं पचतीत्यादौ कर्मत्वविशेषणत्वेनोपस्थिते तण्डुले भावनाविशेष्यत्व स्यादतो भूतान्तमुक्त नामार्थ इति । विशेष्यतासम्बन्धेन समवायादिसंसर्गकाख्यातार्थभावनाप्रकारकशाब्दबोधत्वावच्छिन्न प्रतीतराविशेषणीभूतप्रथमान्तना-

मृजन्योपस्थितिः कारण । चन्द्र इव मुखमस्तीत्यादौ प्रथमान्तनामजन्योपस्थिते चन्द्रे तादृशशाब्दबोधः स्यादत उक्तमितराविशेषणीभूतेति । चन्द्रस्येवार्थविशेषणत्वेनेतराविशेषणीभूतत्वेनोपस्थित्यभावान्न दोषः । यद्वा आत्मन जानातीत्यत्र द्वितीयार्थविशेषणभूतात्मनि विशेष्यतासम्बन्धेन भावनाप्रकारकशाब्दबोधो न स्यादितीतरविशेषणत्वेन तात्पर्याविषयत्वार्थकमूतान्त । एव च तण्डुल पचतीत्यत्र तण्डुले तादृशभावनाप्रकारकान्वयबोधवारणाय नामार्थ इति प्रथमान्तनामार्थपरमिति । उदाहरणेनाख्यातार्थविशेष्यत्व दृढयति । तेनेति । तेन निरुक्तनामार्थस्याख्यातार्थविशेयत्वनिर्वचनेन । तथाविध. विभक्त्यर्थाविशेषणीभूतनामार्थः विभक्त्यर्थाविशेणीभूतस्येन्यस्य कृत्यमाह न त्विति । न त्वोदनरूपोर्थ आख्यातार्थविशेष्य इत्यर्थ. । चैत्र ओदन पचतीत्यत्र द्वितीयार्थः कर्मत्व विक्लित्तिरूप तच्च पाके विशेषणतया ओदन कर्मत्वविशेषणतया चेति तथा चोदनकर्मकप कानुकूलकृतिमाश्चैत्र इति बोध इत्यभिप्रायवानाह द्वितीयार्थ इति । प्राचीनमते चैत्रेण पच्यते तण्डुल इत्यत्र तृतीयार्थो वृत्तिः सा कृतौ प्रकारः कृतिविषयतासम्बन्धेन तण्डुले तथा च चैत्रवृत्तिपाकानुकूलकृतिविषयतण्डुल इत्यर्थः । नव्यमते यथा तण्डुल पचतीत्यत्र विक्लित्तिरूपफलप्रकारको बोधस्तथा पच्यते तण्डुल इत्यत्रापि फलप्रकारकबोधस्यानुभवसिद्धत्वात्फलमात्मने पदार्थः । तथाच चैत्रेण पच्यते तण्डुल इत्यत्र तृतीयार्थः कृतिः सा जन्यत्वसम्बन्धेन पाके स च पाको जन्यत्वसम्बन्धेन फले चैत्रस्तृतीयार्थ इति । एव च चैत्रोयकृतिजन्यो य. पाकस्तज्जन्यफलशाली तण्डुल इति बोधस्तत्र मतद्वयेपि न चैत्रो भावनाविशेष्यः कि तु तण्डुल इत्यभिसन्धायाह पच्यत इति कर्मेति कर्म कर्मीभूतस्तुण्डुल । आख्यातर्थविशेष्य इत्यर्थः । न कर्त्ता न चैत्रः अवरुद्धत्वात् । विशेषणत्वात् । स्थीयत इत्यत्र स्थित्यनुकूलकृतिरिति बोधस्तत्र विभक्त्यर्थाविशेषणीभूतनामार्थाभावात्सख्यानन्वितैवेत्याह . स्थीयत

इति अत्र स्थित्यनुकूलाकृतिरित्याख्यातार्थेन कस्यापि विशेष्यत्वमिति पाठः क्वचित् स्थित्यनुकूलाकृतिरिति न कस्याप्याख्यातार्थे इति पाठः । उभयत्र कृतिरित्यस्याख्यातार्थेऽन्वयः । सख्यानन्वये कथमेकवचनमित्यत आहात एवेति । अत एव सख्याया अनन्वयादेव प्रथमोपस्थितत्वादेकवचनमेव साध्विति भावः । अथ गगने न स्थीयत इत्यात्र गगनवृत्तिस्थित्यनुकूलायाः कृतेर्बाधात् धात्वर्थविशेष्यकत्वात्सर्वत्र भावप्रत्ययस्थले चैत्रेण सुप्यते गगने न स्थीयत इत्यादौ चैत्रवृत्तिः स्वापो वर्त्तमानो गगनवृत्तिः स्थितिर्वर्त्तमानेति धात्वर्थविशेष्यक एव बोधः स्वीक्रियत इत्यभिप्रायवता नव्यानां मतमाह धात्वर्थविशेष्यक इति । अत्र गगने न स्थीयत इत्यादौ । एव धात्वर्थविशेष्यकबोधस्वीकारे द्वित्वादीति । यथा विशेष्यस्य चैत्रादेर्द्वित्वादिविवक्षाया गच्छत इति द्विवचन तथा स्थितेर्द्वित्व विवक्षया स्थित्युतर भावप्रत्ययोत्तरमाख्यातस्यापि द्विवचन स्यादित्यर्थः कालः वर्त्तमानत्वादिः । एकपदोपात्तत्वप्रत्या सत्त्या स्वोपस्थापकाख्यातपदोपस्थाप्यत्वसम्बन्धेन । न च सख्याया अप्येकपदोपात्तत्वप्रत्या सत्त्या कृतावेवान्वयोस्त्विति वाच्यम् सख्यायाः कृतिविशेष्यान्वयित्वस्य व्युत्पत्तिसिद्धत्वात् । चैत्रो घटं जानातीत्यादौ वर्त्तमानज्ञानाश्रयश्चैत्र इति बोधस्तत्र वर्त्तमानत्वस्य धात्वर्थे ज्ञानेन्वयात् सर्वत्र धात्वर्थे एव कालान्वयोऽस्तु इति कस्यचिन्मतमाह धात्वर्थ इति ।

स्यादेतत् । भविष्यता अतीतत्वेप्याख्यातविशेषवाच्ये भविष्यत्त्वं च विद्यमानप्रागभावप्रतियोगित्वं विद्यमानध्वंसतियोगित्वमतीतत्वमिति पचति चैत्रे भाविकृतिप्रागभावमादाय पक्षति आद्यकृतिध्वंसमादायापाक्षीदिति स्यात् । न स्यात् आद्यकृतिप्रागभावस्यैव भविष्यत्प्रत्ययेन चरमकृतिध्वंसस्यैवातीतप्रत्ययेनाभिधानात् । अथौदनं पचतीत्य-

**ओदननिष्ठविक्लित्तिजनकव्यापारविशेषकर्तृत्वं प्रतीयते तत्र विक्लित्तिस्तदनुकूलव्यापारश्च कस्यार्थः । उच्यते विक्लित्तिः फलम् तद्धि द्वितीयाया अर्थः तदनुकूलो विलक्षणव्यापारो धात्वर्थः अनुकूलता च संसर्गः ।**

ननु यदि वर्त्तमानत्वस्य कृतावेवान्वयस्तदा भविष्यत्वातीतत्वयो' कालविशेषयोर्भाविकृतिप्रागभावमादायाद्यकृतिध्वंसमादाय च प्रारब्ध पाकचैत्रकृतावपि सत्त्वेन पर्चात चैत्रेपि भाविकृतिप्रागभावमादायभविष्यत्कृतिगोचर.पक्ष्यतीति आद्यकृतिध्वंसमादायातीतकृतिगोचरोऽपाक्षीदिति प्रयोग' स्यादित्याह स्यादेतदित्यादिना। समाधत्ते न स्यादाद्यकृतीत्यादिना। क्वचित्स्यादिति चैत्र इत्यपि पाठः। ओदननिष्ठेति ओदननिष्ठा या विक्लित्तिरवयवश्यैथिल्य तज्जनकव्यापारस्तदनुकूलविलक्षणक्रियारूपव्यापारविशेषः कर्त्तृत्व तदनुकूलकृतिमत्त्व तदनुकूलव्यापारो विक्लित्त्यनुकूलो व्यापारः तद्धि फल हि। तदनुकूल. फलानुकूल.। तथा-मत्त्योदननिष्ठविक्लित्त्यनुकूलव्यापारानुकूलकृतिमाश्चैत्र इ.त बोध इति ।

**ननु कर्मत्वं द्वितीयाया वाच्यं तच्च क्रियाजन्यफलशालित्वं न तु फलमात्रमिति चेन्न क्रियाया धातुवाच्यत्वात्। जन्यत्वाश्रयत्वयोश्च संसर्गमर्यादया लाभात् फलमात्र एव शक्तिकल्पनाद् अनन्यलभ्यो हि शब्दार्थः ।**

अथ फल द्वितीयार्थ इत्यत्र शङ्कते नन्विति । शालित्वमाश्रयत्व शक्तिकल्पनाद् द्वितीयायाः शक्तिकल्पनात् । ननु क्रियाया धात्वर्थत्वे जन्यत्वाश्रयत्वयोश्च ससर्गत्वे कथं क्रियाजन्यफलशालित्व कर्मत्वमिति प्राचीनप्रवाद इत्यत आहानन्यलभ्य इति । तथा च धात्वर्थमर्यादया लभ्यस्य ससर्गमर्यादयालभ्यस्य च न द्वितीयापदार्थत्व प्राचीनप्रवादस्तु निर्युक्तिकत्वाच्च श्रद्धेय इति

ननु फलमपि धातुलभ्यमेव फलानुकूलो व्यापारो हि धात्वर्थ इति चेन्न फलानुकूलत्वोपलक्षितो विलक्षणव्यापारो हि धात्वर्थो न तु फलानुकूलत्वमपि गौरवात्। नन्वेवं त्यजिगम्योः पर्यायता स्यात् तथा हि संयोगानुकूलं कर्म गमेरर्थः विभागानुकूलं कर्म त्यजेरर्थः तत्र यदि फलानुकूलत्वमुपलक्षणं तदा कर्ममात्रं शक्यं तत्र वाच्यं तथा च कुतो न पर्यायता। आस्तां पर्यायता को दोष इति चेन्न ग्रामं गच्छतीति वक्तव्ये ग्रामं त्यजतीति प्रतीत्यापत्तेः।

अथ क्रियाया धात्वर्थत्वे फलमपि धात्वर्थ एव भविष्यतीत्यत आह नन्विति। तत्कथमित्यत आह फलेति। ननु क्रियाजन्यफलशालित्व कर्मत्व। तत्र क्रिया फलविशेषण। यदि च फलानुकूला क्रिया धात्वर्थस्तत्र फल क्रियाया विशेषण तथा च फलप्रकारकक्रियाविशेष्यकक्रियाशक्तिग्रहे कथ क्रियाप्रकारकफलविशेष्यककर्मत्वग्रहः। न हि घटपदस्य घटत्वप्रकारकघटविशेष्यकशक्तिग्रहे कदापि घटप्रकारकघटत्वविशेष्यकशाब्दबोध इति फलस्य धात्वर्थविशेषणत्वे यद्यपि समाधातु शक्य तथापि लाघवमनुसृत्य तस्योपलक्षणत्वेन समाधत्ते फलानुकूलत्वमिति। वस्तुगत्या फलानुकूल्य क्रियायामपेक्षित न तु फलानुकूलत्व शक्यतावच्छेदकमिति भावः॥ एव फलानुकूलत्वस्योपलक्षणत्वेन संयोगानुकूलत्वविभागानुकूलत्वयोः सम्बन्धमात्रत्व फलविशेषावच्छिन्नव्यापारस्य धात्वर्थत्वाभावे त्यजिगम्योः कर्ममात्रमर्थो वाच्यः तथा च यथा घटकलशपदयोरेकार्थत्वेन पर्यायत्व तथा त्यागगमनपदयोः शक्याविशेषात्पर्यायत्व स्यादिति भावः। तत्र उभयत्र। ननु फलानुकूलव्यापारस्य

वच्छिन्नं प्रति गच्छतीति समभिव्याहृतद्वितीयाया ज्ञानत्वेन कारणत्वं । तथा चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मत्वीभूतसंयोगानुकूलव्यापारानुकूल यत्नवांश्चैत्र इति बोधः । एवं ग्रामं त्यजतीत्यत्र ग्रामकर्मत्वीभूतविभागानुकूलक्रियानुकूलयत्नवानिति बोध इति । अथफलावच्छिन्नो व्यापारो धात्वर्थः । तत्र फलमवच्छेदकं । आश्रयत्वं द्वितीयार्थस्तथा च ग्रामं गच्छति त्यजतीत्यादौ ग्रामनिष्ठोत्तरदेशसंयोगपूर्वदेशविभागानुकूलक्रियानुकूलयत्नवांश्चैत्र इति बोधः । तत्संयोगावच्छिन्नक्रियायाः गम्यर्थतया विभागावच्छिन्नक्रियायास्त्यत्यर्थतया त्यजिगम्योर्न पर्यायतापत्तिरित्यभिप्रायवता मतमाह न्यायभास्करकृत इति। ननु फलाश्रयत्वस्य द्वितीयार्थत्वेऽधोदेशसंयोगाश्रयत्वरूपफलाश्रयत्वस्य भूमावपि सत्त्वेन भूमौ पर्णं पततीत्यादौ भूमिपदोत्तर द्वितीया स्यादित्याह । न चैवं मति । एवं फलाश्रयत्वस्य द्वितीयार्थत्वविवक्षणे स्वसमभिव्याहृतेति स्वं सकर्मकधातुः । तथा चात्र पतधातोरकर्मकत्वेनाधोदेशसंयोगाश्रयत्वस्य धात्वर्थतावच्छेदकफलाश्रयत्वाभावान्न तस्य द्वितीयार्थत्वं सकर्मकधातुसमभिव्याहाराभावात् । नचाश्रयत्वस्य क्रियाजन्यत्वाभावेन कथं क्रियाजन्यफलशालित्वं कर्मत्वमिति लक्षणसङ्गतिरित्यत आह अत एवेति । अत एव क्रियाजन्यफाश्रयत्वस्य दोषदुष्टत्वादेव । कर्मजन्येति । वृक्षाद्विभागः । भूमौ संयोगः तदाश्रयत्वस्योभयत्र सत्त्वादित्यर्थ, । यद्वा द्वितीयार्थस्याश्रयतामात्रत्वे सप्तम्यर्थाभेदापत्त्या सप्तमीस्थाने द्वितीया स्यादिति शङ्कते न चैवमिति । एवं द्वितीयार्थस्य सप्तम्यर्थाभिन्नत्वे । स्वसमभिव्याहृतेति तथा च सकर्मकधातुसमभिव्याहारे धात्वर्थतावच्छेदकफलाश्रयत्वबोधः । अन्यत्र सप्तमीसमभीव्याहारे चाधिकरणत्वबोध इति न दोषः । तत्रापि फलस्यावच्छेदकत्वत्यादिनोपि । कर्मत्वमिति । तादृशव्यापारावच्छेदकीभूताधः संयोगस्य भूमावपि सत्त्वाद्भूमौ कर्मत्वं दुस्त्याज्यमित्यर्थः । पतत्यर्थ इति । पतत्यर्थफलस्यावच्छेदकत्वाभावे व्यापारमात्र पतधात्वर्थ इति न भूमौ कर्मत्व तादृशफलाश्रयत्वाभावस्य भूमौ सत्त्वा-

आदित्यः । सङ्क्ष्यत इत्यत्र क्रमो मे दीत्वं गमेरिण्मे इति इट् प्रसज्येत । शतरि मसंज्ञा सावकाशेति मिङ्क्षु वक्ष्यमाणाभिरस्मदादिभिः संज्ञाभिर्बाध्यत्वं नाशङ्कनीयम् । सावैम्म इति वचनं ज्ञापकं मिङां मसंज्ञाऽपि भवतीति ॥

इङानं दः ॥ १५० ॥

इङिति प्रत्याहार इडित्यतः प्रभृति आ झङो ङकारेण । इङ च आनश्च दसंज्ञौ भवतः । इट् वहि महि थास् आथाम् ध्वम् त आताम् झङ् । आन इति शानो गृह्यते ॥

मिङस्त्रिशोऽस्मद्युष्मदन्याः ॥ १५१ ॥

मिङो मसंज्ञानि दसंज्ञानि च त्रीणि त्रीणि वचनानि अस्मद्युष्मदन्य इति एवंसंज्ञानि भवन्ति । मिप् वस् मसित्यस्मद् । सिप् थस् थेति युष्मद् । तिप् तस् झीत्यन्यः । दानामपि । इट् वहि महि इत्यस्मद् । थास् आथां ध्वमिति युष्मद् । त आतां झङित्यन्यः । मिङ इति किम् । अनुत्तरस्य दस्य मस्य च ग्रहणार्थम् । त्रिश इति संख्यैकाद्वीप्सायामिति शस् ॥

साधने स्वार्थे ॥ १५२ ॥

अस्मदादयोऽन्वर्थसंज्ञा अनुवर्तन्ते । लस्येत्यधिकृत्याविशेषेण मिङादयो विहितास्तन्नियमोऽयम् । स्वस्यार्थः स्वोऽर्थो वा स्वार्थस्तस्मिन् स्वार्थे साधने ऽस्मदादयो वेदितव्याः । अस्मत्पदस्यार्थे साधने ऽस्मत्त्रिकं युष्मत्पदस्यार्थे साधने युष्मत्त्रिकमाभ्यामन्यस्यार्थे साधने ऽन्यत्रिकं भवति । अस्मदाद्यर्थानां साधनत्वे सति नियमो

ऽयम् । ततोऽस्मदादिपदानामनुप्रयोगे सत्यसति चास्मदादयो भवन्ति । अहं पचामि । आवां पचावः । वयं पचामः । पचामि । पचावः । पचामः । त्वं पचसि । युवां पचथः । यूयं पचथ । पचसि । पचथः । पचथ । स पचति । तौ पचतः । ते पचन्ति । पचति । पचतः । पचन्ति । एवं द्विविधावपि योज्यम् । भावे ऽस्मद्युष्मदर्थयोरभावात् भावस्य चाभ्यामन्यत्वादेकत्वाच्च तस्मिन् साधने ऽन्य एव भवति । आस्यते भवता । ग्लायते भवता । यत्रास्मदाद्यर्थां युगपत् साधनं तत्र क इष्यते । पूर्वनिर्णयेन यः पूर्वः । अत्र किमस्मदर्थ एव साधनं ऽस्मद् भवति इत्यवध्रियते आहोस्विदस्मदर्थे साधने ऽस्मदेव भवतीति । उभयथाऽप्यदोषः सर्वेषां नियतत्वात् । ननु द्वितीये पक्षे त्वया कुर्वाणेनेत्यत्र दोषः । मैवम् । त्रिकापेक्षया नियमो न साधनापेक्षया ॥

**प्रहासे मन्यवाचि युष्मन्मन्यतेरस्मदेकवच्च ॥१५३॥**

मन्य इति मन्यतेरेकदेशः । ब्रूते इति वाक् । मन्यो वाक् यस्य प्रहासस्य तस्मिन् मन्यवाचि प्रहासे गम्यमाने युष्मद्भवति मन्यतेश्चास्मद्भवति एकवच्च । अस्मद्युष्मदोर्व्यत्ययार्थोऽयमारम्भः। एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पिता । एहि मन्यसे रथेन यास्यामीति प्राप्तम् । एवमेहि मन्ये ओदनं भोक्ष्यसे न हि भोक्ष्यसे भुक्तः सोऽतिथिभिः । द्वित्वबहुत्वविवक्षायामपि मन्यतेरेकवद्भावो भवति। एवं मन्ये रथेन यास्यथ न यास्यथेति । प्रहास इति किम् । एहि मन्यसे ओदनं भोक्ष्य इति सुष्ठु मन्यसे साधु मन्यसे ॥

एकद्विबहवश्चैकशः ॥ १५४ ॥

यान्यस्मद्युष्मदन्यसञ्ज्ञानां संज्ञित्वेनोपात्तानि षट् त्रिकाणि तान्येकश एक द्वि बहु इत्येवंसंज्ञानि भवन्ति । मिबित्येकः । वसिति द्विः । मसिति बहुः । एवं शेषेषु त्रिकेषु योज्यम् । अस्मदादिसञ्ज्ञाः पुंल्लिङ्गा एकादिभिः सह समाविशन्ति ॥

सुपश्च ॥ १५५ ॥

त्रिश इति वर्तते । सुपश्च त्रिकाणि एकद्विबहुसंज्ञानि भवन्त्येकशः । सु इत्येकः । औ इति द्विः । जसिति बहुः । एवं शेषेषु त्रिकेषु नेयम् । उभयत्र चशब्दः साधने स्वार्थे इत्यस्यानुकर्षणार्थः । एकार्थे साधने एको मिप् भवति । द्व्यर्थे द्विर्वस् । बह्वर्थे बहुर्मस् । एवं मिङ्क्षु सुप्सु च योज्यम् । ननु च साधने स्वार्थे इत्येतन्मिङ उपपद्यते यतः साधनं कारकं क्रियाया निर्वर्तकं क्रिया च ध्वर्थः । धोश्च मिङो विहिता इति साधनवाचित्वोपपत्तेः । सुपस्त्वक्रियावाचिनो ङ्याम्मृदो विधीयन्त इति तत्र साधने स्वार्थे इत्येतन्न घटते । नैष दोषः । अक्रियावाचिनोऽपि विधीयमानाः सुपः क्रियावाचिपदान्तरमाकाङ्क्षन्ति । पदान्तरवाच्यायाः क्रियायाः साधनभावोपपत्तेः सुप्स्वपि साधने स्वार्थे इत्ययं व्यवहारो युज्यते । देवदत्तः पचति । देवदत्तौ पचतः । देवदत्ताः पचन्ति । यत्रापि क्रियापदं न प्रयुज्यते वृक्षः प्लक्ष इति तत्राप्यस्ति भवतीति परः सन्निहितस्तदपेक्षया व्यवहारः । मिङः सामान्येन धुमात्राद्विधीयन्ते सुपश्च मृन्मात्रात्तेषां सङ्करेण प्राप्तौ

नियमोऽयम् । त्यनियमोऽर्थनियमो वा । एकार्थ एव साधने एको भवति द्व्यर्थ एव साधने द्विर्भवति बह्वर्थ एव बहुर्भवतीति त्यनियमः । एकार्थे साधने एक एव भवति द्व्यर्थे द्विरेव भवति बह्वर्थे बहुरेव भवतीत्यर्थनियमः । त्यनियमपक्षे सुपो भेरिति वचनं ज्ञापकमेकत्वादीनामभावेऽप्युत्पद्यन्ते भेः सुप इति । अथनियमपक्षे एकत्वादयो नियता त्यान्न व्यभिचरन्ति त्याः पुनरनियता एकत्वादीनामभावे व्यतिकरणेन भिसञ्ज्ञकेभ्यो भवन्ति । तत्र सुपो भेरित्युपि कृते सुबन्तं पदं भवति ॥

## विभक्ती ॥ १५६ ॥

सुप इत्यनुवर्तते त्रिश इति च । सुपां त्रीणि त्रीणि वचनानि विभक्तीसंज्ञानि भवन्ति । सु औ जसिति त्रिको वर्गस्तस्य विभक्ती इति संज्ञा । त्रिकसमुदाये संज्ञा विहिता अवयवे ऽप्युपचर्यते । एवं सर्वत्र सुपां त्रिकेषु योज्यम् । मिङां विभक्तीसंज्ञायां न गुणो नापि दोषः । विभक्तीशब्दस्य कथं सिद्धिः । विपूर्वाद्भजेः क्तिच्कृतौ्खाविति क्तिच् तस्मात् कृदिकारादक्तेरिति ङीविधिः । महासंज्ञाकरणमुत्तरार्थम् ॥

## तासामापपरास्तद्धलश्चः ॥ १५७ ॥

तस्य विभक्तीशब्दस्य हलोऽचश्च आकारपकारपरास्तासां विभक्तीनां यथासंख्यं संज्ञा भवति । वा इप् भा अप् का ता ईप् इति एताः संज्ञाः । सुपस्त्रिश इति चानुवर्तते । सु औ जसिति वा । अम् औट् शसिति इप् । टा भ्यां भिसिति भा । ङे भ्यां भ्यसिति अप् । ङसि

भ्यां भ्यसिति का । ङस् ओस् आमिति ता । ङि ओस् सुप् इति इप् । तासां ग्रहणं सुब्विभक्त्युपादानार्थम् । सपूर्वा-यावाया इत्येवमाद्यो निर्देशाः सौत्राः ॥

इत्यभयनन्दिविरचितायां जैनेन्द्रव्याकरणमहावृत्तौ प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

## समर्थः पदविधिः ॥ १ ॥

परिभाषेयम् । समर्थपदाश्रयत्वात् समर्थः । पदसम्ब-न्धी विधिः पदविधिः । सर्वः पदविधिः समर्थो वेदितव्यः । समर्थानां पदानां विधिर्वेदितव्य इत्यर्थः । द्विविधं साम-र्थ्यमेकार्थीभावः परस्परव्यपेक्षा च । तत्र सविधिनामधुड्-विधिषु स्वभावत एकार्थीभावः सामर्थ्यमन्यत्र व्यपे-क्षा । एकार्थीभावे सङ्गतार्थः संसृष्टार्थो वा समर्थः । व्यपे-क्षायां सम्बद्धार्थः सम्प्रेक्षितार्थो वा समर्थः । वक्ष्यति इप् तच्छ्रितातीतपतितगतात्यस्तैः । धर्मं श्रितो धर्मश्रितः । सम-र्थग्रहणं किम् । व्याचष्टे मुनिर्धर्मं श्रितः शिष्यो गुरुकुलम् । अत्र व्यपेक्षा नास्ति । भा गुणोक्त्यार्थेनोनैः । मदेन पटु-र्मदपटुः । समर्थग्रहणं किम् । दन्ती भ्रमति मदेन पटुः शास्त्रेण । अप्तदर्थार्थबलिहितसुखरक्षितैः । रथाय दारु रथदारु । समर्थग्रहणं किम् । गच्छ त्वं रथाय दारु देवद-त्तस्य गेहे । का भीभिः । संसाराद्भयं संसारभयम् । समर्थग्रहणं किम् । ध्यानी निःक्रामति संसाराद्भयमरण्ये । ता । मोक्षस्य मार्गो मोक्षमार्गः । समर्थ ग्रहणं किम् । अनन्तसुखं मोक्षस्य मार्गः स्वर्गस्य व्रतम् । ईप्शौण्डैः । अक्षेषु शौण्डो ऽक्षशौण्डः । समर्थग्रहणं किम् । मूढः शक्तोऽक्षेषु शौण्डः पिबति पानागारे । पदग्रहणं किम् ।

तिष्ठतु दध्यशान त्वं शाकेन । तिष्ठतु कुमारी च्छत्रं हर देवदत्तात् । वर्णविधौ समर्थपरिभाषा नावतरतीत्यानन्तर्यमात्रेण यणादेशस्तुग्विधिश्च भवति । वा पदस्येत्यत्र पदग्रहणं द्विमात्रस्य विशेषणमिति पदविधिरयं न भवतीति विकल्पेन तुक् ॥

सः ॥ २ ॥

स इत्ययमधिकारो वेदितव्य आ पादपरिसमाप्तेः । समुदायवाक्यपरिसमाप्तिश्चाश्रीयते तेन पदसमुदाये ससंज्ञा न प्रत्येकमिति । वक्ष्यति यावद्यथावधृत्यसादृश्ये । यथावृद्धमतिथीन् भोजय । नित्यत्वात् सविधेरस्वपदविग्रहेणार्थः प्रदर्श्यते ये ये वृद्धा इति । वीप्सायां यथाशब्दः । स इति पुंलिङ्गनिर्देशः किमर्थः । हादिभिर्विशेषसंज्ञाभिः समावेशो यथा स्यात् ॥

सुप् सुपा ॥ ३ ॥

सुबन्तं सुबन्तेन सह सो भवतीत्येतदधिकृतं वेदितव्यमा पादपरिसमाप्तेः । वक्ष्यति इस्रच्छ्रितेत्यादि । धर्मश्रितः । लक्षणश्चेदं सुबन्तं सुबन्तेन सह सो भवति । यदृच्छया ऽतर्कितोपस्थिते चित्रीकरणे वा ऽर्थमिष्यते । तेन काकतालीयादयः सिद्धाः । तथाहि यदृच्छया तालस्य पतनं सन्निहितं काकश्चातर्कित उपस्थितः स काकस्तेन तालेन पतता हतः । अस्मिन्नर्थे ऽनयोः सामान्येन सः । काकश्च तालश्च काकतालं तदिव काकतालीयम् । इवे प्रतिकृताविस्यधिकृत्य कुशाग्राच्छ इति चानुवर्तमाने साद्विषयादिति च्छो भवति । एवमजाकृपाणीयमन्धकवर्तकीयम् ॥

हः ॥ ४ ॥

अधिकारोऽयम् । यानित ऊर्दुर्ध्वमनुक्रमिष्यामो हसंज्ञास्ते वेदितव्याः षमित्यतः प्राक् । वक्ष्यति स्तोके प्रतिना । सूपप्रति । शाकप्रति । अस्वपदेन विग्रहः । अस्त्यत्र किञ्चित् सूपस्य मात्रा स्तोकमिति वा । अत्रान्ये मन्यन्ते अनव्ययस्याव्ययभवनमव्ययीभाव इत्यन्वर्थसंज्ञा कर्तव्या । एतच्चायुक्तम् । असंख्यस्य झिसंज्ञा युज्यते । अस्य च संख्या विद्यते । उपकुम्भेन । उपकुम्भाभ्याम् । उपकुम्भैः । दोषः खल्वपि झिसंज्ञायां झिसर्वनाम्नोऽक् प्राटेरिति यथेहाग्भवति । उच्चकैः । नीचकैरिति । एवमिहापि प्राप्नोति उपाग्निकं प्रत्यग्निकमिति । तथा खित्यझेर्मुमच इति झेः प्रतिषेध उच्यते दोषामन्यमहः दिवामन्या रात्रिः । स इहापि प्राप्नोति । उपकुम्भंमन्यः। उपमणिकांमन्यः । इह च अस्य च्वाविति झेः प्रतिषेधो वक्ष्यति दोषाभूतमहः दिवाभूता रात्रिरिति । स इहापि प्राप्नोति उपकुम्भीभूतः । उपमणिकीभूतः । तस्माल्लघीयसी ह इति संज्ञा युक्ता । यद्येवं कृकमिकंसकुम्भकुशाकर्णीपात्रेऽतो झेरित्यनेन सत्वस्य प्रतिषेधो न प्राप्नोति उपपयःकार इति । अद्युस्थस्येति तत्र वर्तते । हसे च द्युस्थो भवतीति प्रतिषेधः सिद्धः । पूर्वपदप्राधान्यञ्च सहस्याभिधानवशाज्ज्ञेयम् । हप्रदेशा हादित्येवमादयः ।

**झि विभक्त्यभ्यासर्द्ध्यर्थाभावातीत्यसंप्रतिव्यृद्धिशब्दप्रभवपश्चाद्यथानुपूर्व्ययौगपद्यसंपत्साकल्यान्तोक्तौ ॥ ५ ॥**

विभक्ती-अभ्यास-ऋद्धि-अर्थाभाव अतीति-असंप्रति-व्यृद्धि-शब्दप्रभव-पश्चात्-यथा-आनुपूर्व्य-यौगपद्य-सम्पत्-साकल्य-अन्तोक्ति इत्येतेष्वर्थेषु यत् झिसंज्ञं वर्तते तत् सुबन्तेन समर्थेन सह हसंज्ञकः सो भवति । विभक्त्यर्थः कारकमधिकरणादि । स्त्रीषु कथा वर्तते । अधिस्त्रि । अधिकुमारि । ईबन्तेन वृत्तिः । हश्चेति नपुंसकलिङ्गातिदेशः । प्रो नपीति प्रादेशः । ह्रादिति सुप उप् । अभ्यासः समीपम् । उपकुम्भम् । उपगुरु । कुम्भस्याभ्यास इत्यर्थप्रदर्शनं तान्तेन वृत्तिरिति केचित् । तदयुक्तम् । उपशब्दोऽयं द्योतकः स उत्तरपदार्थव्यतिरेकं न जनयति अभ्यासादीनान्तु शब्दानां वाचकानां सन्निधाने व्यतिरेकः प्रतीयते यथा धवश्च खदिरश्चेत्यस्यार्थे समुच्चयो धवखदिरस्य तस्माद्धान्तेन वृत्तिः । विभूतेराधिक्यं ऋद्धिः । मद्राणां ऋद्धिः सुमद्रं सुमगधं वर्तते । पूर्वपदार्थस्य प्राधान्ये हसः । यदा तु मद्रा ऋद्ध्या विशिष्यन्ते तदा शोभना मद्राः सुमद्रा इति तिकुप्रादय इति षसः । अर्थाभाव उत्तरपदार्थप्रध्वंसः । अभावो मक्षिकाणाममक्षिकम् । विमक्षिकम् । निर्मक्षिकम् । अर्थग्रहणं किम् । धर्माभावे इतरेतराभावे च मा भूत् । न भवति ब्राह्मणो गौरश्वो न भवतीति । अतीतिरतीतत्वम् । स्वत एवातिक्रान्तत्वमित्यर्थः । अतीतानि तृणानि अतृणम् । नितृणम् । एवं निशीतं निवातं वर्तते । न सम्प्रति असम्प्रति नेदानीमित्यर्थः । न सम्प्रति तैसृकमतितैसृकम् । नायं तैसृकस्याच्छादनस्योपभोगकाल इत्यर्थः । तिसृका नाम ग्रामस्तत आगतं तैसृकम् । विगम ऋद्धेर्व्यृद्धिः । गन्दिकानामृद्धेर्विगमो

दुर्गव्रिकम् । दुर्यवनम् । शब्दप्रभवः शब्दस्य प्रकाशमानता । श्रीदत्तस्य शब्दप्रभव इतिश्रीदत्तम् । तच्छ्रीदत्तमहो श्रीदत्तम् । श्रीदत्तशब्दो लोके प्रकाशत इत्यर्थः । पश्चात् । रथानां पश्चादनुरथं पादातम् । यथार्थो योग्यता । अनुरूपं सुरूपो वहति । सादृश्यमपि यथार्थः । उत्तरत्रासादृश्य इति प्रतिषेधाज्ज्ञायते । सदृशं व्रतस्य सव्रतम् । सशीलम् । हे काल इति सहस्य सादेशः । पूर्वं पूर्वमनुपूर्वं तस्य भाव आनुपूर्व्यम् । अनुज्येष्ठं प्रविशन्तु भवन्तः । ज्येष्ठानुक्रमेणेत्यर्थः । आनुपूर्व्यं विन्यासविशेष इति यथार्थात् पृथगुक्तम् । यौगपद्यसम्पत्साकल्यान्तोक्तिषु सहशब्दो वर्तते । यौगपद्यमेककालता । सचक्रं धेहि । युगपच्चक्रे धेहीत्यर्थः । सधुरं प्राज । युगपद्धुरौ प्राजेत्यर्थः । सम्पत् सिद्धिः । आत्मभावनिष्पत्तिरित्यर्थः । वृत्तस्य सम्पत् क्षत्रस्य सम्पत् सवृत्तं साधूनाम् । सक्षत्रं शालङ्कायनानाम् । साकल्य । सतृणमभ्यवहरति । सर्वेण सहाभ्यवहरतीत्यर्थः । अन्तः समाप्तिः । प्राभृतपर्यन्तमधीते । एवं सबन्धं सटीकम् । अत्र परिसमाप्तिरसाकल्येऽप्यध्ययने प्रतीयत इति साकल्ये नान्तर्भावः । इह आचण्डालं प्रयच्छतीति अन्तोक्तिरभिविधिरप्यस्ति । परत्वात् पर्यपाङ्बहिरञ्चवः कयेति विभाषा भवति । आचण्डालमाचण्डालेभ्य इति । वीप्सायां वा हसो वक्तव्यः । प्रत्यर्थम् । प्रतिपर्यायम् । अर्थमर्थं प्रति । पर्यायं पर्यायं प्रति ॥

**यावद्यथावधृत्यसादृश्ये ॥ ६ ॥**

प्रसक्तस्य परिमाणमवधृतिः । सादृश्यं तुल्यता । यावत्

यथा इत्येतौ शब्दाववधृति असादृश्य इत्येतयोरर्थयोः सुपा सह यथासंख्यं हसो भवति । यावदमत्रं यावदवकाशमतिथीन् भोजय । यावन्त्यमत्राणि तावतो भोजयेत्यवधार्यते। यथावृद्धं साधूनर्चय। यथापटु। यथाध्यापकम्। वृद्धानतिक्रमेणेत्यर्थः।उत्तरपदार्थानतिवृत्तिर्यथाशब्दस्यार्थो वीप्सा सादृश्यञ्च। अवधृत्यसादृश्य इति किम्। यावद् दत्तं तावद्भुक्तम्। यथा देवदत्तस्तथेन्द्रदत्तः। पूर्वेणैव यथार्थे हसे सिद्धे सादृश्ये प्रतिषेधार्थमिह यथाशब्दोपादानम्। गुणक्रियाछायासादृश्ये हसो वक्तव्यः॥ गुणः। यथाशक्ति। यथाबलम्। क्रिया। यथोपदेशम्। छाया। यथासुखम्। न वक्तव्यम्। अत्राप्युत्तरपदार्थानतिवृत्तिर्गम्यते॥

## स्तोके प्रतिना ॥ ७॥

भीति निवृत्तम्। स्तोकं मात्रा। स्तोकेऽर्थे प्रतिना सह सुबन्तं हसो भवति। सूपस्य मात्रा सूपप्रति। शाकप्रति। स्तोक इति किम्। वृत्तं प्रति विद्योतते विद्युत्। लक्षणेऽत्र प्रतिशब्दो वर्तते॥

## परिणाऽक्षशलाकासंख्याः ॥ ८ ॥

अक्षशब्दः शलाकाशब्दः संख्या च परिणा सह हसो भवति। परिणाक्षशलाकासंख्यमिति सिद्धे बहुवचननिर्देशादिषुसंग्रहो लब्धो वेतिसिंहावलोकनाद्वा। अक्षादयो यदा भान्ता एकत्वञ्चाक्षशलाकयोः पूर्वोक्तस्यान्यथावृत्तौ परिशब्दो यदा वर्तते कितवव्यवहारविषये तदा वृत्तिरिष्यते। तथाहि पञ्चिका नाम द्यूतं यत्र पञ्चाक्षाः

शलाका वा पात्यन्ते पञ्चस्वेकरूपासु पातयिता जयत्यन्यथा पाते जीयते । अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये अक्षपरि । शलाकापरि । संख्या । एकपरि । द्विपरि । त्रिपरि । चतुःपरि । परिणेति किम् । सुबन्तमात्रे मा भूत् । अक्षादय इति किम् । पाशकेनेदं न तथा वृत्तम् । एकत्वेऽक्षशलाकयोरिति किम् । अक्षाभ्यां न तथा वृत्तम् । कितवव्यवहार इति किम् । अक्षेणेदं न तथावृत्तं शकटे ॥

वा ॥ ९ ॥

वेत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद्वा भवतीति वेदितव्यः । इत उत्तरः सविधिर्वा भवति पक्षे वाक्यमपि साधु भवति । पूर्वस्तु सविधिर्नित्यः । तेनास्वपदेन तत्र विग्रहो ज्ञेयः ॥

पर्यपाङ्बहिरञ्चवः कया ॥ १० ॥

परि अप आङ् बहिस् अञ्चु इत्येते सुबन्ताः कान्तेन सह वा हसो भवति । परित्रिगर्तं वृष्टो देवः । वाक्यपक्षे परेर्वर्ज्जने वा वचनमिति वा द्वित्वम् । परि परि त्रिगर्त्तेभ्यः । परि त्रिगर्त्तेभ्यः । अप त्रिगर्त्तेभ्यः । वर्जनेऽपपरिभ्यामिति का । आपाटलिपुत्रं वृष्टो देवः । आ पाटलिपुत्रात् । आकुमारं यशः समन्तभद्रस्य । आ कुमारेभ्यः । काङमर्यादावचन इति मर्यादाभिविध्योः का । बहिर्ग्रामम् । बहिर्ग्रामात् । इदमेव ज्ञापकं बहिःशब्दयोगे का भवति । अञ्चु । प्राग्ग्रामात् । प्राची दिग् रमणीया इति वगृह्य दिक्छब्देभ्यो वा केभ्योऽस्ताद्दिग्देशयोः काल इति अस्तात् । तस्याञ्चेरुबित्युप । सुपो झेरिति सुप उप् ।

पदत्वात् कुत्वम् । तेन योगे ता प्राप्ता तां बाधित्वा- दिक्छब्दत्वात् का प्राप्ता तां बाधित्वा तातसर्थत्थेनेति तायां प्राप्तायां अञ्चुप्र इति का भवति । कथेति किम् । परिगतः । अपगतः । वर्जनार्थाभावात् का नास्तीति कुतिप्रादय इति नित्यं षसो भवति ।

## लक्षणेनाभिमुख्ये ऽभिप्रती ॥ ११ ॥

लक्ष्यतेऽनेनेति लक्षणम् । तद्वाचिना सुबन्तेन सह अभिप्रतिशब्दावाभिमुख्ये वर्तमानौ वा हसो भवति । अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि शलभाः पतन्ति । अग्निमभि पतन्ति । अग्निं प्रति पतन्तीति वाक्यम् । अत्राग्निना चिह्नेन शलभपातो लक्ष्यते । वीप्सेत्थम्भूत- लक्षणेऽभिनेप् । भागे चानुप्रतिपरिणेति चेप् । लक्षणेनेति किम् । स्रुघ्नं प्रति गतः । दिङ्मोहात्तत्रैव पुनरागत इत्यर्थः । आभिमुख्य इति किम् । अभ्यङ्का गावः । अभिनवः प्रतिनवोऽङ्को यासामिति । यद्यपि पूर्वपदार्थप्रधानो हसस्तथापोहार्थविशेषाभावेऽन्यपदार्थेऽपि स्यात् । अभि- प्रती इति किम् । येनाग्निस्तेन गतः । येनेत्यस्याग्निना सह हसो न भवति ॥

## यत्समया ऽनुः ॥ १२ ॥

समयावाची अनुशब्द उपचारात् समया । यस्य समया यत्समया । मुख्येन समयाशब्देन योगाभावादिप्न भवति । अत एव नक्षितेत्यादिनाऽपि न तासप्रतिषेधः । अनुर्यत्समयावाची तेन लक्षणभूतेन सह वा हसो भवति । अनुवनं गतोऽशनिः । वनमनुगत इति वाक्यम् । भागे

चानुप्रतिपरिणेति लक्षणेप । वनेन समीपस्थमशनिगमनं लक्ष्यते । भिविभक्त्यभ्यास इत्येवं सिद्धे विकल्पार्थं वचनम् । यत्समयेति किम् । वृक्षमनु विद्योतते ॥

## आयामिना ॥ १३ ॥

अनुरिति वर्तते । लक्षणेनेति च । अनुनायामिना लक्षणभूतेन सह वा हसो भवति द्वयोः प्रकृष्टहीनयोर्दीर्घयोर्योगे ऽनुः प्रयुज्यमान उभयोर्दीर्घत्वमाह । तत्र प्रसिद्धायामेन लक्षणेनातिशयेन दीर्घेण वा हसवृत्तिर्भवति । अनुगङ्गं वाराणसी । अनुसीनं पाटलिपुत्त्रम् । वाक्यमपि साधु भवति । गङ्गामन्वायता वाराणसी । नद्यायामेन पत्तनायामो लक्ष्यते । लक्षणे इप । अथवा हेतावनुना भार्थइतीब् । गङ्गया सहायतेत्यर्थः ॥

## तिष्ठग्वादीनि च ॥ १४ ॥

तिष्ठद्गु इत्येवमादीनि च शब्दरूपाणि हसंज्ञानि भवन्ति । समुदाया एते हसंज्ञाः कार्यार्थं पाठादेवं निपात्यन्त इत्यर्थः। तिष्ठद्गु कालविशेषे ऽन्यपदार्थे तिष्ठन्ति गावो यस्मिन् काले दोहाय तिष्ठद्गु । त्यद्योरिति लटः शत्रादेशो निपातनाद्वा । स्त्रीगोर्नीच इति प्रादेशः । वहन्ति गावो यस्मिन् काले वहद्गु । आयतीगवम् । पूर्वपदस्य निपातनात् पुंवद्भावाभाव अकारश्च सान्तो निपात्यते । खलेबुसम् । निपातनादीपोऽलुप् । लूनयवम् । लूयमानयवम् । लूयन्ते यवा यस्मिन् काले त्यद्योरिति लटः शानादेशः । पूतयवम् । पूयमानयवम् । संहृतयवम् । संह्रियमाणयवम् । संहृतबुसम् । संह्रियमाणबुसम् । एते कालविशेषेऽन्यपदार्थे उक्ताः । समभूमिसमपदातिशब्दौ पूर्वपदार्थप्रधानौ

समत्वं भूमेः समत्वं पदातेरिति । उत्तरपदार्थप्रधाने तु समा भूमिः समभूमिरिति षस एव। हसे पूर्वपदस्य केचिन्मकारान्तत्वमपीच्छन्ति। समम्भूमि। समम्पदाति। सुषमम्। विषमम्। निःषमम्। दुःषमम्। अवरसमम्। समशब्देन पूर्वपदार्थप्राधान्ये हसः। अत्र शोभनत्वं समस्येत्येवमादिवाक्यमभ्यूह्यम्। उत्तरपदार्थप्राधान्ये तु षसः। समाशब्दः संवत्सरवाचि। नेन वक्ष्यमाणो हसः। आयतीसमा। आयतीसमम्। पापसमम। पुण्यसमम्। केचित्तु समशब्देनैव भासमिच्छन्ति। आयतया सममायतीसमम्। प्रगतमन्हः प्रान्हम्। उत्तरपदार्थप्राधान्ये षसः। प्रान्हे कल्याणनामानावुदितौ तिष्यपुनर्वसू। प्ररथम। प्रमृगम्। प्रदक्षिणम्। अपदक्षिणम्। सम्प्रति। असम्प्रति। इच्। दण्डादण्डि। मुसलामुसलि। जइजिति इच् सान्तः। अन्यस्यापीति पूर्वपदस्य दीत्वम्। चशब्दोऽवधारणार्थः। तिष्ठद्ग्वादीन्येव नान्यैः सह वृत्तिं लभन्ते। परमं तिष्ठद्गु। सन्महत्परमेत्यादिना षसो न भवति।

## पारे मध्ये तया वा ॥ १५ ॥

पारेमध्येशब्दौ तान्तेन सह हसो भवति वावचनात्तासोऽपि। प्रकृतेन वाग्रहणेन वाक्यस्य साधुत्वमभ्यनुज्ञायते। हसन्नियोगेन वानयोरेकारान्तता निपात्यते। पारं गङ्गायाः। मध्यं गङ्गायाः। पारेगङ्गम्। मध्येगङ्गम्। तासपक्षे गङ्गापारम्। गङ्गामध्यम् ॥

## संख्या वंश्येन ॥ १६ ॥

विद्याजन्मादिकृतः सन्तानो वंशः। तत्र भवो

वंश्यः । संख्या वंश्यवाचिना सह हसो भवति । द्विमुनी व्याकरणस्य वंश्यौ । द्विमुनि व्याकरणस्य । अत्र सम्बन्धे ता । यदा व्याकरणस्याचार्ययोरभेदविवक्षा यावेतौ द्वौ मुनी तावेव व्याकरणमिति द्वौ मुनी वंश्यौ द्विमुनि व्याकरणमिति तदा सामानाधिकरण्यं भवति । एवं सप्तकाशि त्रिकोशलम् । एकाश्रयस्य वसस्य चापवादोऽयम् ॥

## नदीभिश्च ॥ १७ ॥

बहुवचननिर्देशादर्थस्येदं ग्रहणम् । नदीवाचिभिः शब्दैः सह संख्या हसो भवति । सप्त सिन्धवः समाहृताः सप्तसिन्धु । सप्तगङ्गम । द्वियमुनम् । तिस्रो गोदावर्यः समाहृताः । त्रिगोदावरम् । कृष्णोदक्पाण्डुपूर्वाया भूमेरः सान्त इष्यते । गोदावर्याश्च नद्य श्च संख्याया उत्तरे यदा इति अस्त्यः सान्तो भवति । नदीशब्दोऽपि नदीवचन इति तेनापि वृत्तिः । प नदम् । अत्राऽप्यः सान्तः । चकारः किमर्थः समाहारे यथा स्यादिह मा भूत् । वीरावतीको देशः । एका नदी एकनदी ॥

## खावन्यपदार्थे ॥ १८ ॥

संख्येति निवृत्तम् । नदीभिरिति वर्तते । अन्यपदार्थे खुविषये नदीभिः सह सुबन्तं हसो भवति । उन्मत्तगङ्गं देशः । लोहितगङ्गम् । शनैर्गङ्गम् । तूष्णीगङ्गम् । अत्र वृत्तिपदेन संज्ञा गम्यत इति सामर्थ्यान्नित्यः सविधिः । उन्मत्ता गङ्गा यस्मिन् देशे इति सादृश्यमात्रेणार्थकथनं यथा गौरित्यस्यार्थे गच्छतीति । खाविति किम् । शीघ्रा गङ्गा यस्मिन् देशे स शीघ्रगङ्गो देशः । अन्यपदार्थ इति किम् । कृष्णावेण्णा । कृष्णा नाम नदीविशेषलक्षणः ॥

षस् ॥ १९ ॥

अधिकारोऽयं प्राग् वसात् । यदित ऊर्ध्वमनुक्रमिष्यामः षसंज्ञः सो भवति इत्येवं वेदितव्यम । वक्ष्यति इप्तच्छ्रितातीतपतितगतात्यस्तैः । धर्मं श्रितो धर्मश्रितः । नपा निर्देशः किमर्थः । इह बोऽपुरुषको ग्राम इति पूर्वापरप्रथमादिसूत्रेण प्राप्तः स्वपदार्थविषयत्वादन्तरङ्गः षसो बहिरङ्गेन वसेन बाध्यो यथा स्यात् । उत्तरपदार्थप्रधानत्वं षसस्याभिधानवशात् ॥

इपा च प्राप्तापन्ने ॥ २० ॥

इबन्तेन सह प्राप्तापन्ने शब्दरूपे षसो भवति । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकामापन्नजीविकः । स्त्रीगोर्नीच इति प्रादेशः । चकारः किमर्थः । आकारादेशसमुच्चयार्थः । प्राप्ता जीविकां प्राप्ताजीविका । आपन्नो जीविकामापन्नाजीविका । प्रपञ्चार्थमिदं सूत्रम् । वसेनाप्येतत् सिध्यति । यदा कर्मणि क्तस्तदा प्राप्ता जीविका येनेति विग्रहो यदा कर्तरि तदा प्राप्ता जीविका यं पुरुषमिति ॥

इप्तच्छ्रितातीतपतितगतात्यस्तैः ॥ २१ ॥

तच्छब्देन प्राप्तापन्नयोर्ग्रहणम् । इबन्तं श्रित अतीत पतित गत अत्यस्त इत्येतैश्च सह षसो भवति । जीविकां प्राप्तो जीविकाप्राप्तः । सुखापन्नः । धर्मश्रितः । संसारमतीतः । संसारातीतः । नरकं पतितो नरकपतितः । मोक्षं गतो मोक्षगतः । तुहिनमत्यस्तस्तुहिनात्यस्तः । इबिति पदं सूत्रे वानिर्दिष्टे चोक्तं न्यगिति न्यक्संज्ञं

## इको यणचि ॥ ६ । १ । ७७ ॥

इकः स्थाने यण् स्यादचि संहितायां विषये ॥ दध्यत्र । मध्वरिः । धात्रंशः । लाकृतिः । स्थानत आन्तर्यादिकारादीनां यकारादयः ॥ इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्यः ॥ * ॥ भो ३ इ इह । भो३ यिह ॥

## एचोऽयवायावः ॥ ६ । १ । ७८ ॥

एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ यवयोरुच्चारणसामर्थ्यादित्संज्ञालोपौ न । हरये । विष्णवे । नायकः । पावकः ॥

## वान्तो यि प्रत्यये ॥ ६ । १ । ७९ ॥

यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः ॥ गोर्विकारो गव्यम् । गोपयसोर्यत् । नावा तार्यं नाव्यम् ॥ नौवयोधर्मेत्यादिना यत् । वान्त किम् । रैयति । यि किम् । गोभ्याम् । प्रत्यये किम् । गोयानम् ॥ गोयूतौ छन्दस्युपसंख्यानम् ॥ * ॥ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । ऊतियूतीत्यादिना यूतिशब्दो निपातितः । छन्दसि किम् । गोयूतिः ॥ अध्वपरिमाणे च ॥ * ॥ गव्यूतिमध्वानं गतः । अन्यत्र गोयूतिः । वान्त इत्यत्र वकाराद्गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे लोपो व्योर्वलीति लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । वकारो न लुप्यत इति यावत् ॥

## धातोस्तन्निमित्तस्यैव । ६ । १ । ८० ॥

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशः स्यात्तर्हि तन्निमित्तस्यैव नान्यस्य ॥ लव्यम् । अवश्यलाव्यम् । धातोः किम् । प्रातिपदिकस्यैव नियमो मा भूत् । तथा सति गव्यमित्यत्र न

स्यात् । ओयते इत्यत्र च स्यात् । तन्निमित्तस्य किम् । ओयते । ओयत । एवकार इहेतोऽवधारणार्थः । अन्यथा बाभ्रव्यो व्याकुप्येत ॥

**क्षय्यजय्यौ शक्यार्थे । ६ । १ । ८१ ॥**

यान्तादेशनिपातनार्थमिदम् । क्षेतु शक्य क्षय्यम् । जेतु शक्य जय्यम् । शक्यार्थे किम् । क्षेतुं योग्य क्षेय पापम् । जेतु योग्यं जेयं मन. ॥

**क्रय्यस्तदर्थे । ६ । १ । ८२ ॥**

तस्मै प्रकृत्यर्थायेद तदर्थम् । क्रेतार. क्रीणीयुरिति बुद्ध्या आपणे प्रसारित क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थ. ॥

**भय्यप्रवय्ये च छन्दसि । ६ । १ । ८३ ॥**

बिभेत्यस्मादिति भय्य: । वेते: प्रवय्या स्त्रियामेव निपातनम् । प्रवेयमन्यत्र । छन्दसि किम् । भेयम् । प्रवेयम् ॥ ह्रदय्या आप उपसंख्यानम् ॥ * ॥ ह्रदे भवा ह्रदय्या आप: । भवे छन्दसीति यत् । अकारस्यायादेश: ॥

**एकः पूर्वपरयोः । ६ । १ । ८४ ॥**

अधिकारोऽयम् । ख्यत्यात् परस्येति प्रागेतस्मात् सूत्रात् । इत उत्तरं यदुच्यते तत्र पूर्वस्य परस्य च द्वयोरपि स्थाने एक एवादेशो भवतीत्येव तद्वेदितव्यम् । वक्ष्यत्यादुगुणः इति । तत्रापि पूर्वस्यावर्णाच्च परस्य स्थाने एको गुणो भवति । गङ्गेशः । पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम् । अन्यथैकस्यैव स्यात् । न ह्युभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवत: । एकग्रहणं पृथगादेशनिवृत्त्यर्थम् । अन्यथा स्थानिभेदाद्भिन्नादिषु नत्ववद्द्वावादेशौ स्याताम् ।

**अन्तादिवच्च । ६ । १ । ८५ ॥**

योऽयमेकादेशः स पूर्वस्यान्तवत् परस्यादिवत् स्यात् ॥ क्षीरपेण । अचैकाजुत्तरपदत्वमन्तवद्भावेन । वृक्षौ । अचादिवद्भावात् सुप्त्वम् । वर्णाश्रये विधावन्तादिवद्भावो न भवति । षत्वतुकोरसिद्धवचनात् । तेन खट्वाभिरित्यत्रैस् न । तपरकरणं कीलालपाभिरित्यत्र कृतार्थम् । जुहाव इत्यत्र आत औ णल इति च न । उभयत आश्रये नान्तादिवत् । पूर्वं प्रत्यन्तवत्वे परम्प्रत्यादिवत्वे चैकस्योभयापेक्षया पारतन्त्र्यविरोधात् । तेनाभीयादित्यत्रैतेर्लिङीति ह्रस्वत्वमुपसर्गात् परस्य विधीयमानं न । प्राच्छतीत्यादौ रेफस्यान्तवद्भावेन पदान्तस्य न विसर्गः । उभयथर्क्षु कर्तरि चर्षिदेवतयोरित्यादिनिर्देशात् ॥

**षत्वतुकोरसिद्धः । ६ । १ । ८६ ॥**

षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् ॥ कोऽसिचत् । कोऽस्य । अधीत्य । प्रेत्य ॥ पदान्तपदाद्योरेकादेशोऽसिद्धो भवतीति वक्तव्यम् ॥ * ॥ शकहूषु । उषा । वसेः क्विपि सम्प्रसारणम् । वृक्षे च्छत्रम् । दीर्घात् पदान्ताद्वेति वैकल्पिकस्तुग्न । किमर्थं षत्वतुकोरादेशस्यासिद्धत्वमुच्यते । यावता द्विपदाश्रयत्वाद्बहिरङ्गत्वादेवैकादेशस्यासिद्धत्वं सिद्धम् । एवं तर्हि ज्ञापनार्थम् । एतज्ज्ञापयत्यचोरानन्तर्ये बहिरङ्गस्यापि नासिद्धत्व भवति । तेनाक्षद्यूरित्यत्रोठोऽसिद्धत्वाभावाद्यणादेश उपपन्नो भवति ॥

**आद् गुणः । ६ । १ । ८७ ॥**

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् संहितायां विषये ॥ रमेश । गङ्गोदकम् । कृष्णर्द्धिः । तवल्कारः ।

**वृद्धिरेचि । ६ । १ । ८८ ॥**

आदेचि परे वृद्धिरेकादेशः स्यात् ॥ गुणापवादः । कृष्णौकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

## एत्येधत्यूठ्सु । ६ । १ । ८९ ॥

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः ॥ पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । मा भवान् प्रेदिधत् । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति न्यायेनेयं वृद्धिरेङि पररूपस्यैव बाधिका न त्वोमाङोश्चेत्यस्य । तेन वेहीति वृद्धिरसाधुरेव ॥ अक्षादूहिन्यामुपसङ्ख्यानम् ॥ * ॥ अक्षौहिणी सेना ॥ स्वादीरेरिणोः ॥ * ॥ स्वैरः । स्वेनेरितुं शीलमस्येति स्वैरी । स्वैरिणी ॥ प्रादूहोढोढ्येषैष्येषु ॥ * ॥ प्रौहः । प्रौढः । अर्थवद्ग्रहणेनानर्थकस्य ग्रहणम् । व्रश्चेति सूत्रे राजेः पृथग्भ्राजिग्रहणात् । तेनोढग्रहणे क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः ॥ प्रौढवान् । प्रौढि । इष इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । एषां घञि ण्यति च एष एष्य इति रूपे । तत्र पररूपे प्राप्तेऽनेन वृद्धिः । प्रैष । प्रैष्यः । यस्तु ईष उञ्छे । यश्च ईष गतिहिंसादर्शनेषु । तयोर्दीर्घोपधत्वादीष ईष्यस्तत्राद्गुणेन प्रेषः । प्रेष्यः ॥ ऋते च तृतीयासमासे ॥ * ॥ सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः ॥ प्रवत्सतरकम्बलवसनार्णदशानामृणे ॥ * ॥ प्रार्णम् । वत्सतरार्णमित्यादि । ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम् । दशार्णो देशः । नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च ॥

## आटश्च । ६ । १ । ९० ॥

आटोऽचि परे वृद्धिरेकादेशः स्यात् ॥ ऐक्षत । औचक्षीत् । औब्जीत् ॥

## उपसर्गादृति धातौ । ६ । १ । ९१ ॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् ॥ उपार्च्छति । प्रार्च्छति । उपसर्गात् किम् । खट्वर्च्छति । प्रगत ऋच्छकः प्रर्च्छकः । ऋति किम् । उपेतः । उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थम् । तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति ॥

## वा सुप्यापिशलेः । ६ । १ । ९२ ॥

अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् ॥ आपिशलिग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्षभीयति । सावर्ण्याल्लृवर्णस्य ग्रहणम् । प्राल्कारीयति । प्रल्कारीयति । तपरत्वाद्दीर्घे न । उप ॠकारीयति । उपर्कारीयति ॥

## ओतोऽम्शसोः । ६ । १ । ९३ ॥

आ ओत इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् ॥ गाम् । गाः । द्याम् । द्याः । उः शम्भुः स्मृतो येन तं स्मृताम् । स्मृताः । शसा साहचर्यात् सुबेवाम् गृह्यते । तेनेह न । असुनवम् । अचिनवम् ॥

## एङि पररूपम् । ६ । १ । ९४ ॥

आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् ॥ प्रेजते । उपोषति । इह वासुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन एङादौ सुब्धातौ वा । उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ॥ एवे चानियोगे ॥ * ॥ नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेव शब्दः । अनियोगे किम् । तवैव ।

शकन्ध्वादिषु पररूपं वाच्यम् ॥ * ॥ तच्च टेः । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशवेशे । सीमान्तोऽन्यः । मनीषा । हलीषा ॥ लाङ्गलीषा । पतञ्जलिः । सारङ्ग. पशुपक्षिणोः । साराङ्गोऽन्यः । आकृतिगणोऽयम् । मार्तण्डः ॥ ओत्वोष्ठयोः समासे वा ॥ * ॥ स्थूलोतुः । स्थूलौतुः । विम्बोष्ठः । विम्बौष्ठः । समासे किम् । तवौष्ठः ॥ एमन्नादिषु च्छन्दसि ॥ * ॥ अपा त्वा एमन् । अपां त्वे-मन् । अपा त्वोद्मन् । अपा त्वा ओद्मन् ॥

## ओमाङोश्च । ६ । १ । ९५ ॥

अवर्णादोमि आङि च परे पररूपमेकादेशः स्यात् ॥ शिवायोन्नमः । शिव एहि शिवेहि । आ ऋश्यात् अर्श्यात् । अद्य-र्श्यात् । प्रतिपदविधेर्बलवत्वात् परोऽपि सवर्णदीर्घो बाध्यते ॥ उस्यो-माङ्क्ष्वाटः प्रतिषेधः ॥ * ॥ औस्रीयत् । औङ्कारीयत् । औढी यत् । अत्र यद्वक्तव्यं तत्तृतीये निरूपितम् ॥

## उस्यपदान्तात् । ६ । १ । ९६ ॥

अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात् ॥ भिन्द्युः । छिन्द्युः । अपदान्तात् किम् । का उस्रा कोस्रा । आत् किम् । चक्रुः ॥

## अतो गुणे । ६ । १ । ९७ ॥

अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् ॥ पचन्ति । पचे । अतः किम् । यान्ति । गुणे किम् । अपचे । अपदान्तात् किम् । दण्डाग्रम् । रामा इत्यत्र तु परत्वात् पूर्वसवर्ण-दीर्घः । अतो गुण इति हि पुरस्तादपवादन्यायेनाकः सवर्णे इत्य-स्यैवापवादो न तु प्रथमयोरित्यस्यापि ॥

## अव्यक्तानुकरणस्यात इतौ । ६ । १ । ९८ ॥

ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् ॥ पटत् इति पटिति । अव्यक्तानुकरणस्य किम् । जगज्जगदिति । अतः किम् । वटगिति । इतौ किम् । पटदत्र ॥ एकाचो न ॥ * ॥ श्रदिति । कथ पटदितीति । दान्तमेतत् ॥

## नाम्रेडितस्यान्त्यस्य तु वा । ६ । १ । ९९ ॥

आम्रेडितस्य प्रागुक्त न स्यादन्त्यस्य तु तकारमात्रस्य वा स्यात् ॥ पटत्पटेति । पटत्पटदिति । डाचि बहुल द्वे भवत इति बहुलवचनाद् द्वित्वम् । समुदायानुकरणे तु भवत्येव पटत्पटिति ॥

## नित्यमाम्रेडिते डाचि । ६ । १ । १०० ॥

डाज्परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् ॥ इति तकारपकारयोः पकारः । पटपटायति ॥

## अकः सवर्णे दीर्घः । ६ । १ । १०१ ॥

अकः सवर्णेऽचि परे दीर्घरूप एकादेशः स्यात् ॥ दैत्यारिः । श्रीशः । विष्णूदयः । अचि किम् । कुमारी शेते । नाज्झलाविति निषेधस्तु न दीर्घशकारयोः । ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । अक किम् । हरये । अकोऽकि दीर्घ इत्येव सुवचम् ॥ ऋति सवर्णे ऋ वा ॥ * ॥ होतृकार । होतॄकारः ॥ लृति सवर्णे लृ वा ॥ * ॥ होतॢकारः । पक्षे ऋकार. सावर्ण्यात् । होतॄकारः । ऋति ऋ वा लृति लृ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्ये द्वौ लकारौ शेषं प्राग्वत् ।

इहोभयत्रापि ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावो वक्ष्यते ॥

## प्रथमयोः पूर्वसवर्णः । ६ । १ । १०२ ॥

प्रथमाशब्देन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणम् । अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः ॥ अग्नी । वायू । वृक्षाः । प्लक्षाः । वृक्षान् । प्लक्षान् । अचि किम् । वृक्ष' । अकः किम् । गावौ । नावौ । पूर्वग्रहणं किम् । अग्नी इत्यत्र पक्षे परसवर्णो मा भूत् । दीर्घग्रहणं किम् । त्रिमात्रस्य स्थ निनस्त्रिमात्रो मा भूत् ॥

## तस्माच्छसो नः पुंसि । ६ । १ । १०३ ॥

शस इत्यवयवषष्ठी । स चावयव. परत्वेन विशेष्यते । पूर्वसवर्णदीर्घात् परो यः शस. सकारस्तस्य नः स्यात् पुंसि ॥ वृक्षान् । अग्नीन् । वायून् । तस्मात् किम । एतान् गाः पश्य । शसः किम् । वृक्षा. । पुंसि किम् । नदीः ॥

## नादिचि । ६ । १ । १०४ ॥

अवर्णादिचि परे न पूर्वसवर्णदीर्घ. ॥ शिवोऽर्च्यः । वृक्षौ । खट्वे । आत् किम् । अग्नी । इचि किम् । वृक्षान् ॥

## दीर्घाज्जसि च । ६ । १ । १०५ ॥

दीर्घाज्जसि इचि च परे प्रथमयो. पूर्वसवर्णदीर्घो न स्यात् ॥ गौर्यौ । विश्वपा । विश्वपौ ॥

## वा छन्दसि । ६ । १ । १०६ ॥

दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात् ॥ मारुतीश्चतस्रः पिण्डीः । मारुत्यश्चतस्रः पिण्ड्यः । वाराही । वाराह्यौ । उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन सम्बध्यते । तेनामि पूर्वत्वं वा स्यात् ।

शर्मी च शम्यञ्च सूम्यं सुषिरामिव। सम्प्रसारणाच्चेति पूर्वरूपमपि वा। इज्यमानः। यज्यमान॥

**अमि पूर्वः। ६। १। १०७॥**

अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्॥ वृक्षम्। अग्निम्। पटुम्। पूर्वग्रहणं किम्। रामम्। गौरीम्। अत्र द्विविमात्रो मा भूत्॥

**सम्प्रसारणाच्च। ६। १। १०८॥**

सम्प्रसारणादचि पूर्वरूपमेकादेशः स्यात्॥ इष्टम्। उप्तम्। गृहीतम्। सुध्युपास्यः शकव्ह्यर्थः शकव्हौ इत्यादौ तु न संप्रसारणपूर्वत्वे। समानाङ्गग्रहणमिति वार्तिकोक्तेः। सम्प्रसारणस्थानिकस्य हल इत्यारम्भसामर्थ्यात् संप्रसारणत्वेऽपि तत्स्थाने जातस्यातथात्वाच्च॥

**एङः पदान्तादति। ६। १। १०९॥**

पदान्तादेङोऽति परे पूर्वरूपमेकादेश स्यात्॥ हरेऽव। विष्णोऽव। एङ किम्। दध्यत्र। पदान्तात् किम्। भवति। अति किम्। वायवित्ति। तपरे किम्। वायवायाहि॥

**ङसिङसोश्च। ६। १। ११०॥**

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्॥ अग्नेर्वायोरागच्छति। अग्नेर्वायोः स्वम्॥

**ऋत उत्। ६। १। १११॥**

ऋदन्ताङ्ङसिङसोरति परे उदेकादेशः स्यात्॥ रपरत्वम्। रात् सस्येति सलोपः। रेफस्य विसर्गः। कर्तुः। भ्रातुः। गम्लृ शक्लृ अनयोरनुकरणे लपरत्वम्। संयोगान्तलोपः। गमुल्।

शकुल् । ऋत इति तपरकरणं किम् । कॄ तॄ अनयोरनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकत्वादित्वाभावपक्षे क्रः । त्रः ॥

## ख्यत्यात् परस्य । ६ । १ । ११२ ॥

खितिशब्दाभ्यां खीतीशब्दाभ्यां च कृतयणादेशाभ्यां परस्य ङसिङसोरत उत् स्यात् ॥ सख्युः । पत्युः । सखीयतेः सह खेन वर्तत इति सखस्तामिच्छतीति क्यच् । सखीयतेः सुखीयतेः सुतीयतेश्च क्विपि सख्युः । सुख्युः । सुत्युः । लूनीयतेः क्षामीयतेः प्रस्तीमीयतेश्च क्विबन्तात् ङसिङसोर्यणि नत्वमत्वयोरसिद्धत्वादुत्वम् । लून्युः । क्षाम्युः । प्रस्तीम्युः । विकृतनिर्देशः किम् । अतिसखेः । सेनापतेः । शुष्कीयतेः पक्वीयतेश्च क्विबन्तात् ङसिङसोः संयोगपूर्वत्वाद्यणभावे इयङि शुष्कियः । पक्वियः । परस्येति ग्रहणमेकः पूर्वपरयोरित्यधिकारनिवृत्त्यर्थम् ॥

## अतो रोरप्लुतादप्लुते । ६ । १ । ११३ ॥

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति ॥ भोभगो इति प्राप्तस्य यत्वस्यापवादः । उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति । रुत्वमनूद्य उत्वविधेः सामर्थ्यात् ॥ शिवोऽर्च्यः । अतः किम् । अग्निरत्र । तपरः किम् । देवा अत्र । अति किम् । वृक्ष इह । तपरः किम् । श्व आगन्ता । अप्लुतात् किम् । एहि सुस्रोता३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यं दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते किम् । तिष्ठतु पय आ३ग्निदत्त । गुरोरनृत इति प्लुतः । रोरित्युकारानुबन्धग्रहणान्नेह । प्रातरत्र ॥

## हृशि च । ६ । १ । ११४ ॥

अप्लुतादतः परस्य रोरुः स्याद्धशि ॥ शिवो वन्द्यः । उकारानुबन्धग्रहणान्नेह । भ्रातर्गच्छ ॥

## प्रकृत्याऽन्तःपादमव्यपरे । ६ । १ । ११५ ॥

पादशब्देन ऋक्पादस्यैव ग्रहणमिहेष्यते । ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति न तु यकारवकारपरेऽति । सुजाते अश्वसूनृते । उप प्रयन्तो अध्वरम् । अन्तःपादं किम् । एता स एते ऽर्चन्ति । अव्यपरे किम् । तेऽवदन् । तेऽयस्मयन् । एङ् किम् । प्रत्यग्निरुषसामग्रमख्यत् । केचिदिदं सूत्रं नान्तःपादमिति पठन्ति ते संहितायामिह यत् प्राप्तं तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।६।१।११६॥

एषु व्यपरेऽप्यति एङ् प्रकृत्या ॥ वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रता । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचेस्तेनोऽवन्तु रथतूः सोऽयमागात् तेऽरुणेभिरित्यादौ प्रकृतिभावो न क्रियते । तथापि बाहुलकात् समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः ॥

## यजुष्युरः । ६ । १ । ११७ ॥

उरःशब्द एङन्तोऽति प्रकृत्या यजुषि ॥ उरो अन्तरिक्षम् । यजुषि पादाभावादनन्तःपादार्थं वचनम् ॥

## आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बाले म्बिकेपूर्वे । ६ । १ । ११८ ॥

आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दा अम्बे अम्बालिके

इत्येतौ चाम्बिकेशब्दात् पूर्वौ यजुषि पठितौ । ते यजुषि अति प्रकृत्या ॥ आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधि नाके । अम्बे अम्बाले अम्बिके यजुषीदमीदृशमेव पठ्यते । अस्मादेव वचनादम्बार्थेति ह्रस्वो न ॥

**अङ्ग इत्यादौ च । ६ । १ । ११९ ॥**

अङ्गशब्दे एङ् तदादौ च अकारे य एङ्पूर्वः सोऽति प्रकृत्या यजुषि ॥ ऐन्द्रः प्राणो अङ्गे अङ्गे वृषो वृषः ॥

**अनुदात्ते च कुधपरे । ६ । १ । १२० ॥**

कवर्गधकारपरे ऽनुदात्ते ऽति परे एङ् प्रकृत्या यजुषि ॥ अयं सो अग्निः । अय सो अध्वरः । अनुदात्ते किम् । अधो ऽग्रे रुद्रे । ऋज्रेन्द्राग्रेत्यग्रशब्द आद्युदात्तो निपात्यते । कुधपरे किम् । सोऽयमग्निमन्तः ॥

**अवपथासि च । ६ । १ । १२१ ॥**

अनुदात्ते ऽकारादौ अवपथाः शब्दे परतो यजुषि एङ् प्रकृत्या ॥ त्रिरुद्रेभ्यो अवपथाः । वपेर्लङि थासि तिङ्ङतिङ इत्यनुदात्तत्वम् । अनुदात्ते किम् । यद्रुद्रेभ्योऽवपथाः । निपातैर्यद्यदीति निघातो न ॥

**सर्वत्र विभाषा गोः । ६ । १ । १२२ ॥**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात् पदान्ते ॥ गो अग्रम् । गोऽग्रम् । छन्दसि । अपशवो वा अन्ये गोअश्वेभ्यः । एङन्तस्य किम् । चित्रग्वग्रम् । प्रतिपदोक्तस्यैङो ग्रहणान्नेह । चित्रगोऽग्रम् । पदान्ते किम् । गोः ॥

**अवङ् स्फोटायनस्य । ६ । १ । १२३ ॥**

अतीति निवृत्तम् । अचि परे पदान्ते एङन्तस्य गोरवङ् वा स्यात् ॥ गवाग्रम् । गवोऽग्रम् । पदान्ते किम् । गवि । व्यवस्थितविभाषया गवाक्ष । आद्युदात्तोऽयमादेशो निपात्यते । स च बहुव्रीहौ प्रकृतिस्वरविधाने एव भवति । गावो ऽग्रं यस्य गवाग्रमिति । अन्यत्र तु गवाक्ष इत्यादौ परत्वात् पूर्वं समासान्तोदात्तत्वे सत्यवङ्प्रसङ्ग इत्युपदेशिवद्भावात् पूर्वमवङि सति शिष्टं समासान्तोदात्तत्वं भवति । स्फोटायनग्रहणं पूजार्थम् ॥

## इन्द्रे च । ६ । १ । १२४ ॥

एङन्तस्य गोरवङ् स्यादिन्द्रे च । गवेन्द्रः ॥ गवेन्द्रयज्ञः ॥

## प्लुतप्रगृह्या अचि नित्यम् । ६ । १ । १२५ ॥

प्लुता प्रगृह्याश्चाचि परे नित्यं प्रकृत्या स्युः ॥ एहि कृष्णा३ अत्र गौश्चरति । आश्रयादत्र प्लुतः सिद्धः । सुहरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । अचीति वर्तमाने पुनरज्ग्रहणं प्रत्यासत्या यत्राचि अनयो. प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थम् । तेन जानु उ अस्य रुजति । जानू अस्येत्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव । नित्यमिति किम् । हरी एतावित्यादाव-मेव प्रकृतिभावो यथा स्यादिकोऽसवर्णे इति ह्रस्वसमुच्चितो मा भूत् । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥

## आङो ऽनुनासिकश्छन्दसि । ६ । १ । १२६ ॥

आङोऽचि परे संहितायामनुनासिकः स्यात् स च प्रकृत्या ॥ अभ्र आँ अपः । गभीर आँ उग्रपुत्रे । इह बहुलमिति पठन्ति । तेनेह न । इन्द्रो बाहुभ्यामातरत् । आ अतरत् । आतरत् ।

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । ६ । १ । १२७ ॥**

पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा ॥ अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् । चक्रि अत्र । चक्र्यत्र । इकः किम् । खट्वेन्द्रः । असवर्णे किम् । कुमारीन्द्रः । पदान्ता इति किम् । गौर्यौ । शाकल्यग्रहणं पूजार्थम् । आरम्भसामर्थ्यादेव हि यणादेशेन विकल्पः सिद्धः ॥ सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ॥ * ॥ पार्श्वम् । कुमार्यर्थं व्याकरणम् । नित्यग्रहणेन नार्थः । सित्समासयोरित्येव । इदमपि सिद्धम् । वाप्यामश्वो वाप्यश्वः ॥ इषाअक्षादिषु छन्दसि प्रकृतिभावमात्र वक्तव्यम् ॥ * ॥ ईषा अक्षो हिरण्ययः । ज्या इयम् । पूषा अविष्टु ॥

**ऋत्यकः । ६ । १ । १२८ ॥**

ऋति परेऽकः प्राग्वत् ॥ ब्रह्म ऋषिः । ब्रह्मर्षिः । होतृ ऋकारः । अकः किम् । खट्वेन्द्रः । असवर्णे किम् । कुमारीन्द्रः । पदान्ता इत्येव । आर्च्छत् । ईषदसमाप्त ऋच्छको बहृच्छकः । समासेऽप्ययं प्रकृतिभावः । सप्त ऋषीणाम् । सप्तर्षीणाम् । सवर्णार्थमनिगर्थञ्चेद वचनम् ॥

**अप्लुतवदुपस्थिते । ६ । १ । १२९ ॥**

उपस्थितोऽनार्ष इति शब्दस्तस्मिन् परे प्लुतोऽप्लुतवद्भवति । अप्लुतकार्यं यणादिकं करोतीत्यर्थः । सुश्लोका३ इति सुश्लोकेति । वत् किम् । अप्लुत इत्युक्ते प्लुत एव विधीयेत । तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी३ इति ॥

**ई चाक्रवर्मणस्य । ६ । १ । १३० ॥**

ई प्लुतेऽचि परे प्लुतवद्वा ॥ चिनुही३ इदंम् । चिनुहीदम् चिनुही३ इति । चिनुहीति । उभयत्र विभाषेयम् । ईग्रहणेन नार्थः । अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येव । इदमपि सिद्धम् । वशा३ इयम् । वशेयम् ॥

## दिव उत् । ६ । १ । १३१ ॥

दिवोऽन्तादेश उकारः स्यात् पदान्ते ॥ द्युकामः । द्युमान् । विमलद्यु नभ । द्युभ्याम् सुद्युभ्याम् । निरनुबन्धकस्य प्रातिपदिकस्य ग्रहणान्नेह । अक्षद्यूभ्याम् । तपरत्व तु च्छ्वोः शूडित्यत्र क्ङितीत्यननुवृत्तिपक्षे द्युभ्यामित्यादौ परत्वादूठि कृते ऽनेन ह्रस्व एव यथा स्यादान्तर्यतो दीर्घो मा भूदिति । भाव्यमानत्वादेव न भविष्यतीति चेत् । एवं तर्हि भाव्यमानोऽप्युकारः सवर्णान्न गृह्णातीत्यर्थज्ञापनार्थम् । तेनाक्षद्यूभ्यामित्यादौ दीर्घस्य दीर्घो भवति । क्ङितीत्यनुवृत्तिपक्षे तु तपरत्वसामर्थ्याद्धल इति दीर्घाभावार्थम् । पदान्ते किम् । दिवौ ॥

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ६ । १ । १३२ ॥

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे ॥ एष विष्णुः । स शम्भुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥

## स्यश्छन्दसि बहुलम् । ६ । १ । १३३ ॥

स्य इत्यस्य सो लोपः स्याद्धलि ॥ एष स्य भानुः । न च भवति । यत्र स्यो निपतेत् ॥

## सोऽचि लोपे चेत् पादपूरणम् । ६ । १ । १३४ ॥

स इत्यस्य सेर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्यंत ॥ सेमामविड्ढि प्रभृतिम् । इह ऋक्पाद एव गृह्यत इति वामन । अविशेषाच्छ्लोकपादोऽपीत्यपरे । सैष दाशरथी राम । लोपे चेदिति किम् । स इत्वेति । स एवमुक्ता । सत्येवेत्यवधारणं तु बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न । सोऽहमाजन्मशुद्धानाम् । बाहुलकादेव लोपं विना पादपूरणेऽपि क्वचिद्भवति । सास्म अरस. । अस्मै इति च्छेदः ।

## सुट् कात् पूर्वः । ६ । १ । १३५ ॥

अधिकारोऽयम् । पारस्करप्रभृतीनि च सञ्ज्ञायामिति यावत् । वक्ष्यति सम्पर्युपेभ्य इत्यादि । सस्कृषीष्ट । समस्कृत । सस्क्रियते । सस्क्रियात् । कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम् । तेन संयोगादिलक्षणाविड्गुणौ न भवतः । टित्करणं सुटस्तुस्वञ्जामिति विशेषणार्थम् ॥

## [1]अडभ्यासव्यवायेऽपि । ६ । १ । १३६ ॥

सुट् कात्पूर्वः स्यात् ॥ समस्करोत् । सञ्चस्करतुः । ऋतश्च संयोगादेर्गुण इत्यत्र संयोगोपधग्रहणाद्गुणः । कात् पूर्व इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि । पूर्वं धातुरुपसर्गेण युज्यते । एवं चान्तरङ्गत्वादर्थकोपसर्गनिमित्तः सुट् पूर्वम् । ततोऽड्द्वित्वे । एवं च ऋतश्च संयोगादेरित्येव गुणः । संयोगादिलक्षणाविड्गुणौ तु ऋतश्च संयोगादेरित्यत्र एकाच उपदेश इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानाद्गुणोऽर्तीति सूत्रे नित्यं छन्दसीति सूत्रान्नित्यमित्यनुवर्त्य नित्यं यः संयोगादिस्तस्येत्यर्थाच्च परिहर्तव्यौ ॥

---

[1] इदं वार्तिकं सूत्रेषु प्रक्षिप्तम् ।

कामतस्तु यदा विप्रश्चण्डालीं यदि सेवते ।
चान्द्रायणेन शुध्येत प्राजापत्यद्वयेन च ॥

इति । चण्डाल्यादिगमनभोजनाद्यत्यन्तसम्पर्के तु पातित्यमेव । तथा च मनुः ।

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥

इति । वाशब्दद्वयोपादानात्पुल्कस्यादिगमनेऽपि स्मृत्योक्तं प्रायश्चित्त मनुज्ञायते । तथा च संवर्त्तः ।

पुल्कसीगमनं कृत्वा कामतोऽकामतोऽपि वा ।
कृच्छ्रं चान्द्रायणं कुर्यात्ततो मुच्येत किल्बिषात् ॥
नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम् ।
गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीम् ॥

आपस्तम्बोऽपि ।

म्लेच्छी नटी चर्मकारी रजकी बुरुडी तथा ।
एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयमिति ॥

शातातपः ।

कैवर्तीं रजकीं चैव वेणुचर्मोपजीविनीम् ।
प्राजापत्यविधानेन कृच्छ्रेणैकेन शुध्यति ॥
कापालिकस्त्रीगमने तु यमः ।
कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा ।
ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैवन्दं द्वयम् ॥
इति । रजस्वलागमने तु संवर्तः
रजस्वलां तु यो गच्छेद् गर्भिणीं पतितां तथा ।
तस्य पापविशुध्यर्थमतिकृच्छ्रो विशोधकम् ॥
तत्रैव दिनभेदेन विशेषश्चतुर्विंशतिमते ।
रजस्वलां द्विजो गत्वा पराकं तु समाचरेत् ।
सांतपनं द्वितीयेऽन्हि प्राजापत्यं परेऽहनीति ।

गर्भिण्या विशेषमाहात्रिः ।
षण्मासान्कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आदन्तजननादूर्ध्वमेव धर्मो न हीयते ॥

इति । गर्भिणीं षण्मासानेव गच्छेन्नातः परम् । ऊर्ध्वं प्रसूतेरादन्तजननाद् बालस्य दन्तजननमारभ्य न प्रागित्यर्थः ।

क्षत्रियवैश्ययोस्तदाह ।

**क्षत्रियो वाथवैश्यो वा चण्डालीं यदि गच्छतः ।**
**प्राजापत्यद्वयं कुर्याद्दद्याद्गोमिथुनद्वयम् ॥ ७ ॥**

क्षत्रियो वैश्यो वा चण्डालीं श्वपाकीं वा गत्वा पर्षन्निर्देशेन त्रिरात्रमुपोष्य सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरित्वा गोमिथुनद्वयं गोद्वयं वृषभद्वयं च दक्षिणां दद्यात् ।

शूद्रस्य तदाह ॥

**श्वपाकीं वाथ चण्डालीं शूद्रो वा यदि गच्छति ।**
**प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं वहेत् ॥ ८ ॥**

शूद्रः श्वपाकीं चण्डालीं वा गत्वा प्राजापत्यसंज्ञकमेकं पूर्वोक्तरीत्या चरित्वा चतुर्णां गोमिथुनानां समाहारश्चतुर्गोमिथुनं चतस्रो गाश्चतुरो वृषभाश्च दद्यात् ।

इदानीमज्ञानतो मात्रादिगमने प्रायश्चित्तमाह ।

**मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा ।**
**एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि संचरेत् ॥ ९ ॥**
**चान्द्रायणत्रयं कुर्याच्छिश्नच्छेदेन शुध्यति ।**

माता जननी अन्यासां पितृदारान्समारुह्येत्यत्र वक्ष्यमाणत्वात् । भगिन्येकोदरप्रसूता, स्वसुता सवर्णाया भार्यायां स्वस्मादुत्पन्ना, एतासामज्ञानतस्सकृद्गमने चरमधातुविसर्गपर्यन्ते व्यापारे शिश्नच्छेदादीनि त्रीण्यपि प्रायश्चित्तानि प्रातिलोम्यक्रमेण भवन्ति । तद्यथा । मातृगमने शिश्नच्छेदः । भगिनीगमने चान्द्रायणत्रयं स्वसुतागमने कृच्छ्रत्रयमिति ।

ननु

जनन्या च भगिन्या च स्वसुताया तथैव च ।
स्नुषाया गमने चैव विज्ञयमतिपातकमिति ॥

कात्यायनस्मरणादतिपातकत्वाविशेषे प्रायश्चित्तविशेषः किंनिब-न्धन इति चेत् । सत्यम् । ब्रह्महत्यादीनां पञ्चानां गोवधादीनां पञ्च-चत्वारिंशतां च महापातकत्वोपपातकत्वाविशेषे भवता वा प्रायश्चित्त-विशेषः किंनिबन्धनः ? वाचनिक इतिचेत् प्रकृतेऽपि दीयतां दृष्टिः । नचैवमतिपातकिनस्त्वेते प्रविशेयुर्हुताशनमिति कात्यायनीयमेव प्राय-श्चित्ततौल्यं नोपपद्यत इति वाच्यम् । तस्य जनन्यां कामतः सकृद्गमने भगिन्यादिषु चासकृद्गमने ज्ञेयत्वात् । शिश्नच्छेद इति शिश्नमात्रच्छेदो न वृषणच्छेदः । अत एव नारदः । माता मातृष्वसा श्वश्रूरित्याद्युपक्रम्य ।

आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते ॥

इत्यभिहितवान् । दण्ड इति दमनार्थं शुध्यर्थं च । शिश्नमात्रच्छेदे च पाक्षिकं जीवनमपि संभवतीति नात्यन्तिकं मरणान्तमिदं प्रायश्चित्त-मकामतः सकृद्गमने । तत्रैवाभ्यासे तु नित्यवन्मरणमेव ।

पितृभार्यां तु विज्ञाय सवर्णां योऽधिगच्छति ।
जननीं वाप्यविज्ञाय नामृतः शुद्धिमाप्नुयादिति ॥

षट्त्रिंशन्मतोक्तं द्रष्टव्यम् । अपेराधिक्यार्थत्वात्तस्य चाभ्यासपर्या-यत्वात् । कामतः सकृद्गमने तु ।

यः कामतो महापापं नरः कुर्यात्कथंचन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥

इत्यङ्गिरोविहितं भृग्वग्न्यन्यतरपतनं द्रष्टव्यम् । कथंचनशब्दस्य सकृदर्थकामपर्यायस्य कामशब्दोपादानेन सकृत्त्वे परिशेषितत्वात् । कामतो-ऽभ्यासे त्वग्निपतनं निष्कालको घृताभ्यक्तो गोमयाग्निना पादप्रभृत्यात्मान-मवदाहयेदिति वसिष्ठोक्तेतिकर्तव्यताकमनुसंधेयम् । नन्वकामकृते प्राय-श्चित्तमभिधाय कामकृते तदनभिदधत आचार्यस्य न्यूनतेतिचेत् । उच्यते ।

सर्वधर्मप्रवचनार्थमाचार्यस्य न प्रवृत्तिः । किंतु कलौ केषांचिदपूर्वाणामेव विधानार्थं, केषांचित्स्मृत्यन्तरप्रसिद्धानामपि गुणविशेषविधानार्थं च । तेन च येषां नापूर्वत्वं नवा गुणविशेषविधिस्तेषां स्मृत्यन्तरप्रसिद्धानां यथावस्थितानामेव ग्राह्यत्वाच्च पुनर्वचनमिति न न्यूनतेति । नचैवं कलावपि मरणान्तिकप्रायश्चित्तप्राप्तौ प्रायश्चित्तविधानं च विप्राणां मरणान्तिकमितिवचो विरुध्येतेति वाच्यम् । तस्य विधानशब्देनोपदेशपरत्वात् । स्वतो ज्ञात्वा तु तत्करणेऽपि न दोष इत्युपपादितं प्राक् । भगिन्या गमने चान्द्रायणत्रयम् । यथाह बृहद्यमः ॥

चण्डालीं पुल्कसीं म्लेच्छीं शूद्रां च भगिनीं सखीम् ।
मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम् ।
मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम् ॥
शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेद् ॥

इति । एकत्वं चात्र त्रित्वावयुत्यानुवादेन विधेयं चान्द्रायणत्रयं कुर्यादिति त्रित्वस्य विहितत्वात् । यत्तु संवर्तवचनम् ॥

भगिनीं मातुराप्तां च स्वसारं वान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात् तप्तकृच्छ्रं समाचरेद् ॥

इति । तद्रेतःसेकादर्वाङ् निवृत्तौ द्रष्टव्यम् । भगिन्यादिषु तु कामतो गमने शिश्नच्छेदमेवोपलक्षयिष्यति । अभ्यासे त्वग्निप्रवेश इति । तथा चतुर्विंशतिमते ।

मातरं गुरुपत्नीं च स्वसारं स्वसुतां तथा ।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥

इति । जननीगमने विहितं प्रायश्चित्तमन्यत्राप्यतिदिशति ॥

**मातृष्वसृगमे चैवमात्ममेढ्रनिकृन्तनम् ॥ १० ॥**

मातृष्वसृश्चकारात् स्वानुक्तविशेषाणां श्वश्रूपितृष्वस्रादीनां ग्रहणम् । एतासु गमने आत्मनो मेढ्रस्य शिश्नस्य निकृन्तनं छेदनमेव शुद्धिहेतुः । यथाह नारदः ।

इदानीं सापत्नमात्रादिगमने प्रायश्चित्तमाह ॥

**पितृदारान् समारुह्य मातुराप्तां तु भ्रातृजाम् ।**
**गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च ॥ १२ ॥**
**मातुलानीं सगोत्रां च प्रजापत्यत्रयं चरेत् ।**
**गोद्वयं दक्षिणां दत्वा मुच्यते नात्र संशयः॥१३॥**

पितृदाराजननी व्यतिरिक्ता । मातुराप्ता मातृसखी भ्रातृजा ज्येष्ठ-कनिष्ठान्यतरभ्रातृसुता । गुरुः पितृव्यतिरिक्ताचार्यादिस्तस्य पितृदारानित्यनेनैव प्राप्तत्वात् । तस्य पत्नी पाणिगृहीती, स्नुषा पुत्रभार्या, भ्रातृभार्या भ्रातुर्ज्येष्ठस्य कनिष्ठस्य वा भार्या, मातुलानी मातुलपत्नी, सगोत्रा समान-गोत्रा, एतास्तथैवाज्ञानेनैव सम्यक्क्रियानिष्पत्तिपर्यन्तमारुह्य गत्वा प्राजा-पत्यत्रयाचरणानन्तरं गोद्वयं दक्षिणां दत्वा तस्मात्पापान्मुच्यते इत्यत्र संशयो नास्ति । संशयाभाववचनं स्वल्पस्यास्य प्रायश्चित्तस्य कथं महापातक-निवर्तकत्वमितिशङ्कानिरासाय । तेन समारोहणमात्रविषयमिदं स्वल्पं प्रायश्चित्तमितिनिरस्तम् । आरोहणे सम्यक्त्वस्य क्रियानिष्पत्तिपर्यवसायित्वात् । पितृदारानिति सामान्योपादानेऽपि सवर्णपितृदाराणामकामतः सकृद्गमन इदं द्रष्टव्यम् । तत्रैवाज्ञानादभ्यासे वृद्धमनुः ।

गमने गुरुभार्यायाः पितृभार्यागमे तथा ।
अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत् ॥

इति । अकामान्नित्यं पितृभार्यागमे अब्दत्रयं समाचरेदित्यर्थः । तत्रैव कामतः सकृद्गमने शङ्खः ।

अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥

इति । तत्रैव कामतोऽभ्यासे तु मरणमेव । तथा षट्त्रिंशन्मते ।

पितृभार्यां तु विज्ञाय सवर्णां योऽधिगच्छति ।
जननीं वाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात् ॥

इति । अत्रापेराधीक्ष्यमर्थः । तच्चाभ्यासपर्याय इत्युक्तम् । पितृदारानिति बहुवचनान्तदारशब्दोपादानसामर्थ्यादसवर्णापितृदारगमनेऽपि प्रायश्चित्त भवतीति ज्ञापितम् । तच्च स्मृत्यन्तरादवगन्तव्यम् । यथा अज्ञानात्सकृत् क्षत्रियागमने च पृथक् आह ।

चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च
सकृद् गत्वा गुरोभार्यामज्ञानात् क्षत्रिया द्विज इति ॥

अत्रायमभिसंधिः । गमनं हि त्रेधा भवति । पुरुषेच्छया, स्त्रीच्छया, उभयेच्छया चेति । तत्रेयं व्यवस्था । उभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः स्त्रीच्छयातिकृच्छ्र. पुरुषेच्छया चान्द्रायणमिति तत्रैवाज्ञानादभ्यासे जातूकर्ण्यः ।

गुरोः क्षत्रसुता भार्या पुनर्गत्वा त्वकामतः ।
अण्डमात्रं समुत्कृत्य शुध्येज्जीवन्मृतोऽपि च ॥

इति तत्रैव कामतः सकृद्गमने व्याघ्रः ।

कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः ॥

इति । अत्राप्युभयेच्छातः प्रवृत्तावतिकृच्छ्रः स्त्रीच्छया कृच्छ्रः स्वेच्छया कृच्छ्रातिकृच्छ्रः । तत्रैवकामतोऽभ्यासे देवलः ।

मत्या गत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः ॥
अण्डाभ्यां वर्जितं लिङ्गमुत्कृत्य च मृतः शुचिः ।

इति । अज्ञानात्सकृद्वैश्यागमने प्रजापतिः ।

पञ्चरात्रं तु नाश्नीयात्सप्ताष्टौ वा तथैव च ।
वैश्यां भार्यां गुरोर्गत्वा सकृदज्ञानतो द्विजः ॥

इति । तत्राप्युभयेच्छातः प्रवृत्तौ सप्तरात्रं स्त्रीच्छया पञ्चरात्रं स्वेच्छयाऽष्टरात्रमिति । तत्रैवाज्ञानादभ्यासे हारीतः ।

अभ्यस्य विप्रो वैश्याया गुरोरज्ञानमोहितः ।
स षडब्दं ब्रह्मचर्यमाचरेद्यावदायुषम् ॥

इति । तत्रैव कामतः सकृद्गमने कण्वः ।

तप्तकृच्छ्रं पराकं च तथा सांतपनं गुरोः ।
भार्यां वैश्यां सकृद् गत्वा बुध्वा मासं चरेद्द्विजः ॥

इति । अत्राप्युभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रम् । स्त्रीच्छया सांतप स्वेच्छया पराक इति । तत्रैव कामतोऽभ्यासे लौगाक्षिः ।

गुरोर्वैश्यां पुनर्गत्वा गत्वा चापि पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत्स किल्बिषात् ॥

इति । अस्मादेव ज्ञापकादभ्यासोक्तमेतद्गुरुतल्पप्रायश्चित्तमत्यन्ताभ्यासे ऽपि द्रष्टव्यम् । अज्ञानतः सकृच्छूद्रागमने दीर्घतपाः ।

प्राजापत्यं सांतपनं सप्तरात्रोपवासकम् ।
गुरोः शूद्रां सकृद्गत्वा चरेदज्ञानतो द्विजः ॥

इति । अत्राप्युभयेच्छातः प्रवृत्तौ सांतपनं स्त्रीच्छया प्राजापत्यं स्वेच्छया सप्तरात्रोपवास इति । अत्रैवाज्ञानादभ्यासे मनुः ।

चान्द्रायणं वा त्रीन्मासानभ्यस्य नियतेन्द्रियः ।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥

इति । अत्रैव कामतः सकृद्गमने जाबालिः ।

अतिकृच्छ्रं तप्तकृच्छ्रं पराकं च तथैव च ।
गुरोः शूद्रां सकृद् गत्वा बुध्वा विप्रः समाचरेद् ॥

इति । तत्राप्युभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः स्त्रीच्छयाऽतिकृच्छ्रं स्वेच्छया पराक इति । तत्रैव कामतोऽभ्यासे मनुः ।

पुनः शूद्रां द्विजो गत्वा बुध्वा विप्रः समाहितः ।
ब्रह्मचर्यं च दुष्टात्मा चरेद्द्वादशकं समाः ॥

इति । इदं च ब्राह्मणीपुत्रादेरानुलोम्येन गमने द्रष्टव्यं प्रातिलोम्येन गमने त्वग्निप्रवेश एव सर्वेषाम् । प्रातिलोम्ये वधः पुंसो नार्याः

कर्णादिकर्त्तनमिति स्मरणात् । वधेतिकर्तव्यताकाङ्क्षायां तु वसिष्ठोक्तमनुसन्धेयम् । शूद्रस्तु ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा नग्नां सर्पिषाभ्यज्य कृष्णखरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते । वैश्यश्चेद्ब्राह्मणीमुपगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते । राजन्यश्चेद्ब्राह्मणीमुपगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वपनं कारयित्वाभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यां शूद्रश्च राजन्यवैश्ययोरिति । नचेदमुपपातकविषयमत्र न प्रवर्तत इति शङ्कनीयम् । यदोपपातकेऽपि प्रातिलोम्यगमने एव तदा महापातके प्रातिलोम्यगमने सुतरामिति न्यायेनैवात्र प्रवृत्तेः । यद्यपि विजातीयगुरुतल्पगमनप्रायश्चित्तप्रतिपादनं न प्रकृतोपयोगि, कलौ विजातीयकन्याविवाहाभावात् । तथापि शास्त्रार्थस्वरूपजिज्ञासानिवर्तकत्वेन सङ्गतमिति । सामान्यतस्तु पुरुषवत्स्त्रीणामप्यत्रमहापातकोत्वाविशेषाद्यथोक्तदोषप्रायश्चित्ते भवतः । तथा च कात्यायनः ।

एष दोषश्च शुद्धिश्च पतितानामुदाहृता ।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः ॥

इति । अयमर्थः । यस्मिन्निमित्ते पुरुषस्य प्राणान्तिकं प्रायश्चित्तमुक्तम् । तत्रास्त्रिया अपि तदेव । यत्र तु व्रतरूपं तत्र तदेव । तथा च मनुः ।

एतदेव व्रतं कार्यं योषित्सु पतितास्वपि ।

इति । तत्रैतदेवेत्यविकृतातिदेशाद्वाधःकल्पनावकाशोऽन्यत्र तु सा भवत्येव । अत एव मनुः ।

यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ।

इति पारदार्ये एतत्स्त्रीणां सकलव्रतमतिदिष्टवान् । सोऽयं गुरुतल्पदोषः साधारणस्त्रिया नास्ति । तथा च व्याघ्रः ।

जात्युक्तं पारदार्यं च कन्यादूषणमेव च ।
साधारणस्त्रिया नास्ति गुरुतल्पत्वमेव च ॥

इति । मातृसख्यादीनां तु कामतो गमने नारदोक्तः शिश्नच्छेद एव । अभ्यासे तु चतुर्विंशतिमतेऽभिहितोऽग्निप्रवेश एव चेति । चकाराद्भ्रातृस्त्रियादिगमनेऽपि स्मृत्यन्तरोक्तं प्रायश्चित्तं समुचितम् । तथा चतुर्विंशतिमते ।

भ्रातुश्चैव कनिष्ठस्य भार्यां गत्वा तु कामतः ।
सान्तपनं तु कुर्वीत कृच्छ्रद्वयमथापि वा ॥
मातुश्च स्वस्रीयां गत्वा पितृव्यतनयां तथा ।
तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तु सुतासु च ॥
गुरोर्दुहितरं गत्वा पराकं तु समाचरेत् ।
भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणव्रतम् ॥
मातुलस्य सुतां गत्वा पितुश्च स्वस्रीयां तथा ।
प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा ॥
मातुश्च स्वस्रीयां चैव भार्यां गत्वा तु कामतः ।
पितृव्यतनयस्यैव सपादं कृच्छ्रमाचरेत् ॥
दौहित्रीं पुत्रतनयां चरेच्चान्द्रायणव्रतम् ।
तत्सुतां च स्नुषां गत्वा पराकं तु समाचरेत् ॥
चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितम् ।
आचार्यस्य पराकं तु बौधायनवचो यथा ॥
सबन्धिनस्त्रियो गत्वा सपादं कृच्छ्रमाचरेत् ।
विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ॥
व्रतस्थागमने कृच्छ्रं सपादं तु समाचरेत् ।
सखिभार्यां समारुह्य ज्ञातिस्वजनयोषितम् ॥
स कृत्वा प्राकृतं कृच्छ्रं पादं कुर्यात्ततः पुनः ।
कुमारीगमने विप्रश्चरेच्चान्द्रायणव्रतम् ॥
पतितां तु द्विजो गत्वा तदेकं व्रतमाचरेद् ।

इति । अत्र च विधवात्वादिगुणनिमित्तं प्रायश्चित्तं पारदार्य-प्रायश्चित्तेन समुच्चीयते । निमित्तद्वयसमावेशात् । पतिता कृतप्रायश्चित्तामपि परित्यक्तामितिज्ञेयम् । तथा मूलवचनपरिगणितातिरिक्तपारदार्याकृमपिप्रायश्चित्तं चकारात्समुच्चीयते । तदाह व्याघ्रः ।

ब्राह्मणो ब्राह्मणीं गच्छेदकामा यदि कामतः ।
कृच्छ्रं चान्द्रायणं कुर्यादर्द्धमेव प्रमादतः ॥
अर्द्धमेव सकामाया तप्तकृच्छ्रं सकृद्गतौ ।
अर्द्धमर्द्धं नृपादीनां दारेषु ब्राह्मणश्चरेत् ॥
एतद्व्रतं चरेत्सार्द्धं श्रोत्रियस्य परिग्रहे ।
अश्रोत्रियश्चद्विगुणमनुक्तमर्द्धमेव च ॥

इति । अयमर्थः । ब्राह्मणस्य ब्राह्मण्यामकामाया कामतो गमने चान्द्रायणं कृच्छ्रमिति चान्द्रायणविशेषणं । तस्यामेवाकामतो गमने चान्द्रायणार्द्धं सकामाया कामतो गमनेऽपि चान्द्रायणार्द्धमेव । इदमप्यभ्यासे । सकृद्गमने तु तप्तकृच्छ्रमेव सर्वत्र ब्राह्मणस्य क्षत्रियवैश्यशूद्रस्त्रीगमनेऽप्यर्द्धमेव चान्द्रायणम । इद च श्रोत्रियस्याश्रोत्रियस्त्रीगमने तु चान्द्रायणम् । श्रोत्रियस्य श्रोत्रियस्त्रीगमने तु सार्द्धं चान्द्रायणम् । अश्रोत्रियस्य श्रोत्रियस्त्रीगमने चान्द्रायणद्वयम् । इदमपि गुप्तायामगुप्तायान्त्वर्द्धमेव चान्द्रायणं सर्वत्रेति । शूद्रादिगमने तु विशेषमाह कण्व ।

शूद्रदारान् गतो विप्रो ह्यतिकृच्छ्रं समाचरेत् ।
चान्द्रायणं विशो राज्ञः समं च ब्राह्मणे व्रतम् ॥

इति । शूद्रस्त्रीगमनेऽत्रातिकृच्छ्रं चरेत् । विशो राज्ञश्च दारान् गतो विप्रश्चान्द्रायणं चरेत् । समं तुल्यं चान्द्रायणमेव ब्राह्मणीगमनसम्बन्धिव्रतमित्यर्थः । तदेतदत्यन्ताभ्यासे द्रष्टव्यम् । ब्राह्मणोढक्षत्रियादिगमने तु विशेषमाह । व्याघ्रः ।

विप्रेणैव निविष्टास्वेच्छ्वातुर्वर्ण्यप्रसूतय ।
क्रमेण पादशो हीनं व्रतं तासु गतश्चरेत् ॥

इति । ब्राह्मणस्य ब्राह्मणीगमने कामाकामादिभेदेन यदुक्तं व्रतं तदेव ब्राह्मणोढक्षत्रियादिगमनेऽपि पादहीनं भवतीत्यर्थः । प्रातिलोम्येन गमने त्वाह सवर्त्तः ।

कथं चिद्ब्राह्मणीं गच्छेत्क्षत्रियो वैश्य एव वा ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥
शूद्रस्तु ब्राह्मणीं गत्वा कथं चित्काममोहितः ।
गोमूत्रयावकाहारोमासेनैकेन शुध्यति ॥

इति । मासश्चार्द्धं चेति मासार्द्धं तच्च प्रातिलोम्येन क्षत्रियवैश्ययो र्ज्ञेयम् । तद्यथा क्षत्रियस्य ब्राह्मणीगमने मासार्द्धं वैश्यस्य मासमिति । इदं चाकामविषयं कथं चित्काममोहित इति विशेषाभिधानात् । कामतो गुरुतल्पप्रायश्चित्तमेव । माता यस्मात्ति तस्येति प्रचेतोलिङ्गात् । तच्च प्रातिलोम्यगुरुतल्पप्रायश्चितप्रस्तावे वसिष्ठवाक्योदाहरणेन प्रतिपादितम् । इदं च सर्वमपि व्रतं गर्भानुत्पत्तौ । तदुत्पत्तौ प्रतिपदोक्तं चतुर्विंशतिमताभिहितमेव कार्यं ।

ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं चरेत् ।
राज्ञीगर्भे पराकः स्याद्विड्गर्भे तु त्र्यहाब्दिकम् ॥
शूद्रगर्भे द्विजः कुर्यात्कृच्छ्चान्द्रायणव्रतम् ।
चाण्डाल्या गर्भमारोप्य गुरुतल्पव्रतं चरेद् ॥

इति । एतदतिरिक्तस्थले तु तत्तदेवद्विगुणं कार्यम् । तदाहोशना

गमने तु व्रतं यत्स्याद्गर्भे तद्विगुणं भवेद् ।
इति । एवं मानुष्यागमने प्रायश्चित्तमुक्तम् ।

इदानीं पश्वादिगमने प्रायश्चित्तमाह ॥

**पशुवेश्यादिगमने महिष्युष्ट्रीं कपीं तथा ॥**
**खरीं च शूकरीं गत्वा प्राजापत्यं समाचरेत् ॥ १४ ॥**

पशुरुक्तातिरिक्तोश्वादिः सर्वः वेश्या वेशोभृतिस्सा । जीवनमस्याःसा वेश्या पञ्चचूडाभिधाप्सरस्सन्ततिः समानजातेरुत्कृष्टजातेर्वा पुरुषादु-

त्यचा पुरुषसम्भोगवृत्तिर्ब्राह्मण्यादीव स्वतन्त्रा जातिः स्कन्दपुराणोक्ता । आदिशब्दात्स्वैरिण्यादीनां ग्रहणम् । आसां गमने महिष्युष्ट्रकपीखरीशूकरीषु गत्वा यथोक्तं प्राजापत्यं कुर्यात् । यद्यप्यत्र सर्वपशुसाधारण्येन प्राजापत्य उक्तस्तथापि शुनीगमनेऽतिकृच्छ्रोऽज्ञेयः ।

तथा च चतुर्विंशतिमते ।
सर्वासां पशुजातीनां गमने कृच्छ्रमाचरेत् ।
शुनीं चैव द्विजो गत्वा अतिकृच्छ्रं समाचरेत् ॥

इति । स्वैरिणीगमने शङ्खलिखितावाहतुः । स्वैरिण्यां वृषल्यां वावकीर्णः सचैलस्नात उदकुम्भं दद्याद्ब्राह्मणाय । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत् । क्षत्रियायाम् त्रिरात्रोपोषितो यवाढकं दद्यात् । ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यादिति । बन्धकीगमने तु षट्त्रिंशन्मते प्रायश्चित्तमुक्तम् ।

ब्राह्मणीं बन्धकीं गत्वा किञ्चिद्दद्याद्द्विजातये ।
राजन्यां तु धनुर्दद्याद्वैश्यां गत्वा तु चेलकम् ॥
शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये ।
दिवसोपोषितो वास्याद्दद्याद्विप्राय भोजनम् ॥

इति । स्वैरिणी बन्धक्योर्लक्षणमुक्तं स्मृत्यन्तरे । चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेदिति । व्यभिचार इति शेषः । यद्यपि वैश्यादीनामनुष्यावान्तरजातित्वान्मानुषीगमनप्रायश्चित्तप्रस्ताव एव प्रायश्चित्ताभिधानमुचितं । तथापि पुरुषविशेषापरिग्रहसाम्यात्पश्वादिभिः सहाभिधानम् । अत एव इदमनवरुद्धासु तु परदारवद्दोषमाह नारदः ।

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी तथा ।
गम्य स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहाः ॥

इति । निष्काशिनी स्वाम्यनवरुद्धा दासी । गम्यत्वाभिधानं तु दण्डाभावाभिप्रायेण । न तु प्रायश्चित्ताभावमभिप्रेत्य तस्यां पत्न्यविधा-

नात् । भुजिष्या नियतपुरुषपरिगृहीताः । इद च गर्भानुत्पत्तौ । तत्र तु कण्व आह ।

प्रसूतो यस्तु वैश्यायां भैक्ष्यभुग्नियतेन्द्रियः ।
शत सहस्रमभ्यस्य सावित्रीमिति शुद्धताम् ॥

इति । अत्राकामतोऽभ्यासे विशेषश्चतुर्विंशतिमते ।

सकृत्कृते तु यत्प्रोक्त त्रिगुण तत्त्रिभिर्दिनैः ।
मासात्पञ्चगुणं प्रोक्तं षण्मासाद्दशधा भवेत् ॥
संवत्सरात्पञ्चदश त्र्यब्दाद्विंशद्गुण भवेत् ।
ततोऽप्येव विकल्पः स्याच्छातातपवचो यथा ॥

इति । कामतोऽभ्यासे तु लौगाक्षिः ।

अभ्यासेऽहर्गुणा वृद्धिर्मासादर्वाग्विधीयते ।
ततो मासगुणा वृद्धिर्यावत्संवत्सरं भवेत् ॥
ततःसंवत्सरगुणा यावत्पाप समाचरेत् ॥

इति । अनेनैव न्यायेनानुक्तविशेषेषूपपातकेष्वभ्यासे प्रायश्चित्तमूहनीयम् ।

गोगमने विशेषमाह ॥

**गोगामी च त्रिरात्रेण गामेकां ब्राह्मणो ददत् ॥**

गोगामी ब्राह्मणस्त्रिरात्रमुपोष्य गामेकां दत्वा शुध्यति । महिष्यादिगमने यदुक्तप्राजापत्य तदभ्यासविषयम् ॥

इदानीं सकृद्गमने विशेषमाह ॥

**महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुध्यति ॥ १५ ॥**

महिष्युष्ट्रीखरीर्गत्वा अहोरात्रोपोषितः शुध्येदिति ।

वक्ष्यमाणप्रायश्चित्तनिमित्तानुत्पादार्थं स्त्रीरक्षणमाह ॥

**अमरे समरे वापि दुर्भिक्षे वा जनक्षये ॥**
**बन्दिग्राहे भयार्त्तौ वा सदा स्वस्त्रीं निरीक्षयेत् ॥ १६ ॥**

अमरो घाडा समरो युद्ध दुर्भिक्षमशनाभावो जनक्षयो मारिका वन्दिग्राहो बलाद्दासीकरण भयार्त्तिश्चोरराजादिनेत्यद्य स तस्मिन् पुरुषः स्वानिष्टमपरिहृत्यापि स्वस्त्रीपरिरक्षणमवहितः कुर्यात् । तथा च वसिष्ठः । अप्रमत्ता रक्षत तन्तुमेनमिति । निरीक्षयेदितिणिचा स्वयमशक्तोऽन्यद्वाराऽपि रक्षयेदित्युक्तम् ।

चण्डाल्यादिगमने पुंसः प्रायश्चित्तमभिहितम् । इदानीं स्त्रीणां चण्डालादिगमने पञ्चभिः श्लोकैः प्रायश्चित्तमाह ॥

**चण्डालैः सह सम्पर्कं या नारी कुरुते ततः ।**
**विप्रान् दश वरान्कृत्वा स्वयं दोषं प्रकाशयेत् ॥१७॥**

या चातुर्वर्ण्यस्त्री चण्डालैः सह संपर्कं व्यवाय कुरुते । ततो हेतोर्दश विप्रान् वरान् चातुर्वैद्येत्याद्युक्तगुणसम्पन्नान् पर्षद कृत्वा स्वयमेव स्वकीय दोष पर्षद्दक्षिणादानादिपूर्वक प्रकाशयेत् । चण्डालैरितिबहुवचन स्वसमानधर्मश्वपचाद्यभिप्रायेण । तथाऽङ्गिरा. ।

चण्डाल· श्वपच. क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेत्यावसायिनः ।

इति । अत एव च व्यासः । सपृक्तास्यादधात्यैर्येत्यात्ययग्रहणमेव कृतवान् ।

तेन रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥

इत्यापस्तम्बोक्तानामप्यन्त्यानामग्रहण सिद्धम् । दशावरानिति पाठे दश अवरा येऽल्पास्तानित्यर्थः । पर्षदि दोषप्रकाशनस्य सामान्यतः प्राप्तावपि स्वय दोष प्रकाशयेदिति पुनर्विधानमप्रकाशस्याप्यस्य दोषस्य रहस्यप्रायश्चित्तापवादेन पर्षदुपदिष्टप्राश्चितप्राप्त्यर्थं ।

तदेवाह ॥

**आकण्ठसंमिते कूपे गोमयोदककर्दमे ॥**
**तत्र स्थित्वा निराहारा त्वहोरात्रेण निष्क्रमेत् ॥१८॥**

कण्ठप्रमाणं कूपं गत्वा सोदकेन गोमयेन समापूर्य तत्रैकमहोरात्रं निराहारा स्थित्वा परेद्युर्निष्क्रमेत् ।

किञ्च

**सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम् ।**
**त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत् ॥१९॥**

गोमयोदककूपान्निर्गत्य सशिखं वपनं कृत्वा यावकौदनं यवमयं चरुं द्वितीयेऽहनि भुक्त्वा अनन्तरं त्रिरात्रमुपोष्य षष्ठेऽहोरात्रं आकण्ठं जले वसेत् । यद्यपि ॥

शिखा यज्ञोपवीतं च कुशा मौनं तथैव च ।
वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षट् ॥

इति स्मृत्यन्तरे स्त्रीणां शिखानिषेधात्सशिखमिति नोपपद्यते तथापि ।

सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम् ॥

इति विशेषविहितस्त्रीवपनापवादेन समूलकेशवपनमत्रानेनोच्यत इति ।

किञ्च ॥

**शङ्खपुष्पीलतामूलं पत्रं वा कुसुमं फलम् ।**
**सुवर्णं पञ्चगव्यं च क्राथयित्वा पिबेज्जलम् ॥ २० ॥**

सप्तमेऽहनि जलान्निर्गत्य शङ्खपुष्पीलतायाः मूलपत्रपुष्पफलानामन्यतमं सुवर्णं पञ्चगव्यं चैकत्र जले क्राथयित्वा तज्जलं पिबेत् ।

किञ्च ॥

**एकभुक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत् ।**
**व्रतं चरति तद्यावत्तावत्संवसेत बहिः ॥ २१ ॥**

ततोऽष्टमदिनमारभ्य यावदृतुदर्शनमेकभुक्तं चरेत् । यावदुक्तं व्रतं समाप्नोति । तावत्सा बहिरेव तिष्ठेन्न गृहे सम्व्यवहरेदिति ।

[1]इत्युक्तवन्तं राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुराक्षर[2]भूषिताम् ॥ १९ ॥
[3]तपोधन महाभाग भगीरथ महारथ ।
एवं भवत्वविच्छिन्नमिक्ष्वाकु-कुलमव्ययम् ॥ २० ॥
[4]इयन्तु गङ्गा सरितां प्रवरा स्वर्गतश्च्युता ।
[5]या सा देवनदी गङ्गा शुद्धा हिमवतश्च्युता ॥ २१ ॥
दारयेत् पृथिवीं कृत्स्नां निपतन्ती महौघिनी ।
तदस्या धारणे राजन् शिवो देवः प्रसाद्यताम् ॥२२॥
[6]गङ्गांतु प्रच्युतां राजन् स मूर्ध्ना धारयिष्यति ।
नान्यस्तस्माच्छिवादस्याः शक्तो वेगं हि दुःसहम् ॥२३॥
सोढुं निपतमानायास्तस्मात् तं त्वं प्रसादय ।
गङ्गायाः पतनं व्यक्तं भूमिः सोढुं न शक्ष्यति ॥ २४ ॥
तस्या धारयितारञ्च नान्यं पश्यामि शङ्करात् ।
वेगं सुदुःसहं लोके तस्मात् तं त्वं प्रसादय ॥ २५ ॥

---

1 For this Sl B 21 उक्तवाक्य तु राजानं सर्वलोकपितामह । प्रत्युवाच शुभावाणी मधुरा मधुराक्षरा ॥ G 19 इत्युक्तवाक्य etc 2 P भाषित 3 For this Sl B 22 मनोरथो महारथ भगीरथ महारथ । एव भवतु भद्रते इक्ष्वाकुकुल(a) वधन ॥ (a) V मव्यय । 4 For this and the following 4 Slokas B 23-24 इय हैमवती ज्येष्ठा गगा हिमवत सुता । ता वै धारयितुराजन् हरस्तत्र नियुज्यता ॥ गगाया पतन राजन पृथिवी न सहिष्यते । ता वै धारयितु राजन नान्यं पश्यामि शूलिन ॥ 5 this line is wanting in G 6 this Sl and the following line are wanting in G

[1]स एवमुक्त्वा राजानं भगवान् प्रपितामहः ।
आभाष्य च [2]महीपालं भगवान् त्रिदिवं ययौ ॥ २६ ॥

आदिकाण्डे भगीरथवरप्रदानम् ।

---

## XLV

[3]प्रजापतौ गते तस्मिन्नङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा महीतलं राजा संवत्सरमुपा[4]विशत् ॥ १ ॥
[5]ऊर्ध्वबाहुर[6]नालम्बो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत् स्थित्वा रात्रिंदिवमतन्द्रितः ॥ २ ॥
[7]अथ संवत्सरे पूर्णे सर्वदेवनमस्कृतः ।
उमापतिः पशुपतिर्भगीरथमभाषत ॥ ३ ॥
[8]प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि प्रियं महत् ।
पतन्तीं धारयिष्यामि दिवस्त्रिपथगां नदीम् ॥ ४ ॥

---

1 For this Sl B 25 तमेवमुक्त्वा राजानं गंगां चाभाष्य लोककृत । जगाम त्रिदिवं(a) देवैः सर्वैः सह मरुद्गणैः ॥ (1) ब्रह्मा देवैः सह etc G 24 तमेवमुक्त्वा etc 2 G 24 महीं नेतुं गंगां स त्रिदिवं etc but P agrees with our text 3 For this and the following Sl. B XLIII 1 देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् । कृत्वा वसुमतीं राम(1) वत्सरं समुपासत ॥ (1) V संवत्सरमुपासत 4 G 1 वसत 5 This Sl is wanting in B but V ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः । अचलः स्थाणुवत्स्थित्वा(1) रात्रिंदिवमतन्द्रितः ॥ (1) ऽ रात्रिंदिवमुपागतः 6 G 2 र्निरालम्बो etc, but P has रनालम्बो etc 7 For this Sl B 2 अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः । उमापतिः पशुपती राजानमिदमब्रवीत् ॥ 8 For this Sl B 3 प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् । शिरसा धारयिष्यामि शैलराजसुतामहम् ॥

[1]ततो हिमवतः शृङ्गमधिरुह्य महेश्वरः ।
निपतेत्यब्रवीद्गङ्गामाभाष्याकाशगां[2] तदा ॥ ५ ॥
जटाकलापं विपुलं विनिकीर्य समन्ततः ।
बहुयोजन[3]विस्तारं शैलकन्दरसंनिभम् ॥ ६ ॥
तस्मिन् पपात गगणाद्गङ्गा देवनदी च्युता ।
वेगेन महता राम शिरस्यमिततेजसः ॥ ७ ॥
तत्र संवत्सरं पूर्णं बभ्राम परिमोहिता ।
गङ्गा शिरसि देवस्य[4]निःसृता वेगवाहिनी ॥ ८ ॥
[5]ततः प्रसादयामास पुनरेव भगीरथः ।
गङ्गायाः परिमोक्षार्थं महादेवमुमापतिम् ॥ ९ ॥
[6]तस्याथ वचनाद्गङ्गामुत्ससर्ज[7]भगार्दनः ।

---

1 For this, and the following 3 slokas, B 4-9 ततो हैमवती ज्येष्ठ सर्वलोकनमस्कृता । तदा साति महद्रूप कृत्वा वेग च दु सह ॥ आकाशादपतद्राम शिवे शिवशिरस्युत ॥ अचिनयच्च सा देवी गगा परमदुर्द्धरा ॥ विशाम्यह हि पाताल स्रोतसा गृह्य शकर । तस्यावलेपन ज्ञात्वा क्रुद्धस्तु भगवान् हर ॥ तिरोभावयितु बुद्धि चक्रे त्रिनयनस्तदा । सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्द्धनि ॥ हिमवत्प्रतिमे राम जटामण्डलगह्वरे । सा कथचिन्महा गतु नाशक्नोद्यत्नमास्थिता ॥ नैव सा निर्गम लेभेज-टामण्डल (a) मतत । तत्रैवाबभ्रमद्देवी सवत्सरगणान् बहून् ॥ (a) V मोहिता-
2 G 5 नदी P तथा 3 G 6 विस्तीर्ण etc but P has विस्तारं etc 4 G 8 विसृता etc 5 For this Sl B 10 तामपश्यत्पुनस्तत्र तप परममास्थित । स तेन तोषितश्चासी(a)दत्यत रघुनदन ॥ (a) S दत्यथ etc 6 For this and the following 15 Slokas, B 11 13 विससर्ज ततो गगा हरो विन्दुसरः प्रति । तस्या विसृज्यमानाया सप्तस्रोतासि जज्ञिरे ॥ ह्लादिनी पावनी चैव नलिनी च तथैव च । तिस्र प्राची दिश जग्मुर्गगाशिवजला शुभा । सुचक्षुश्चैव सीता च सिधुश्चैव महानदी । तिस्रश्चैता दिश जग्मुः प्रतीची तु(a)दिश शुभा ॥ (a) V शुभोदका 7

जटामेकां समाक्षिप्य श्रोतः संजनयंस्तदा ॥ १० ॥
श्रोतसा तेन सुस्राव गङ्गा त्रिपथगामिनी ।
प्लावयन्ती जगद्राम पुण्या देवनदी शुभा ॥ ११ ॥
[1]ताञ्च सिद्धाःसर्षिगणाः शिरसा जगृहुस्तदा ।
[2]सेन्द्रैः सुरगणैः सार्द्धं पूजयन्तो महानदीम् ॥ १२ ॥
ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा ।
विमानैर्विविधैराम हयैर्गजवरैस्तथा ॥ १३ ॥
परिप्लवगताश्चापि देवतास्तत्र विष्ठिताः ।
स्वयं चानुजगामैनां ब्रह्मा लोकपितामहः ॥ १४ ॥
तदद्भुततमं लोके गङ्गापतनमुत्तमम् ।
दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ १५ ॥
संपतद्भिः सुरगणै स्तेषां[3]चाभरणौजसा ।
शतादित्यमिवासी[4]त्तद् गगणं गततोयदम् ॥ १६ ॥
क्वचिद्द्रुततरं प्रायात् कुटिलं क्वचिदायतम् ।
विततं क्वचिदुद्भूतं शनैरपि पुनः क्वचित् ॥ १७ ॥
सलिलेनैव सलिलं क्वचिदभ्याबधीत् पुनः ।
शिशुमारोरगगणै मीनैरपि[5]सुचञ्चलैः ॥ १८ ॥

---

G 10 तदा हर, but P has भगार्दनः 1 this Sl is wanting in G, P has ता प्रच्युता मुनिगणा शिरसा etc 2 P सेन्द्रा. etc 3 G 15 चाभरणाज्वल, but P has चाभरणौजसा 4 G 15 त्तु etc but P has त्तद etc 5, G. 17. च चञ्चलैः

विद्युद्भिरिव विक्षिप्तैराकाशमभवद्वृतम् ।
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणं सहस्रधा ॥ १९ ॥
[1]शरदभ्रमिवाभाति गगनं हंससंप्लवैः ।
मुहुरूर्ध्वमधो गत्वा पपात धरणीतले ॥ २० ॥
तच्छङ्करशिरोभ्रष्टं गतं भूमितलं पयः ।
ग्रहाः सगणगन्धर्वा वसुधातलवासिनः ॥ २१ ॥
नागाश्च शोधयामासुर्मार्गमस्य महौजसः ।
भवाङ्गसङ्गते तोये पवित्रे तत्र पूजिते ॥ २२ ॥
कृत्वाभिषेकं ते सर्वे बभूवुर्गतकल्मषाः ।
[2]पापाद्भूपतिता ये च गगनाद्वसुधातलम् ॥ २३ ॥
पूतात्मानः पुनस्तेन सलिलेन दिवं गताः ।
जेपुर्देवर्षयो जप्यं सिद्धाश्च परमर्षयः ॥ २४ ॥
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
मुनिसंघा मुमुदिरे प्रह्लादं[3]जगदाप्लवत् ॥ २५ ॥
[4]त्रयोऽपि लोका मुदिता गङ्गावतरणे तदा ।
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ २६ ॥
[5]प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वयात् ।

1 G 19 शरच्छुभ्र etc , P शरच्चन्द्र etc 2 G 22 शापात् प्रपतिता etc 3 G 24 जगदाप्लवान, but P has जगदाप्तवत 4 For this Sl B 14 सप्तमी चान्वगात्तासां भगीरथ(a)रथतदा ।। भगीरथोऽपि राजर्षिर्दिव्यस्यदनमास्थित ॥ (a) V मथो नृप 5 For this Sl. B 15 प्रायादग्रे महातेजा गगा तचाप्यनुव्रजत । गगनाच्छङ्करशिरस्ततो धरणीमागता ॥ B (16-31) then reads the following, which very closely agrees with slokas 10-27 of our text, and

महातरङ्गौघवती प्रनृत्यन्तीव राघव ॥ २७ ॥
स्ववेगोद्भ्रामितजला फेनमालावतंसिका ।
महाजलावर्त्तवती महावेगप्रवाहिनी ॥ २८ ॥
प्रययौ विलसन्तीव भगीरथरथानुगा ।
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ॥ २९ ॥
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ।

---

comes back to प्रायादगे etc again, slightly changed (a)प्रसर्पत जल तत्र तीव्रशब्दपुरस्कृत । मत्स्यकच्छपसङ्घैश्च । (b)शिशुमारगणैस्तथा ॥ पतद्भि पतितैश्चैव व्यराचत वसुधरा । ततो देवर्षिगन्धर्वायक्षसिद्धगणास्तथा ॥ व्यलोकयन्त ते तत्र गगनादगागता तदा । विमानै(c)र्नगराकारैर्हयैर्गजवरै(d)स्तदा ॥ पारिप्लवगताश्चापि देवतास्तत्रविष्ठिता । तदद्भुतमिमलेोके गगाव(e)तरमुत्तम । दिदृक्षवो देवगणा समीयुरमितौजस । सपतद्भि सुरगणैस्तेषा चाभरणैाजसा ॥ शतादित्यमिवाभाति गगन गततोयद ।(f)शिशुमारोरगगणैर्मीनैरपि च चचले ॥ विद्युद्भिरिव(g)विक्षिप्तैराकाशमभवत्तदा । पाण्डुरै सलिलोत्पीडै कीर्यमाणै सहस्रधा ॥ शारदाभ्रैरिवाकीर्ण गगन हससप्लवै । क्वचिदद्रुततर याति कुटिल क्वचिदायत ॥ विनत क्वचिदुद्धूत क्वचिद्याति शनै शनै ।(h)सलिलेनैव सलिल क्वचिदभ्याहत पुन ॥ मुहुरूर्ध्वपथगत्वा पपात वसुधा पुन । तच्छकरशिरोभ्रष्ट भ्रष्ट भूमितले पन ॥ व्यरोचत तदा तोय निर्मल गतकल्मष । तत्रर्षिगणगन्धर्वा वसुधातलवासिन ॥ भवागपतित तोय पवित्रमितिपस्पृशु । शापात्प्रपतिता ये च गगनाद्वसुधातल ॥ कृत्वा तत्राभिषेक ते बभूवुर्गतकल्मषा । (j)धूतपापा पुनस्तेनतोये(k)नाथ शुभान्विता ॥ पुनराकाशमाविश्य(l)स्वान् लोकान् प्रतिपेदिरे । मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ॥ कृताभिषेको गगाया बभूव गतकल्मष भगीरथो हि राजर्षिर्दिव्य स्यदनमास्थित ॥ प्रायादग्रे(m)महाराजस्तगगा पृष्ठतोन्वगात । देवा सर्षिगणा सर्वे दैत्यदानवराक्षसा ॥ the last Sl covers the ground of slokas 27–29 of our text (a) V & S व्यसर्पत etc (b) S e शिशुमार etc (c) V गगनाकारै etc (d) V तथा (e) V तरण शुभ (f) V & S शिशुमार etc (g) V विक्षिप्तमाकाश etc (h) सच्छदेनैव etc (j) V धूतशापा etc (k) V नानेन भास्वता (l) S स्वर्लोकान् etc (m) V महातेजा etc 1 G 28 यथा

[1]सर्वाश्चाप्सरसो राम भगीरथरथानुगा ॥ ३० ॥
गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ।
[2]यतो भगीरथो[3]राजा ततो गङ्गा यशस्विनी ॥ ३१ ॥
[4]जगाम नरशार्दूल सर्वलोकनमस्कृता ।
स गत्वा सागरं राजा गङ्गयानुगस्तदा ॥ ३२ ॥
[5]प्रविवेश तलं भूमेः खातं यत् सगरात्मजैः ।
उपानीय ततो गङ्गां रसातलतलं प्रभुः ॥ ३३ ॥

---

नुगा 1 B 32 सर्पा etc, but V has सर्वा etc 2 Between the 2 lines of this Sl P reads the additional line, गगा मभियुस्तन सर्वाश्च सरित शुभा । 3 C 30 गच्छेत etc, but P has राजा &c Between the slokas 31&32 of our text, B (34-38) reads जगाम सरित श्रेष्ठा सर्वपापप्रणाशिनो । ततो हि य मानस्य जह्नोरद्भुतकर्मण । गगा सप्लावयामास यज्ञवाट महात्मन । तस्यावलेपन ज्ञात्वा क्रुद्धो जह्नुश्च राघव ॥ अपिबत्तु जल सर्वं गगाया परमाद्भुत । ततो देवा सगन्धर्वा ऋषयश्च सुविस्मिता ॥ पूजयन्ति महात्मान जह्नु पुरुषसत्तम । गगाचापि नयन्ति स्म दुहितृत्वे महात्मन ॥ ततस्तुष्टे महातेजा श्रोत्र भ्यामसृज(a)त्प्रभु । (b)तस्माज्जह्नुसुता गगा प्रोच्यते जाह्नवीति च ॥ (a) V त्पुन (b) Before this line V reads the Sl विसृज्य गगा राजेन्द्र गत्वा प्राप्त भगीरथ । पूजयित्वा यथान्याय यज्ञवाटमुपागमत ॥ 4 For this Sl B 39 जगाम च पुनर्गगा भगीरथरथानुगा । सागर चापि सप्राप्ता सा सरित्प्रवरा तदा ॥ 5 For this and the following 3 Slokas, B 40-42, and XLIV 1 3 रसातलमुपागच्छत सिद्ध्यर्थं तस्य कर्मणः । भगीरथोऽपि राजर्षिर्गगामादाय यत्नत. ॥ पितामहान् भस्मकृतानपश्यद् गतचेतन । अथ(a)तद्भस्मनाराशि गगासलिलमुत्तम ॥ प्लावयत्(b)पूतपाप्मान स्वर्ग प्राप्ता रघूत्तम ॥ ४२ ॥ सगत्वा सागर राजा गगयानुगतस्तदा । प्रविवेश तल भूमेर्यत्र ते भस्मसात्कृता. ॥ भस्मन्यथाप्लुते राम गङ्गाया सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ तारिता नरशार्दूल दिवुयाताश्च देववत । (a) V. त etc (b) V धूत etc.

तर्पयामास तान् सर्वान् भस्मभूतान् पितामहान् ।
अथ गङ्गाम्भसा[1] तत्र प्लाविताः सगरात्मजाः ॥ ३४ ॥
दिव्यमूर्तिधरा भूत्वा जग्मुः स्वर्गं मुदा[2] युताः ।
तान् दृष्ट्वा प्लावितान् सर्वान् पितॄंस्तेन महात्मना ॥३५॥
भगीरथमुवाचेदं ब्रह्मा सुरगणैः सह ।
तारिता नरशार्दूल त्वया पूर्वपितामहाः ॥ ३६ ॥
[3]षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ।
अन्वयः सगरस्यायं नाम्ना ख्यातो महोदधिः ॥ ३७ ॥
व्यक्तं सागर इत्येव ख्यातिंलोके गमिष्यति ।
यावत्स सागरो लोके स्थितोऽयमिह शाश्वतः ॥३८॥
[4]सगरः सहितः पुत्रैस्तावत् स्वर्गे निवत्स्यति ।
इयञ्च दुहिता राजंस्तव गङ्गा भविष्यति ॥ ३९ ॥
[5]भागीरथीति विख्याता त्रिषु लोकेषु[6] भूपते ।
गङ्गेति गमनाद्भूमेः ख्याता भागीरथीति च ॥ ४० ॥
[7]भविष्यति सरिच्छ्रेष्ठा लोके त्रिपथगेति च ।

---

1 G 33 तेन etc but P has तत्र etc 2 G 34 न्विता, but P has युता. 3 For this, and the following Sl B 3-4 षष्टि पुत्रसहस्राणि सगरस्यमहात्मन ॥ सागरस्य जललोके यावत स्यास्यति पार्थिव । 4 For this Sl B 4–5 सगरस्यात्मजा सर्वे दिवि स्थास्यति देव वत ॥ इय च दुहिता ज्येष्ठा तव गगा भविष्यति । 5 For this Sl B 5 6 त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥ गंगा त्रिप्रथगा नाम दिव्या भागीरथीति च । 6 G 39 विश्रुता 7 For this, and the following 4 slokas, B 6 15 त्रीन् पथो भावयतीति तस्मात्त्रिपथगा स्मृता ॥ पितामहाना सर्वेषा त्वमत्र

प्रसिद्धं चापि नामास्यास्त्रिमार्गगमनादिदम् ॥ ४१ ॥
त्रीँल्लोकान्[1] तारयन्त्या वै सुरार्षिभिरुदाहृतम् ।
द्वितीयञ्चापि गङ्गेति गाङ्गताया विशांपते ॥ ४२ ॥
भागीरथीति चाप्येतत् तृतीयं नाम सुव्रत ।
त्वत्प्रीत्या[2] भविष्यतिच सुतेयं ते विचक्षण ॥ ४३ ॥
यावच्च भुवि गङ्गेयं भविष्यति महानदी ।
तावत्तवाक्षया कीर्तिर्लोकेषु विचरिष्यति ॥ ४४ ॥
[3]पितामहानां सलिलं कुरुष्व च यथासुखम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वर्लोकं नरपुङ्गव ॥ ४५ ॥

---

मनुजाधिप । कुरुष्व सलिल राजनप्रतिज्ञामपवर्जय ॥ (a)पूर्वकेण हिते राजस्तेनाति यशसा तदा। धर्म्मिणा प्रवरेणाथ नैष प्राप्तो मनोरथ । तथैवाशुमता वत्स-लोकेऽप्रतिमतेजसा। गगा प्रार्थयता नेत प्रतिज्ञा नापवर्जिता ॥ राजर्षिणा गुणवता महर्षिसमतेजसा। मत्तुल्यतपसा चैव क्षत्रधर्म्मस्थितन च ॥ दिलीपेन महाभाग तव-पित्रातितेजसा । पुनर्नशक्तिता नतु गगा प्रार्थयतानघ ॥ सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ। प्राप्तोऽसि परमनाके यश परमसम्मत ॥ तच्च गगावतरण त्वया कृतमरिदम। अनेन च भवान प्राप्तो धर्म्मस्यायतन महत ॥ प्लावयस्व त्वमात्मान नरोत्तम सदोचिते , सलिले पुरुषश्रेष्ट शुचि पुण्यफलोभव ॥ पितामहाना सवषा कुरुष्वसलिलक्रिया । स्वस्ति तेऽस्तु गमिष्यामि(b)स्वलोक गम्यता नृप ॥ (a) V पूर्व केणापिते etc (b) S स्वर्लोक etc 1 G 41 प्लावयन्त्या etc 2 G 42, च भविष्यति etc 14 3 Before this Sl G reads 8 Slokas, which the same as B 7-14 in matter, but differ here and there in wording—पितामहाना सर्वषा त्वमत्र मनुजाधिप। कुरुष्व सलिल राजन प्रतिज्ञामप(?)वर्जय ॥ पूर्वजेनापिते राजस्तेनातियशसा सता । धर्म्मिणा प्रवरेणापि नैव प्राप्तो मनोरथ ॥ तथैवाशुमता तात लोकेऽप्रतिमतेजसा। गगा प्रार्थयतानेन न प्राप्त काम एव हि ॥ राजर्षिणा पुराणाना महर्षिसमतेजसा । अतुल्यतपसा चापि क्षत्रधर्म्मस्थितेन च ॥ दिलीपेन महाभाग तव पित्रातितेजसा • पुनर्न शकित तेन गंगा प्रार्थयतानघ ॥ सा

[1]इत्युक्त्वा भगवान् ब्रह्मा भगीरथमरिन्दमम् ।
जगाम सहितो देवैर्ब्रह्मलोकमनामयम् ॥ ४६ ॥
[2]भगीरथोऽपि राजर्षिः कृत्वा तेषां जलक्रियाम् ।
पितामहानां सर्वेषामयोध्यां पुनरागमत् ॥ ४७ ॥
समृद्धार्थो नरश्रेष्ठो[3]राज्यं चानुशशास ह ।
प्रमुमोद च लोकस्तं नृपमासाद्य राघव ॥ ४८ ॥
[4]इति ते राम गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि भद्रं ते सन्ध्या[5]काल उपस्थितः ॥ ४८ ॥
[6]धन्यं यशस्यमायुष्यं स्वर्ग्यं पावनमेव च ।
इमदाख्यानमाख्यातं गङ्गावतरणं मया ॥ ५० ॥

आदिकाण्डे गङ्गावतरणम् ॥

---

त्वया समनुप्राप्ता प्रतिज्ञा पुरुषर्षभ । प्राप्तोऽसि परम लोके यशस्विदशसम्मत ॥ यच्च गगावतरण त्वया कृतमरिदम । अनेन(b)सुमहत् प्राप्त धर्म्मस्थान त्वयानघ ॥ पावयस्व त्वमात्मान(c)नरोत्तमसदोचिते । सलिले पुरुषश्रेष्ठशुचि पुण्यफलोभव ॥ (a)P वर्जयन (b) P चमहत etc (c)P सुरोत्तमसदोचित । 1 For this Sl B 16 इत्येवमुक्त्वा देवेश सर्वलोकपितामह । यथागत तथागच्छद्देवलोक महायशा ॥ 2 For this Sl B 17–18 भगीरथस्तु राजर्षि कृत्वा सलिलमुत्तम । यथाक्रम यथान्याय सागराणा महायशा ॥ कृतोदक शुचोराजा स्वपुर प्रविवेश ह । 3 B 18 स्वराज्य प्रशशासह B 19 has, प्रमुमोद etc for its first line, and नष्टशोक समृद्धार्थो बभूव विगतज्वर ॥ 4 B 20 गच्छते etc 5. B 20 कालोऽतिवर्तते 6 For this Sl B 21–23 धन्य यशस्यमायुष्य पुत्र्य स्वर्ग्यमथापि च । य श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥ प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च । इदमाख्यानमायुष्य गगावतरण शुभ ॥ य शृणोति(a)च व्यकुत्स्य सर्वान् कामान वाप्नुयात् । सर्वे पापा प्रणश्यन्ति आयु कीर्तिश्च वर्धते ॥(a)S स etc

XLVI

[1]विश्वामित्रवचः श्रुत्वा रामोदशरथात्मजः ।
विस्मयं परमं गत्वा प्रोवाचेदं वचस्तदा ॥ १ ॥
[2]अत्यद्भुतमुपाख्यान त्वयाख्यातं महामुने ।
गङ्गावतरणं पुण्यं सागरस्य च पूरणम् ॥ २ ॥
[3]इयं नोरजनी पुण्यात्क्षणभूता भविष्यति ।
इमां चिन्तयतामेव कथांपाप भयापहाम् ॥ ३ ॥
[4]तस्य सा रजनीपुण्या सहसैामित्रिणातदा ।
गताचिन्तयतस्तयविश्वामित्रस्य तां कथाम् ॥ ४ ॥
[5]ततः प्रभातेविमले विश्वामित्रं महामुनिम् ।
उवाचरामः सत्कृत्य कृताह्निकमिदं वचः ॥ ५ ॥
गताभागवतीरात्रिः श्रोतव्यं[6]परमं श्रुतम् ।
[7]संतरामः सरिच्छ्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥ ६ ॥
[8]द्रूढेयं नैाःसुविस्तीर्णा सन्तारयितुमापगाम् ।

---

1 For this Sl B XLV 1 विश्वामित्रवच श्रुत्वा राघव सहलक्ष्मण विस्मय परम गत्वा विश्वामित्रमथाब्रवीत ॥ 2 For this Sl B 2 अत्यदभुतमिद ब्रह्मन् कथित परमत्वया । गगावतरण पुण्य सागरस्यापि पूरण ॥ 3 For this S B 3 क्षणभूतेव(a)नैारात्रि सवृत्तेय(b)परतप । इमाचितयत सर्वा निखिलेन कथा तव ॥ (a) S सा रात्रि etc (b) V महातप 4 For this Sl B 4 तस्य सा शर्वरी सर्वा मम सैामित्रिणा सह । जगामचितयानस्य विश्वामित्रकथाशुभा । G 4 तत etc , but P has तस्य etc 5 For this Sl B 5 तत प्रभाते विमले विश्वामित्र तपोधन । उवाचराघवो वाक्य(a)कृताह्निकमरिदम ॥ (a)V कृत्वा etc 6 B 6 परमादभुत, V परमशुभ 7 B 6 तरामसरिता श्रेष्ठा etc 8 For this Sl B 7 नैारेषा हि सुखास्तीर्णा ऋषीणा पुण्यकर्मणा । भगवतमिह प्राप्त

भवन्तमिह[1] संप्राप्ताद्दृष्ट्वैवेति मतिर्मम ॥ ७ ॥
[2]इत्येतद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः ।
संतारं कारयामास विश्वामित्रो महामुनिः ॥ ८ ॥
[3]उत्तरं तीरमासाद्य ततः समुनि पुङ्गवः ।
अपश्यत् तत्रनिरतांस्तापसान् नियतव्रतान् ॥ ९ ॥
सतान् संपूज्य विधिवज्जगाम सहराघवः ।
विशालस्य पुरींरम्यां दिव्यां स्वर्गपुरीमिव ॥ १० ॥
[4]तत्र रामो महाबुद्धि र्विश्वामित्रमिदं तदा ।
पप्रच्छप्राञ्जलिर्भूत्वा वैशालीं प्राप्य तां पुरीम् ॥११॥
[5]कतमोराजवंशोऽयं विशालस्य महात्मनः ।
श्रोतुमिच्छामिभगवन् कौतूहलसमन्वितः ॥ १२ ॥
[6]तस्यैतद् वचनं श्रुत्वारामस्य[7]विजितात्मनः ।
आख्यातुमुपचक्राम विश्वामित्रो[8]महायशाः ॥१३॥

ज्ञात्वा त्वरितमागता ॥ 1 G 7 सप्राप्त etc 2 For this Sl B 8 तस्य तद्वचन श्रुत्वा राघवस्य महात्मन । सतारकारयामास सर्षिसघस्य(१)कौशिक ॥ (१)V राघव, (which is evidently wrong. 3 For this, and the following Sl B 9 & 10 उत्तर तीरमासाद्यसपूज्यर्षिगण तत. । गगाकूले निविष्टास्ते विशाला ददृशु पुरी ॥ ततो मुनिवरस्तूर्ण जगाम सहराघव । विशाला नगरी रम्या दिव्या स्वर्गोपमा तदा ॥ 4 For this Sl B 11 अथ रामो महाप्राज्ञो विश्वामित्र महामुनि । पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमा पुरी ॥ 5 For this Sl B 12. कतमो राजवशोऽय विशालाया महामुने । श्रोतुमिच्छामि भद्रते पर कौतूहल हि मे ॥ 6 For this Sl B 13. तस्य तद्वचन श्रुत्वा रामस्य मुनिपुगव । आख्यातु तत समारेभे(a)विशालाया पुरातन ॥ (a) V & S विशालस्य etc G 13 तस्येद etc. 7 T3 विदितात्मन, but P has विजितात्मन 8 G 13 महा-

[1]श्रुता मयेयं शक्रस्य पुरा कथयत: कथा ।
यथा दिविसभामध्ये शृणु तां मम राघव ॥ १४ ॥
[2]आसन् कृतयुगे राम दितेः पुत्रा महाबलाः ।
अदितेश्च महावीर्याः [3]स्ववीर्यबलदर्पिताः ॥ १५ ॥
भ्रातरः स्पर्धिनः पुत्राः कश्यपस्य महात्मनः ।
मातृष्वसेयाः [4]सापत्न्याः परस्परजिगीषवः ॥ १६ ॥
[5]तेषां किल समेतानां बुद्धिरासीन्महौजसाम् ।
अजराश्चामराश्चैव कथं स्यामेति राघव ॥ १७ ॥
[6]तेषां [7]चिन्तयतां राम बुद्धिरासीद्विनिश्चिता ।
क्षीरोदं सागरं सर्वे मथ्नीमः सहिता वयम् ॥ १८ ॥
[8]वनौषधीः समाहृत्य प्रक्षिप्य च ततस्ततः ।
यत् तत्रोत्पत्स्यते सारं तत् पास्यामस्ततो वयम् ॥ १९ ॥
तेनाजरामरा लोके भविष्यामो गतज्वराः ।
तेजोवीर्यबलोपेताः कान्तिद्युतिसमन्विताः ॥ २० ॥

तपा 1 For this Sl B 14 श्रूयता राम शक्रस्य कथा कथयत (a) श्रुता (b) अस्मिन देशे हि यद्वृत्त शृणु तत्त्वेन राघव ॥ (a) V शुभा (b) Between the two lines of this Sl S reads the line : ता मे निगदतो वत्स शृणु तत्त्वेन राघव । 3 For this and the following Sl B 15 पूर्वं कृतयुगे राम दिते पुत्रा महाबलाः । आदितेश्चमहाभोगा वीर्यवतः सुधार्मिका ॥ 19 P सुवीर्य etc 4 P सापत्ना etc. 5 For this Sl B 16 ततस्तेषा नरव्याघ्र बुद्धिरासोन्महात्मनाम । अमराविजराश्चैव कथ स्यामो निरामया. ॥ 6 For this Sl B 17 तेषा चिन्तयता(a)तत्र बुद्धिरासीद्दृढनिश्चिता । क्षीरोदमथन कृत्वा रस प्राप्स्याम तत्र वै ॥ (a) V राम etc 7 G 18 चिन्तयतामेव etc P चिन्तयतामेव etc. 8. this, and the following Sloka, are wanting in B G: 19 नानौषधी

[1]इति ते निश्चयं कृत्वा ममन्थुर्वरुणालयम् ॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा[2]च वासुकिम् ॥ २१ ॥
[3]अप्सु निर्मथ्यमानासु रसात्तस्माद्वरस्त्रियः ।
उत्पेतु[4]र्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ २२ ॥
[5]षष्टिः कोट्योऽभवन् राम तासामप्सरसां तदा ।
दिव्यानां दिव्यरूपाणां दिव्याभरणवाससाम् ॥ २३ ॥
रूपयौवनमाधूर्यगुणाढ्यानां सुवर्चसाम् ।
असंख्येया बभूवुश्च यास्तासां परिचारिकाः ॥ २४ ॥

---

etc 1 For this Sl B 18 ततो निश्चित्य मथन योक्त्र कृत्वा च वासुकि । मथान मदर कृत्वा ममथुरमितौजस ॥ 2 G 21 तु etc, but P has च etc Between this and the following Sl of our text B (19-33) has —अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च । वमन्तोऽतिविष तत्र ददशुर्दशनै शिला ॥ उत्प पाताग्निसकाश हालाहल महाविष । तन दग्ध जगत्सर्व सदेवासुरमानुष ॥ अथदेवा महादेव शकर शरणार्थिन । जग्मु पशुपति रुद्र त्राहि त्राहीति तुष्टुवु ॥ एवमुक्त-स्ततो देवैर्देवदेवेश्वर प्रभु । प्रादुरासात्ततोऽत्रैव शखचक्रधरो हरि । उवाचैन स्मित कृत्वा रुद्र शूलधर हरि । दैवतैर्मथ्यमान तु यत्पूर्व समुपस्थित ॥ तत्त्वदीय सुरश्रेष्ठ सुराणा(a)मग्रतोहियत । अग्रपूजामिहस्थित्वा गृहाणेद विष प्रभो ॥ इत्युक्त्वा च सुर-श्रेष्ठ स्तत्रैवान्तरधीयत । देवताना भय दृष्ट्वा श्रुत्वा वाक्य तु शार्ङ्गिण ॥ हालाहल विषघोर सजग्राहामृतोपम । देवान विसृज्यदेवेशो जगाम भगवान् हर ॥ ततो । (b) देवासुरा सर्वे ममथु रघुनन्दन । प्रविवेशाथ पाताल मथान पर्वतोत्तम ॥ ततोदेवा सगन्धर्वास्तुष्टुवुर्मधुसूदन । त्वगति सवभूताना विशेषेणदिवौकसा ॥ पालयास्मान्महा बाहो गिरिमुद्धर्तुमर्हसि । इति श्रुत्वा हृषीकेश कामठ रूपमास्थित ॥ पर्वत पृष्ठत कृत्वा शिश्ये तत्रोदधौ हरि । पर्वताग्र तु लोकात्मा हस्तेनाक्रम्य केशव ॥ देवाना मध्यत स्थित्वा ममथ पुरुषोत्तम ॥ अथ वर्षसहस्रे ॥ आयुर्वेदमय पुमान । उदतिष्ठ त्सुधर्मात्मा सदण्ड सकमण्डलु ॥ अथधन्वतरिर्नाम अप्सराश्चसुवर्चस ॥ (a) V अग्रजोहि etc (b) S देवा सुरा etc 3 For this Sl B 30 (a)अप्सुनिर्म-थनादेव रसात्तस्माद्वर स्त्रिय । उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ (a) this Sl is wanting in S 4 G 22 रभसा etc 5. For this, and the following

[1]नत्वेता जगृहुर्देवास्तत्रदैत्याश्च राघव ।
अप्रतिग्रहणात् ताश्च सर्वाःसाधारणीकृताः ॥ २५ ॥
वरुणस्य ततः कन्या वारुणी रघुनन्दन ।
उत्पपात[2]रसात् तस्मान्मार्गमाणा परिग्रहम् ॥ २६ ॥
दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुताः[3]प्रीतास्तामगृह्णन्त वै तदा ॥ २७ ॥
[4]सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताः ।
अप्रतिग्रहणात् तस्या दैतेयाश्चासुराः स्मृताः ॥२८॥
[5]उच्चैःश्रवाश्च तत्राश्वो मणिरत्नं च कौस्तुभम् ।
तस्मा[6]देतत्समुद्भूतममृतञ्चाप्यनन्तरम् ॥ २९ ॥
[7]अमृतानन्तरञ्चापि धन्वन्तरिरजायत ।
वैद्य[8]राडमृतस्यैव बिभ्रत् पूर्णं कमण्डलुम् ॥ ३० ॥
[9]धन्वन्तरेरनूद्भूतं विषं लोकविषादकृत् ।
तं नागाजगृहुः सर्वे ज्वलनादित्यसंनिभम् ॥ ३१ ॥

---

Sl B 34 षष्टि कोट्योऽभवन्त।नाम्नप्सराणा सुवर्चसा । असंख्येयास्तु काकुतस्थ यास्तासा परिचारिका ॥ 1 For this Sl B 35 न ता स्म प्रतिगृह्णन्ति सर्वे ते देवदानवा । अप्रतिगहणादेव(?)ता वै साधारणा स्मता ॥ (a) V तेन साधारणा etc 2 B 36 महाभ गा etc 3 B 37 वार जगृहुस्तामनिन्दिता 4 For this Sl B 38 असुरास्तेन दैतेया सुरास्तेनादिते सुना । हृष्टा प्रमुदिताश्चासन् वारुणीग्रहणात सुरा ॥ 5 For this Sl B 39 उच्चै श्रवा हय श्रेष्ठो मणिरत्नच कौस्तुभ । उदतिष्ठन्नरश्रेष्ठ तथैवामतमुत्तम ॥ 6 G 29 देव etc but P has देतत etc 7 For this Sl see B 31 – 32 quoted above. 8 G 30 राजा etc. 9 For this Sl see B 19 and the

[1]अत्रामृतार्थे देवानामसुराणाञ्च विग्रहः ।
आसीद्बलवतां राम लोकक्षयकरो महान् ॥ ३२ ॥
[2]तस्मिन् विमर्दे महति तेषाममिततेजसाम् ।
अदितेरात्मजा राम निजघ्नुस्तान् दितेः सुतान् ॥३३॥
[3]निहत्य च दितेः पुत्रान् राज्यं प्राप्य पुरन्दरः ।
मुमोदर्द्धिं परां प्राप्य सर्वदेवाभिपूजितः ॥ ३४ ॥

आदिकाण्डे अमृतोत्पत्तिः ॥

---

## XLVII

[1]हतपुत्रा ततो देवैर्दितिः परमदुःखिता ।
मारीचं कश्यपं[2] देवी भर्त्तारमिदमब्रवीत् ॥ १ ॥
हतपुत्रास्मि भगवन् [3]पुत्रैः शक्रादिभिस्तव ।
शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोऽर्जितम् ॥ २ ॥

---

following slokas quoted above 1. For this Sl B 40 अथ तस्य कृते राम महानासीत कुलक्षय । अदितेस्तु तत पुत्रा दितिपुत्रानयोधयन ॥ G 32 तदामृतार्थं etc 2 For this, and the following Sl B 41—45 एकतामगमन सर्वे असुरा राक्षसै सह। युद्धमासीन्महाघोर वीर त्रैलोक्यमोहन ॥ यदा क्षय गत सर्वं तदा विष्णु र्महाबल॰। अमृत सोऽहरत्तूर्ण मायामास्थाय मोहिनी ॥ ये गताभिमुख विष्णु(a) मक्षर पुरुषोत्तम। सपिष्टास्ते तदायुद्धे विष्णुना प्रभविष्णुना ॥ अदितेरात्मजा वीरा दिते पुत्रान्निजघ्निरे। अस्मिन् घोरे महायुद्धे दैतेयादित्ययोर्भृश ॥ निहत्य दिति पुत्रा(b) स्तु राज्य प्राप्य पुरदर । शशास मुदितो लोकान् सर्षिसघान सचारणान ॥ (a) V अक्षय etc (b) V श्च etc. 3 after this Sl, G has the additional Sl विज्वरे निहतामित्रो मुमुदे विबुधै॰ सह। तदा च मुदिता लोका सर्षिसघा॰ सचारणा॰ ॥ 3 B XLVI 1 हतेषु तेषु पुत्रेषुदिति etc 5 B नाम etc, V राम etc 4 B 2 तव पुत्रैर्महात्मभि 6 For this Sl B 3 साह तपश्चरिष्यामि गर्भ भेदातुमर्हसि । (a)ईश्वर शक्रहतारं त्वमनुज्ञातुमर्हसि ॥ (a) V ईदृश etc 4 B.

*of the cow When, however, the 'prasiddha' and the 'sādhya' belong to absolutely different classes, the inference follows only from the concomitance of the 'generic form' of the 'linga' with the 'generic form' of the 'object to be inferred', and this inference is called the 'Sāmānyatodrishta' As for instance, having found the activity of such persons, as the farmer, the trader and the servants of the king always leading to certain results, we infer the fact that, of persons observing the rites of their respective castes and conditions also, the activity, which is not found to have reference to any visible purpose, must tend to definite results*

*In Inference, the 'means of knowledge' is the perception of the 'linga,' and the 'knowledge' is the cognition of fire, or the cognition of fire itself may be regarded as the 'means,' and the 'knowledge' is the cognition of the good or indifferent character of the fire*

*Such is the inference that serves the purposes of one's own definite cognition (II-i-8)*

## Commentary

The process of inferential cognition may be thus explained, When a man has become cognisant of the fact of fire existing wherever there is smoke, and there being no smoke when there is no fire, if he, on any occasion, has a definite and doubtless cognition of smoke,—as that 'this is smoke, and not vapour or any such other thing', and at the same time if he happens to recall the aforesaid invariable concomitance of fire and smoke,—then he is led to the inference of fire

*Objection* "If such be the process, then in this we do not meet with the second premiss (the minor premiss) (the

conclusion being deduced from the single proposition 'wherever there is smoke there is fire')"

*Reply* It does not matter if we do not find the minor premiss, as a matter of fact we do not need it, an inferential cognition of the subject of inference follows only from the perception of the *linga* and the remembrance of its invariable concomitance The fact of inferential cognition following after remembrance does not make it uncertain as to the points of time and place, as the perception of the *linga* would restrict it to a definite point of time and place Nor would the '*upanaya*' (Minor Premiss) be absolutely useless, as it would always have to be brought forward in the case of inference for the sake of others, wherein it would serve the purpose of pointing out the fact of the *linga* belonging to the '*paksha*,'—a fact not indicated by any other factor in the process

*Objection*, "Well Sir, what is this '*avinābhāva*' (Invariable Concomitance)?"

*Reply* It is '*avyabhicāra* (non failure of concomitance)

*Question* "From what cause does this proceed?"

To this question, the *Bauddhas* offer the following answer "Invariable concomitance follows from—(*a*) identity or connate-"ness, and (*b*) 'origination,' (i e 'from the characteristic "features of the thing, and from the relation it bears to its "cause)

"That is to say, (*b*) a chance relationship is such that it "may or may not be, there being no restrictive cause If a cer-"tain property is seen in the *sapaksha*, and not seen in the "*vipaksha*, these two facts alone are not enough for the recogni-"tion of an invariable concomitance between the two, as sus-"picions as to its existing in the *vipaksha* will not have been "altogether set aside, When however, its 'origination' is duly "ascertained, those suspicions are set aside, as in the absence "of the cause, the effect cannot come into existence The ascer-"tainment of its origination is a cause in the case, having for its

इति । अत्रैव विषये सवर्णसम्पर्के ऋष्यशृङ्गः ।

बलेन कामिता नारी सवर्णेन कथं चन ।
प्रायश्चित्तं त्रिरात्रं वै तस्याः शुध्यर्थमादिशेद् ॥

इति । अन्यत्र तु स्त्रीणामकामतः प्रातिलोम्येन व्यवाये संवर्त्तः ।

ब्राह्मण्या कामतो गच्छेन् क्षत्रियो वैश्य एव वा ।
गोमूत्रयावकैर्मासात्तदर्द्धाच्च विशुध्यति ॥
ब्राह्मण्याः शूद्रसंपर्के कथं चित्समुपागते ।
चान्द्रायणेन शुद्धिः स्यात्तत्स्याः पावनं परम् ॥

इति । क्षत्रियसङ्गमेऽर्द्धमासं वैश्यसङ्गमे मासमिति द्रष्टव्यम् । यदेव ब्राह्मण्याः क्षत्रियसङ्गमे तदेव क्षत्रियाया वैश्यसङ्गमे यदेव ब्राह्मण्या वैश्यसङ्गमे तदेव क्षत्रियायाः शूद्रसङ्गम इत्यादूह्यम् । एकान्तरत्वस्य साम्याद्गतान्तराश्रवणाच्च । कामतस्तु बृहत्प्रचेताः ।

विप्रा शूद्रेण संपृक्ता न चेत्तस्मात्प्रसूयते ।
प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसङ्गमे ।
कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसङ्गमे ॥
क्षत्रिया शूद्रसंपर्के कृच्छ्रं चान्द्रायणद्वयम् ।
चान्द्रायणं सकृच्छ्रं तु चरेद्वैश्येन सङ्गता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
इति । आनुलोम्येन व्यवाये तु विशेषमाह स एव ।
आनुलोम्येन कुर्वीत कृच्छ्रं पादावरोपितम् ॥

इति । क्षत्रियावैश्याशूद्राणां ब्राह्मणगमने त्रिपादार्द्धपादकृच्छ्राः क्रमेण भवन्ति । वैश्याशूद्रयोः क्षत्रियगमने त्रिपादार्द्धकृच्छ्रावित्यादूह्यम् । सवर्णाव्यवाये तु पुरुषोक्तमेव प्रायश्चित्तम् । तदाह बृहस्पतिः ।

यत्पुंसः परदारेषु समानेषु व्रतं स्मृतम् ।
व्यभिचाराच्च भर्तुः स्त्री तदशेषं समाचरेद् ॥

इति। तदेतेषु सवर्णानुलोमप्रतिलोमव्यवायेषु त्रिष्वपि विलक्षणं प्रायश्चित्तमुक्तं षट्त्रिंशन्मते। ब्राह्मणी क्षत्रियवैश्यसेवायामतिकृच्छ्रकृच्छ्रातिकृच्छ्रौ चरेत्। क्षत्रिययोषितो ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रपादं कृच्छ्रार्द्धं प्राजापत्यं च शूद्राया शूद्रसेवने प्राजापत्यं ब्राह्मणराजन्यवैश्यसेवायामहोरात्रं त्रिरात्रं कृच्छ्रार्द्धमिति। सगर्भाया व्यभिचारे स्मृत्यन्तरे विशेषः।

अन्तर्वत्नी तु या नारी समेताक्रम्य कामिभिः।
प्रायश्चित्तं न सा कुर्याद्यावद्गर्भो न निःसृतः॥
जाते गर्भे व्रतं पश्चात्कुर्यान्मासं तु यावकम्।
न गर्भदोषस्तत्रास्ति संस्कार्यः स यथाविधि॥ इति।

ननु वन्दीकृतायाश्चण्डालसम्पर्कवत्सुरापानमपि सम्भवति। तत्र किं कार्यमित्यत आह।

**पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत्॥**
**पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते॥ २६॥**

चातुर्वर्ण्यस्येत्यनुवृत्तावपि तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति त्रैवर्णिकस्यैव निषेधश्रवणाद्यच्छब्देन परामर्शः। तथा च यस्य त्रैवर्णिकस्य भार्या सजातीया, विजातीयायाः कलावभावात्, सुरां स्वस्वनिषिद्धां वक्ष्यमाणलक्षणां पिबति। तस्य शरीरस्यार्द्धं भार्यारूपं पतति। भार्याया अर्द्धशरीरत्वं श्रुतिसिद्धम्। अर्द्धो वा एष आत्मनो यत्पत्नीति। नन्विदं नारम्भणीयं सामान्यत एव

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥

इत्यादिना सुरापानस्य पातकत्वस्मरणात्। न च तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्यादिनिषेधेषु पुंस्त्वश्रवणात्स्त्रीणां प्राप्त्यभावादिदमारभ्यते इति वाच्यम्। पुंस्त्वस्योद्देश्यगतत्वेन ग्रहे-

कत्ववदविवक्षितत्वात् । सुरापाननिषेधोऽय जात्याश्रय इति स्थितिरिति स्मरणेनाहत्य जात्याश्रयताबोधनाश्चेति चेत् । मैवम् । आत्यन्तिकपातित्यविधानायेदमारभ्यत इति ब्रूमः । पतित च तदर्द्धशरीर चेति पतितार्द्धशरीर तस्य भार्यारूपस्य निष्कृतिर्व्रतरूपप्रायश्चित्तानुष्ठानेन व्यवहार्यतासिद्धिर्न विद्यत इति । अत एव सुरापी व्याधिता चाधिवेत्तव्ये-त्याद्यधिवेदनस्मरणमपि तस्या. दृष्टार्थत्वेन युज्यते। तथा मद्यपस्त्रीनिषेवणमपि पुस उपपातक सगच्छते । तच्च कृतप्रायश्चित्ताया एव निषेवण नत्वकृतप्रायश्चित्ताया' । तथात्वे यौनसबधस्य सद्य. पातकत्वेन महापातक स्यात । न चेदमर्द्धप्रायश्चित्तापवादेन सपूर्णप्रायश्चित्तविधानपरमिति वाच्यम । तस्यापदार्थत्वादवाक्यार्थत्वाच्च । नापि स्त्रीकृतेन सुरापानेन पुरुषस्यैव पातित्यमनेनोच्यते वचनाजस्यात्, यस्य भार्येति पुसम्बन्धपुरस्कर-णाच्च । अन्यथा या सुरा पिबेत्सा पततीत्येवोच्यतेति मन्तव्यम् । शास्त्रफल प्रयोक्तरीति न्यायविरोधात् । किञ्च स्वकृतेऽपराधे प्रायश्चित्तेन शुद्धिर्भार्याकृतापराधे न च निष्कृत्यभाव इति महदेववैषम्यमनन्तरोक्तसातपनप्रायश्चि-त्तासगतिश्चेत्यास्ता तावत् । तस्माद्द्विजातिभार्याया निषिद्धसुरापाने न व्यवहार्यता प्रायश्चित्तेन तु परलोकशुद्धिर्भवतीति वचनान्तरसामर्थ्याद वगम्यत इति । ननु पतितार्द्धशरीरस्येत्यत्र बहुव्रीहेरपि सम्भवात्त्यत्तु प्रायश्चित्ताभाव एव कुतो नेष्यत इत्यत आह ।

**गायत्रीं जपमानस्तु कृच्छ्रं सांतपनं चरेत् ।**

सुरापभार्य. पुमान् गायत्री जपमानो वक्ष्यमाणलक्षण सातपन कुर्यात् । जपमान इतिवर्तमानार्थप्रत्ययप्रयोगाद्यावद्व्रतानुष्ठान जपानुवृत्तिः सिध्यति ।

सातपनलक्षणमाह ॥

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥**
**एकरात्रोपवासश्च कृच्छ्रं सांतपन स्मृतम् ॥ २७ ॥**

समासान्तर्गतस्याप्येकरात्रशब्दस्य बुध्यविछिन्नस्य गोमूत्रादिभिः प्रत्येक समुदितैश्च समन्वयेन सप्तरात्र गोमय क्षीर दधि सर्पिः कुशोकदम् ।

एकैक प्रत्यह पीत्वा त्वहोरात्रमभोजनम् ।
कृच्छ्र सातपन नाम सर्वपापप्रणाशनम् ॥
इति । द्विरात्रमाह याज्ञवल्क्यः ।
गोमूत्र गोमय क्षीर दधि सर्पिः कुशोदकम् ।
प्राश्यापरे तूपवसेत्कृच्छ्र सातपन चरन् ॥
इति । तदनयोः कल्पयोर्यथायोग विनियोगो द्रष्टव्यः ।

नन्वेवमस्तु व्यभिचारे प्रायश्चित्त गर्भोत्पत्तौ तु कथमित्यतआह ।

**जारेण जनयेद्गर्भं मृते व्यक्ते गते पतौ ॥**
**तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ॥ २८ ॥**

या त्रैवर्णिकस्त्री पत्यौ मृते प्रेते व्यक्ते प्रत्यक्षे गते परोक्षे वा जारेण शूद्रेण निहित गर्भं जनयेत्पूर्णकाले प्रजनयेत्ता पापकारिणीं पापाचरणशीलामत एव पापाभ्यासात्पतिता स्वराष्ट्रादुत्सार्य परराष्ट्रे त्यजेत् । तथा च वसिष्ठ ।

ब्राह्मणक्षत्रियविशा भार्याः शूद्रेण सगताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥

इति । शूद्रेणेतिवचनादन्यगर्भोत्पत्तौ जनयेदिति वचनाच्च शूद्रगर्भस्याप्यन्तराविनाशे वा न त्याग इत्युक्तम् । तथा चतुर्विंशतिमते ।

विप्रगर्भे पराकः स्यात क्षत्रियस्य तथैन्दवम् ।
ऐन्दवञ्च पराकश्च वैश्यस्याकामकारत ॥
शूद्रगर्भे भवेत्त्यागश्चण्डालो जायते यत. ।
गर्भस्रावे धातुदोषैश्चरेच्चान्द्रायणत्रयम् ॥

इति । ननु

स्त्रीणा नास्ति परित्यागो ब्रह्महत्यादिभिर्विना ।
तत्रापि गृहमध्ये तु प्रायश्चित्तानि कारयेत् ।

परित्यक्ता चरेत्पार्श्वं बहुधा वापि किंचन ।
तत्पाप शतधा भूत्वा बान्धवाननुगच्छति ॥

इति तत्रैव स्त्रीणामात्यन्तिकपरित्यागे दोष उक्तस्तत्कथमुच्यते ता त्यजेदपरे राष्ट्र इति । सत्यम् । प्रायश्चित्तार्हत्वे सति परित्यागस्या न्याय्यत्वात् । प्रायश्चित्तादि कारयेदिति स्मरणात् । तदभावे तु ससर्गनिवृत्तये तदत्यानुज्ञानात् । सचोपपादित एव प्रायश्चित्तेन नेतरा इति । अत एव ।

चतस्र एव सत्याज्या' पतने सत्यपि स्त्रियाः ।
श्वपाकोपहता या तु भर्तृघ्नी पितृपुत्रगा ॥
इति तत्रैव क्वचित्त्यागोऽभ्यनुज्ञायते । एतेन
चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुगितोपगता च या ॥
इति वासिष्ठमपि वाक्यं स्पष्टीकृतम् ।

नन्वेवमस्तु गर्भितव्यभिचारायाम्, शङ्कितव्यभिचाराया तु कथमित्यत आह ।

**ब्राह्मणी तु यदागछेत्परपुंसा समन्विता ॥**
**सा तु नष्टा विनिर्दिष्टा न तस्या गमनं पुनः ॥ २९ ॥**

रक्षेत्कन्या पिता विन्ना पतिः पुत्रास्तु वार्द्धके ।
अभावे ज्ञातयस्तेषा न स्वातन्त्र्य क्वचित्स्त्रियाः ॥

इत्याद्युक्तरक्षकातिरिक्त. पुमान्परत्वेन विवक्षितस्तेन पुसा समन्विता प्रीत्यतिशयद्योतकहास्यादिव्यवहारपुरस्सरं सम्यगन्विता ब्राह्मणी यदा दशाहाधिक काल गृहान्तर च ग्रामान्तर देशान्तर वा गछेत्सा नष्टेति पूर्वैर्विनिर्दिष्टा तस्याः पुनर्गमन ज्ञातिषु प्रवेशो नास्तीति ।

किंच ।

**कामान्मोहाच्च या गछेत्त्यक्त्वा बन्धून्सुतान्पतिम् ॥**
**सापि नष्टा परे लोके मानुषेषु विशेषतः ॥ ३० ॥**

स्त्रीणां यस्या यस्यामवस्थायां यो यो रक्षक उक्तो यथा तारुण्ये पतिर्वार्द्धके पुत्रा उभयाभावे ज्ञातयस्तस्या तस्यामवस्थायां कामात्स्वातन्त्र्यान्मोहात्स्त्री धर्मापरिज्ञानाच्च तं तं त्यक्त्वा या दशाहाधिकं कालमन्यत्र गच्छेत्सापि शास्त्रोल्लङ्घनजनितप्रत्यवायात्परलोके नष्टा नरकभाग्भवति । कथं चित्तविवृत्तावपि मानुषेषु स्वबन्धुषु प्रवेशाभावाद्विशेषतो नष्टा भवतीति । पितृपरित्यागापरिगणनन्तु कौमारे कामचारप्राबल्याद्दोषाभावमभिप्रेत्येति ।

उक्तार्थस्य क्वचिदपवादमाह ।

**मदमोहगता नारी क्रोधाद्दण्डादिताडिता ॥**
**अद्वितीयगता चैव पुनरागमनं भवेत् ॥ ३१ ॥**

मदः पत्यादितिरस्कारजनकविरागाभिमानातिशयस्तेन मोहः पत्यादिशुश्रूषायाः परधर्मत्वज्ञानविरहस्तेन वातीत्यागता आक्रान्ता स्त्रीपत्यादिभिः शिक्षार्थं दण्डादिना ताडिता सती क्रोधादपि परपुरुषसमन्वयव्यतिरेकेणाद्वितीया एकाकिन्येव क्वापि गता तथापि स्वबन्धुषु पुनरागमनं भवेत्प्राप्नुयादिति ताडनमधिवेदनस्याप्युपलक्षणम् ।

तथा च मनुः ।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ।

इति । रुषितायाः कथं चिदननुनयासंभवे कुलसन्निधौ बन्धुमध्ये त्याज्या स्थाप्येतियावत् । इदं च समानन्यायत्वात्प्रकृतेऽपि द्रष्टव्यम् ।

पुनरागमने कालावधिमाह ।

**दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ॥**
**दशाहं न त्यजेन्नारीं त्यजन्नष्टमृतां तथा ॥ ३२ ॥**

या ताडिता सती बहिर्निर्गता तया दशमेऽपि दिने स्वकीये गृहे प्राप्ते सति तस्या अनिर्णीते व्यभिचारे शङ्कामात्रेण प्रायश्चित्तं न

भवति। निर्णीते तु तत्रापि भवत्येव। अत एव तादृशीं नारीं दशाहपर्यन्तं न त्यजेन्न व्यवहारं परिहरेत्तथा सत्यपि ता त्यजन्नष्टो भवतीति । अनेन दशाहादूर्ध्वमनिर्णीतेऽपि व्यभिचारे शङ्कामात्रेणापि प्रायश्चित्तं त्यागो वा भवत्येवेति गम्यते । यद्यप्युभयत्रापि शङ्का समानैव तथापि दशाहान्तवचनात्प्रायश्चित्ताभावः । परपुरुषसमन्वयेन स्वातन्त्र्येण वा गमने तु दशाहमध्ये अनिर्णीतेऽपि व्यभिचारे प्रायश्चित्तं भवति। ऊर्ध्वमसयाह्यताप्रतिपादनात् ।

नन्वसयाह्यामपि भर्त्रादिश्चेत्संगृह्णाति तदा कथमित्यत आह ।

**भर्त्ता चैव चरेत्कृच्छ्रं कृच्छ्रार्द्धं चैव बांधवाः ॥**
**तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुध्यति॥३३॥**

या परपुरुषसमन्वयेन स्वातन्त्र्येण निर्गता तां दशाहान्तं प्रायश्चित्तमकारयित्वा तदूर्ध्वं कारयित्वापि वा संगृह्णन् भर्त्ता कृच्छ्रं चरेत् तत्रैव बांधवाः पितृश्वशुरादयोऽर्द्धकृच्छ्रं चरेयुः । यः पुनरकृतप्रायश्चित्तानां भर्त्रादीनां गृहे भुङ्क्ते पिबति वा सोऽप्यहोरात्रोपवासेन शुध्यतीति ।

नन्वस्तु परपुरुषसमन्वितायास्त्यागः क्रोधनिर्गतायास्तु स कथमित्यत आह ।

**ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता ॥**
**गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः ॥३४॥**

यद्यपि ब्राह्मणी क्रोधादिना परपुंसा विवर्जितैव गच्छति तथाप्येकाकिनी गत्वा पुंसां शतमपि याति बाधकाभावादिति मत्वा गोत्रिणो बांधवास्तां तादृशीं त्यजेयुरेवेति ।

तादृश्याः प्रवेशे गृहस्याप्यशुद्धिमाह ।

**पुंसो यदि गृहं गच्छेत्तदाऽशुद्धं गृहं भवेत् ॥**
**पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम् ॥ ३५ ॥**

सेयं दुर्ब्राह्मणी यदि पुनः स्वपत्युर्गृहं पितृमातृगृहं जारस्यैव वा गृहं यच्चान्यदपि गच्छेत्तदा तच्चास्य कस्यापि गृहमशुद्धमप्रयतं भवेत् ॥

नन्वेवमप्रायत्ये तच्छुद्धिः कथं स्यादित्यत आह ।

**उल्लिख्य तद्गृहं पश्चात्पञ्चगव्येन सेचयेत् ॥**
**त्यजेच्च मृन्मयं पात्रं वस्त्रकाष्ठांश्च शोधयेत् ॥३६॥**

यस्मिन् गृहे सा ब्राह्मणी प्रविष्टा तद्गृहं सभूमिभित्त्युल्लिख्य पश्चात्पञ्चगव्येन सेचयेत् । तत्र स्थितं च समृन्मयं पात्रमखिलं त्यजेद्, वस्त्रं काष्ठं च द्रव्यशुध्युक्तप्रकारेण शोधयेत् ।

**संभारान् शोधयेत्सर्वान्गोकेशैश्च फलोद्भवान् ॥**
**ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ॥३७॥**

संभारान् मुसलोलूखलादीन् द्रव्यशुध्युक्तप्रकारेणैव शोधयेत् । फलोद्भवान् नारिकेलादिफलनिर्मितान् पात्रविशेषांश्च गोबालैर्मार्जयेत् । ताम्रपात्राणि पञ्चगव्येन कांस्यपात्राणि दशवारमावर्तितैर्भस्मभिश्च शोधयेत् ।

किंच ।

**प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम् ॥**
**गोद्वयं दक्षिणां दद्यात्प्राजापत्यद्वयं चरेत् ॥ ३८ ॥**

गृहस्वामी विप्रः पर्षद्वियोजितैर्ब्राह्मणैरुपपादितमुपदिष्टं प्रायश्चित्तं चरेत् । न स्वत एव ज्ञात्वा अनेन रहस्यत्वेऽप्यस्य पर्षदुपदेशोङ्गमित्युक्तम् । तच्च प्राजापत्यद्वयं कृत्वा गोद्वयं दक्षिणां दद्यादिति ॥

किंच ।

**इतरेषामहोरात्रं पञ्चगव्यं च शोधनम् ॥ ३९ ॥**

अन्येषां तद्गृहवासिनामहोरात्रोपवासेन पञ्चगव्यप्राशनेन च शुद्धिरिति ।

एव ब्राह्मणशुद्धिमुक्त्वा क्षत्रियादिशुद्धिमाह ॥

**उपवासैर्व्रतैः पुण्यैः स्नानसंध्यार्चनादिभिः ॥**
**जपहोमदयादानैः शुध्यन्ते ब्राह्मणादयः ॥ ४० ॥**

ब्राह्मण आदौ येषा ते ब्राह्मणादयः क्षत्रियवैश्यशूद्रा. उपवासादिभिर्यथायथमनुष्ठितैः शुध्यन्ति । तद्यथा उपवासैरशनत्यागैर्व्रतैरेकभुक्तादिभि पुण्यैस्तीर्थादिगमनै शूद्रः शुध्यति । स्नान महानद्यादौ सन्ध्या सध्यामठादौ अर्चन विष्णुशिवादीना आदिशब्दाद्ब्राह्मणभोजन चेत्येतै वैश्य. शुध्यति । जपो गायत्र्या, होमस्तिलैः, दया दीनेषु, दान गवादेस्तैः क्षत्रियः शुध्यतीति ।

यदुक्त सभारान् शोधयेदिति । तस्य क्वचिदपवादमाह ।

**आकाशं वायुरग्निश्च मेध्य भूमिगतं जलम् ॥**
**न दूष्यन्ति च दर्भाश्च यज्ञेषु चमसा यथा ॥४१॥**

आकाश रिक्तभाण्ड वायुस्तत्साधन व्यजनभस्त्रादिरन्यथाशुध्युक्तप्रकारापवादानर्थक्यात् । अग्निर्महानसादिसस्थो भूमिगत जलं कूपवाप्यादिस्थवारि कुशाश्चत्येते दुर्ब्राह्मणीसपर्कवत्यपि गृहे विद्यमाना न दुष्यन्ति । यथा यज्ञेषु ऋत्विङ्मुखोच्छिष्टा अपि चमसा न दुष्यन्तीति ।

यतस्त्व विश्वस्मिन्नखिलमपि भूत तृणमित
स्तुतौ मेरु कृत्वा निवसमि मदैवाच्युत इव ॥
तदेका विज्ञप्ति कलय भगवन्नच्युतमना
स्वनामान्त स्वान्त सफलय ममाप्यच्युत इति ॥१॥
धर्माधिकारिकुलकैरवकाननेन्दुः
श्रीरामपण्डितसुतेन विनायकेन ॥
व्याख्यात एष दशमोऽपि पराशरस्या-
ध्यायः स्मृतावनुपगम्य गमे विशुध्यै ॥ १ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहराया दशमोऽध्यायः ॥

श्रीगणेशायनमः ॥

पिबन्तमसकृद्दृगञ्चलपुटैर्मुखेन्दोः सुधाम्
श्रिय श्रितनिजोरसः स्मितमिषात् स्रवन्ती मुखात् ॥
स्फुट तदुदितारुणच्छविभिरोपदुन्मीलितै-
र्जनार्दनमुपास्महे स्मरमहे महेच्छाकुलम् ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन ॥
एकादश विवरण क्रियतेऽधुनात्राध्याये पराशरकृतावघमत्यशुध्यै ॥ २ ॥

एव पूर्वाध्यायेनागम्यागमनप्रायश्चित्तमभिधायेदानीमभोज्यभोजनप्रायश्चित्त वक्तुमेकादशाध्यायमारभते ॥

तत्रादावमेध्यादिभोजने प्रायश्चित्तमाह ।

**अमेध्यरेतो गोमांसं चाण्डालान्नमथापि वा ॥**
**यदि भुक्तं तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत् ॥ १ ॥**

अमेध्य विरामूत्रादि, तदाह देवल. ।
मानुषास्थि शव विष्ठा रेतोमूत्रार्तव वसा ।
स्वेदोऽश्रुदूषिका श्लेष्मा मद्य वाऽमेध्यमुच्यते ॥ इति ।

अमेध्यग्रहणेन सिद्धेऽपि रेतोग्रहणे पृथगुपादान मलान्तरसग्रहार्थम् । तथा च मनु ।

वसा शुक्रमसृग्मज्जामूत्र विट् कर्णविराणखः ।
श्लेष्माश्रुदूषिका स्वेदा द्वादशैते नृणा मला ॥

इति । गोमासम्पक्वमपक्वन्वा चण्डालान्न पक्वामित्येतद्यदि विप्रोभुङ्क्ते तदा कृच्छ्र चान्द्रायण चरेत् । अयमर्थः । अमेध्यादीनामकामतः सकृद्भोजने कृच्छ्र प्राजापत्य वक्ष्यमाण पञ्चगव्यस्नानपाने चरेत् । कृच्छ्रमितिसामान्योपादाने च कृच्छ्रातिकृच्छ्रतप्तकृच्छ्राणा ग्रहणम् ।

कामतस्तद्भोजने तु चान्द्रायणमिति । तत्राकामतो विरामूत्रादिभक्षणे गौतमः । अमत्या . मद्यपाने पयो घृतमुदक वायुः प्रतिग्रह-

तप्तानि पिबेत्तप्तकृच्छ्रस्ततोऽस्य संस्कारो मूत्रपुरीषकुणपरेतसां प्राशने-नेति । कामतस्तद्भक्षणे तु बृहस्पतिः ।

अलेह्यानामपेयानामभक्ष्याणां च भक्षणे ।
रेतोमूत्रपुरीषाणां शुद्धिश्चान्द्रायणं स्मृतम् ॥ इति ।
अभ्यासे तु चतुर्विंशतिमतेऽभिहितम् ।
विण्मूत्रभक्षणे विप्रश्चरेच्चान्द्रायणद्वयम् । इति ।

अत्यन्ताभ्यासेऽपि तत्रैव श्वकाकोच्छिष्टक्रिमिकीटादिभक्षणे ।

अमेध्यानां च सर्वेषां चरेच्चान्द्रायणत्रयम् । इति ।
श्वादिमूत्रादिभक्षणे तु संवर्तः ।
श्वचण्डालखरोष्ट्राणां कपेर्गोमायुकाकयोः ।
प्राश्य मूत्रं पुरीषं वा चरेच्चान्द्रायणव्रतम् ॥ इति ।
कामतस्तद्भक्षणे तु चतुर्विंशतिमते ।
श्वादीनां चैव विण्मूत्रं चरेच्चान्द्रायणत्रयम् ॥ इति ।
बलाकादिमूत्रादिभक्षणे त्वङ्गिराः ।
बलाकाभासगृध्राखुखरवानरसूकराः ।
दृष्ट्वा चैषाममेध्यानि स्पृष्ट्वाचम्य विशुध्यति ॥
इच्छयैषाममेध्यानि भक्षयित्वा द्विजातयः ।
कुर्युः सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ इति ।
विण्मूत्रादिसंसृष्टभक्षणे तु विष्णुः ।
मृद्वारिकुसुमादींश्च फलकन्देतुमूलकान् ।
विण्मूत्रदूषितान्प्राश्य चरेत्कृच्छ्रं च पादतः ॥
संनिकृष्टेऽर्धमेव स्यात्कृच्छ्रस्याशु विशोधनम् । इति ।
दूषणं संसर्गः संनिकर्षस्तदतिशयः ।

एतेन मूलोक्तं प्रायश्चित्तं मूत्रादिसंसृष्टान्नभक्षणे साक्षात्तद्भक्षण-स्यासंभवादिति परास्तम् । मूत्रादिसंसृष्टजलपाने कूर्मः ।

अपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदा ।
तदा सान्तपनं कृच्छ्रं व्रतं पापविशोधनम् ॥

इति । अकामतो गोमांसभक्षणे च बृहद्यमः ।

वराहैकशफानां च काककुक्कुटयोस्तथा ।
क्रव्यादानां च सर्वेषामभक्ष्या ये च कीर्तिताः ॥
मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव च ।
श्वगोमायुकपीनां च तप्तकृच्छ्रं विशोधनम् ॥ इति ।

प्रचेता अपि श्वशृगालकाककुक्कुटपार्षतवानरचक्रवाकक्रव्यादखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसभक्षणे तप्तकृच्छ्रमादिशेदिति । कामतो गोमांसभक्षणे तु संवर्तः ।

गोमांसं मानुषं चैव सूतिहस्तात्समाहृतम् ।
अभक्ष्यं तद् द्विजातीनां भुक्त्वा चान्द्रायणं चरेद् ॥ इति ।

इदमपि सकृद्भक्षणे अभ्यासे तु चान्द्रायणत्रयम् । तदाह प्रजापतिः ॥

चान्द्रायणत्रयं कुर्यादभक्ष्यपशुभक्षणे ।
एकमेवसकृद् भुक्त्वाचरेदाह प्रजापतिः ॥ इति ।

चण्डालान्नभक्षणे त्वङ्गिराः ।

चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ।
अन्त्यावसायिनामन्नमश्नीयाद्यश्च कामतः ॥
स तु चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा । इति ।

अकामतस्तप्तकृच्छ्रं कामतश्चान्द्रायणमिति । इदमेव प्रायश्चित्तं रजकाद्यन्नभक्षणेऽपि ज्ञेयम् । तदाह बौधायनः ।

बहूनामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृताः ॥ इति

अतएवापस्तम्बः ।

रजकव्याधशैलूषवेणुचर्मोपजीविनः ।
एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत् ॥

इदं कामतो ज्ञेयम् । अत्रैव कामाभ्यासयोराह यमः ।

भुक्त्वाचैषां स्त्रियो गत्वा पीत्वापः परिगृह्य च ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥

कामाकामाभ्यामत्यन्ताभ्यासे तु पातित्यतज्जातीयत्वे भवतः तदाह सुमन्तुः ।

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥ इति

पातित्ये महापातकप्रायश्चित्तम् । तज्जतीयत्वे तु प्रायश्चित्ताभाव एव भवति । चण्डालाचमथापिवेत्यनास्थया तस्य धर्माणामन्येषामपि ग्रहणम् । तथाच हारीतः ।

यदन्नं प्रतलोमस्य शूद्रजस्योत्तमास्त्रियाम् ।
महापातकिनश्चैव यदन्नं स्त्रीकृतघ्नयोः ॥
आरूढपतितस्यैव सगोत्राभर्तुरेव च ।
पाषण्डमाश्रितानां च यतेश्चैव तथैवच ।
अतिकृच्छ्रं चरेद्भुक्त्वा प्रमादाद्ब्राह्मणः सकृद् ।
मत्या चान्द्रायणं कुर्यादाम चेदर्द्धमेव वा ।
तद्धस्तभोजने चापि त्रिगुणं सहभोजने ।
चतुर्गुणं तदुच्छिष्टे पानीये चार्द्धमेव च ।
कृच्छ्राब्दपादमुद्दिष्टमज्ञानाभ्यासभोजने ।

मत्याभ्यासे तथा कुर्यात्त्रिंशत्कृच्छ्रं द्विजोत्तमः । इति उत्तमास्त्रिया ब्राह्मण्या प्रातिलोम्येन शूद्रजश्चण्डालः । आरूढपतितः सन्न्यासानन्तरं पुनर्गृहस्थः । पाषण्डी बौद्धादिमतानुगः । अनाश्रितः सामर्थ्येऽप्यनाश्रमी । अत्रार्द्धत्वादिप्रतियोगि चान्द्रायणमेव सन्निहितत्वात् । कृच्छ्राब्दपादं त्रैमासिकं कृच्छ्रत्रिंशत्कृच्छ्रमब्दमिति । चण्डालादिस्पृष्टान्नभोजने तु शङ्खः । अमेध्यपतितचण्डालपुल्कसरजस्वलावधूतकुष्ठिकुणिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेदिति । चण्डालादिस्पृष्टस्य स्नानं विना भोजने पैठीनसिः ।

चण्डालपतितामेध्यैः शुनखैः कुष्ठिना तथा ।
सम्पृष्टस्तु यदा भुङ्क्ते तप्तकृच्छ्रं समाचरेदिति ॥

चैतन्याभेदेन विषयस्याध्यासात्सोपि भवति प्रमातृव्यवहित इति भावः ॥

नन्वेवं सतीष्टो घटो द्विष्टो घट इत्याद्यनुभवादिच्छादिव्यतिरिक्तविषयगतं धर्मान्तरमप्यङ्गीक्रियतामिति चोद्यमयुक्तमित्याह । एतेनेति ।

एतेनेष्टो घटो द्विष्टो घट इत्यादिप्रतीतिरन्दीपरस्परकृता तत्रेच्छाविषयत्वाद्यतिरिक्तधर्मान्तरानङ्गीकारे बाधकाभावात्तदङ्गीकारगौरवादिति ।

(स्फुरणस्य ज्ञाततापरपर्यायज्ञानजन्यत्वखण्डनम् ।)

तच्च स्फुरणं ज्ञातताऽपरपर्यायं ज्ञानजन्यमिति केचित्तन्न । तस्य जन्यत्वे प्रमाणाभावात्तदङ्गीकारे गौरवादिति । नन्विदानीं घटः स्फुरतीति तस्य कालभेदावच्छेदानुभव एव जन्यत्वे प्रमाणमिति चेन्न । इदानीमहमस्मीति वत्तदनुभवस्य वर्तमानकालसम्बन्धित्वमात्रविषयतया प्रक्कालासम्बन्धित्वाविषयत्वात् । पूर्वकालासम्बन्धित्वे सत्युत्तरकालसम्बन्धित्वस्यैव कार्यत्वात् । एतावत्कालं नास्फुरदिदानीं स्फुरतीति तद्ग्राहकानुभवो ऽप्यस्तीति चेन्न । तस्या ऽज्ञानाभिव्यक्तस्फुरणविषयत्वे-

**प्युपपत्तेः । अविद्याया एव स्फुरणाभावत्वात् । ननु ज्ञानेन ज्ञातता न जायते चेज्ज्ञानस्य विषयनियमो न स्यात् । न ह्यात्मसमवेतस्य विषयेण साक्षात्सम्बन्धोऽस्ति, येन विषयविशेषे व्यवहारस्ततो जायेत ॥**

वृत्तिस्फुरणभेदस्यानेकप्रमाणसिद्धत्वेनेत्यर्थः । इष्ट-त्वादौ तन्नास्तीत्याह । तत्रेच्छेति । ननु स्फुरणस्यात्म-रूपत्वमुक्तमयुक्तं तस्योत्पत्त्यादिमत्त्वेनानात्मत्वादात्मा-भेदायोगादिति वार्तिककारीयाः प्रत्यवतिष्ठन्त इत्याह । तच्चेति । स्यादेतदेवं यद्युत्पत्त्यादिकमस्य प्रामाणिकं स्यान्न-त्वेतदस्तीति दूषयति । नन्नेति । इदानीं स्फुरतीति काल-विशेषे प्रतीयमानत्वात्कालान्तरसत्त्वे च मानाभावात्कार्य-त्वमिति चोदयति । नन्विति । तर्हि कालान्तरेऽसत्त्वेऽपि-मानाभावाद्वर्तमानतयानुभवस्य नित्यत्वेऽपि सम्भवान्न-तस्यानित्यत्वमिति दूषयति । नेदानीमिति । वर्त्तमान-तावभासमात्रस्यानित्यत्वाप्रयोजकत्वे कस्य तर्हि नित्यत्वे प्रयोजकत्वमित्यत आह । पूर्वकालेति । तर्हि पूर्वकालासम्ब-न्धित्वमप्यनुभूयत इति चोदयति । एतावदिति । नास्फुर-दिति । तत्स्फुरणावारकाविद्यैव प्रतिसन्धीयते न तु स्फुरणासत्त्वमिति परिहरति । न तस्येति । नास्फुरदिति नञा तदभाव एव प्रतीयत इत्यत आह । अविद्याया-इति । अविद्यानिवृत्तेरधिष्ठानस्फुरणमात्रत्वात्तदभावो-प्यविद्यैवेत्यर्थः । ज्ञाने नियतविषयकत्वानुपपत्त्या ज्ञान-जन्या ज्ञातता विषयनिष्ठा सिध्यतीति चोदयति । ननु

ज्ञानेनेति । अस्तु तर्हि प्रभाकुम्भयोरिव साक्षात्सम्बन्धोऽपि विषयतानिर्वाहक इत्यत आह । न ह्यात्मेति । ज्ञानस्यात्मगुणत्वेन विषयेण संयोगादिकं न सम्भवतीत्यर्थः । तर्हि मास्तु विषयनियम इत्याशङ्क्य व्यवहार नियमोऽपि न स्यादित्याह । येनेति ॥

तर्हि ज्ञानजनकमेव विषयत्वनियामकमित्याशङ्क्य किं जनकत्वमात्रं नियामकमुत समवायाद्यतिरिक्तत्वे सति जनकत्वं विषयतया जनकत्वं वा । आद्यमतिप्रसङ्गेन दूषयति । न च ज्ञानज्ञेययोरिति ।

(ज्ञानजनकस्य विषयत्व नियामकत्वे दोषः)

न च ज्ञानज्ञेययोर्जन्यजनकभाव सम्बन्ध इति वाच्यम् । आत्मादेरपि घटादिज्ञानजनकस्य तद्विषयत्वप्रसङ्गात् । न च समवायाद्यतिरिक्तं ज्ञानजनकं तद्विषय इति वाच्यम् । आत्मनः स्वज्ञाने ऽप्यविषयत्वापत्तेः । न च विषयतया जनकं तथेति वाच्यम् । ज्ञानकालीनविषयत्वस्य तत्पूर्वकालीनजनकतानवच्छेदकत्वात् । घटादेः पूर्वविषयत्वे बीजानिरूपणाच्च । अत एव तज्जनकेन्द्रियसम्प्रयुक्तस्तद्विषय इति निरस्तम् । आत्मादावपि प्रसक्तेः । अनियतज्ञानकालीनस्य तस्य नियतज्ञानकालीनविषयत्वाप्रयोजकत्वाच्च । अतो यस्मिन्

विषये ज्ञानाज्ज्ञातत्तोत्पद्यते स एव तस्य विषयो नान्य इति। ज्ञातताभिन्नं स्फुरणमपि ज्ञानजन्यमेवेति चेत्तर्हि विषयनियमार्थं ज्ञानजन्या ज्ञातताऽऽस्थेया। तव मते परोक्षज्ञान इवापरोक्षज्ञानेप्यन्यत एव नियतविषयभानोपपत्तेः। न च परोक्षज्ञानेनाप्यर्थगता ज्ञातताधीयते। अतीतादिज्ञानविषयस्य तदानीमसत्त्वादनाश्रयकार्यायोगात्। तथा सति विनष्टे ऽपि घटे लैङ्गिकत्याद्युत्पत्तिप्रसङ्गात्॥

द्वितीये समवायिरूपस्यात्मनः स्वसमवेताहमिति ज्ञानविषयत्वं न स्यादित्याह। न च समवायीति। तृतीयमसम्भवेन दूषयति। न च विषयतयेति। विषयताया ज्ञानघटितशरीरत्वेन ज्ञानसमकालायास्तत्कालपूर्वकालीनजनकताम्प्रत्यनवच्छेदकत्वादित्यर्थः। किञ्च घटादेर्विषयत्वे सिद्धे तेन रूपेण जनकत्वसिद्धिः, जनकत्वे च सिद्धे विषयत्वसिद्धिरितीतरेतराश्रयः स्यादित्याह। घटादेरिति। अस्तु तर्हि ज्ञानजनकेन्द्रियसन्निकृष्टत्वं विषयत्वनियामकमित्यत आह। अत एवेति। अतः शब्दार्थमाह। आत्मादाविति। गगनादिरादिपदार्थः। सम्प्रयोगस्य निमित्तकारणत्वेन ज्ञानकाले नियतत्वाभावेन तत्काले नियतविषयत्वानियामकत्वेत्याह। अनियतेति। परिशेषाज्ज्ञानजन्यज्ञातताधारत्वमेव विषयत्वनियामकमित्युपसंहरति। अतो यस्मिन्निति। ज्ञाततायाः ज्ञानजन्यत्वे ऽपि स्फुरणस्य किमायात-

मित्यत आह। ज्ञातताभिन्नमिति। ज्ञातताभावेऽपि विषयनियमदर्शनान्न ज्ञातताधारत्वं विषयतानियामकमिति दूषयति। तर्हीति। परोक्षेऽपि वध्यादौ ज्ञाततास्त्वित्याशङ्क्यातीताद्यथ सा न सम्भवतीत्याह। न च परोक्षेति। अतीतादेरपि कारणात्मना सत्त्वात्तत्र ज्ञाततावीयता मित्याशङ्क्याह। तथा सतीति

अतीतादिव्यक्तेरभावेऽपि तत्सामान्यस्य सत्त्वात्तत्र ज्ञाततोत्पत्स्यत इत्याशङ्क्य तथापि सामान्यस्यैव तद्विषयतास्यान्न व्यक्तेरित्याह। न चातीतेति।

न चातीताद्यर्थगतसामान्ये ज्ञातता भवत्विति वाच्यम्। अन्यज्ञाततयान्यस्य ज्ञानविषयतानियमानुपपत्तेः। उपपत्तौ वा घटत्वाश्रयनिखिलघटस्याप्ययं घट इति ज्ञानविषयत्वप्रसङ्गात्। ज्ञाततोत्पत्तौ पूर्वं ज्ञानज्ञेयसम्बन्धाभावेन ज्ञानस्य ज्ञेयविशेषनिष्ठज्ञाततजनकत्वानुपपत्तेश्च। नापि कृतिनियमार्थं ज्ञातताश्रणीया। तव मते निर्विशेषविषये ज्ञाततावत्कृतेरप्युपपत्तेः। नित्यस्फुरणेनापि तदुपपत्तेश्च। कस्तर्हि ज्ञानज्ञेययोः सम्बन्धो येन घटज्ञानं घटीयं भवेदिति चेत्। स्वरूपसम्बन्ध एवेति केचित्। अस्मदाचार्यास्तु प्रत्यक्षज्ञानज्ञेययोर्न स्वरूपसम्बन्धः सति मुख्यसम्बन्धे स्वरूपसम्बन्धकल्पना-

योगात् । किन्त्वन्तःकरणात्सहकारिसहिता-
द्विषयदेशव्यापिनी काचिद्वृत्तिर्जायते । तया च
वृत्त्या विषयस्य यथायथं संयोगादिः सम्बन्धः ।
वृत्त्यभिव्यक्ततत्तदवच्छिन्नचैतन्येनाध्यासिकता-
दात्म्यं परोक्षे तु तदभावात् स्वरूपसम्बन्ध एवे-
त्यर्थः ॥

जातिव्यक्त्योस्तादात्म्यसम्बन्धात्सामान्याश्रयापि ज्ञातता व्यक्तिविषयतानियामिकेत्याशङ्क्यातिप्रसङ्गमाह । उपपत्तौ वेति । किञ्च ज्ञातताधारत्वस्यापि नियामकाभावान्न तेन विषयत्वनियम इत्याह । ज्ञाततोत्पत्तेरिति । अनुमेयादिषु कृत्यदर्शनात्तन्नियामकाज्ञाततास्थेयेत्याशङ्क्य ज्ञातताधारत्वनियमवत्तन्नियमो ऽप्यन्यत उपपद्यत इत्याह । नापीति । अस्मिन्मते च नित्यमपि स्फुरणं विषयतादात्म्येनाभिव्यक्तं कृतिहेतुरित्याह । नित्येति । ज्ञाततानङ्गीकारे ज्ञानस्य ज्ञेयविशेषेणसम्बन्धाभावाद्व्यवहारविशेषो न स्यादिति चोदयति कस्तर्हीति । वैशेषिकादिमते त माह । स्वरूपेति । सिद्धान्ते प्रतिकर्मव्यवस्थां दर्शयति । अस्मदिति । तुशब्दसूचितं वैषम्यमाह । प्रत्यक्षेति । तत्र तावद्वृत्तिरूपापरोक्षज्ञानस्य द्रव्येण संयोगः गुणादिना तु संयुक्ततादात्म्यं विषयनियामकमित्याह । किन्त्वन्तः करणेति । पञ्चमीचापादाने । अपरोक्षवृत्त्याभिव्यक्ताधिष्ठानचैतन्यात्मकस्फुरणस्य विषयनियामकं सम्बन्धमाह- वृत्त्यभिव्यक्तेति । विषयदेशसंसृष्टवृत्त्युदये विषयावच्छि-

न्नचैतन्यमपि वृत्तिमदन्तःकरणावच्छेदात् प्रमातृप्रमाणचैतन्याभेदेनाभिव्यज्यते । तथा च प्रमातृतादात्म्याद्विषयस्यापरोक्ष्यं प्रदीपेन प्रकाशत इति प्रदीपस्वरूपप्रकाशविषयत्ववन्मया विदित इति प्रमात्रात्मकफलविषयत्वानुभवादिति भावः । परोक्षस्य तु वृत्त्या संयोगादेरभावाद्वृत्तितदवच्छिन्नचैतन्याभ्यां परेषामिव स्वरूपसम्बन्ध एव नियामक इत्याह । परोक्ष इति ॥

इदानीं वृत्तिस्फुरणयोर्भेदमङ्गीकृत्यापरोक्षवृत्तेर्विषयदेशव्यापित्वमुक्तमाक्षिपति । ननु किमिति ।

(वृत्तिस्फुरणयोर्भेदेऽप्यपरोक्षवृत्तेर्विषयदेशव्यापित्वाक्षेपपरिहारः ।)

**ननु किं वृत्तिनिर्गमनेन प्रमातृगतयैव तया निखिलव्यवहारोपपत्तेः, अतस्तन्निर्गमनमप्रमाणमिति चेत् । उक्तं तावत्प्रत्यक्षार्थापत्तिभ्यां प्रत्यक्षविषये प्रमातृसमवायिज्ञानातिरिक्तस्फुरणमाश्रयमिति, तच्च स्फुरणमभिव्यक्तचैतन्यमेव ज्ञातता प्रत्यक्षस्य निरस्तत्वात् । अभिव्यक्तिस्तु चैतन्यस्यावरणाविद्यानिवृत्तिरेव । ततोऽन्यस्य भावस्याभावस्य वानिरूपणात् । अविद्यानिवृत्तिश्चाविद्यासमानाश्रयविषयया वृत्त्या भवति । यज्ञदत्तस्य घटज्ञानेन तदीयघटाज्ञानस्य देवदत्तघटाज्ञानस्याप्यनिवृत्तेः । तस्मा लाघवेन प्रतियोगिसामानाधिकरण्यज्ञानजन्यत्वाच्च । विषय**

चैतन्यावरणमज्ञानं च विषयावच्छिन्नचैतन्यगतमिति तद्गततया वृत्त्यापि भवितव्यम् । वृत्तेश्च विषयचैतन्यगतत्वं न निर्गमनादृते सम्भवति । न चैवमनुपलब्धिबाधः । वृत्तेर्बहिरिन्द्रियायोग्यत्वात् ॥

विषयावच्छिन्नचैतन्यस्याविद्यानिवृत्त्यर्थं वृत्तिनिर्गमनमावश्यकमिति वक्तुमर्थं स्मारयति । उक्तं तावदिति । अर्थापत्तिशब्देन धारानुसन्धानाद्यनुपपत्तिर्देवदत्तकृतिर्देवदत्तज्ञानजन्येत्यनुमानं च परिगृह्यते । ज्ञानातिरिक्तस्फुरणं ज्ञाततैवेत्याशङ्क्याह । तच्च स्फुरणमिति । अस्तु तर्हि वृत्तिकृतः प्रकाश एव तदभिव्यक्तिरित्याशङ्क्य स्वप्रकाशचैतन्यस्य प्रकाशान्तराविषयत्वादविद्यानिवृत्तिरेवाभिव्यक्तिरित्याह । अभिव्यक्तिस्त्विति । अस्तु तर्हि प्रमातृसमवेतयैव वृत्त्याविद्यानिवृत्तिरित्यत आह । अविद्यानिवृत्तिश्चेति । भिन्नविषयस्य भिन्नाश्रयस्य वा वृत्तिज्ञानस्य नाज्ञाननिवर्त्तकत्वमिति व्यतिरेकमाह । यज्ञदत्तस्येति । ननु यदज्ञानं यं प्रति यदाऽऽवृणोति तदा तद्विषयज्ञानेन तन्निरसनमभ्युपेयं, अन्यथैकघटावच्छिन्नचैतन्यस्य चैत्रमैत्रज्ञानसमानाधिकरणचैत्रघटज्ञानेन तदुभयाज्ञाननिवृत्तिप्रसङ्गात् । तथा च समानाधिकरणत्वमनपेक्षितमित्याशङ्क्याह । तस्या इति । यद्यप्येवं तथाप्यविद्यास्वसाधकप्रमाणौ ज्ञाननिवर्त्यत्वेन सिध्यन्त लाघवेन स्वसमानाधिकरणज्ञाननिवर्त्यत्वेन सिध्यतीति तत्प्रमाणबलात्समानाधिकरणत्वमपि वाच्यमिति भावः ।

भवतु तर्हि प्रमातर्य्येव विषयावरकमज्ञानमित्याशङ्क्य तस्यावरकत्वात् बाह्यनमोवदावृत्ताश्रितत्वं वक्तव्यमित्याह । वृत्तिविषयचैतन्येति । वृत्तेर्विषयचैतन्याश्रितत्वसाधनफलमाह । वृत्तेरिति । वृत्तेर्बहिर्निर्गमने घटच्छिद्रनिर्गतदीपप्रभावत्सादृश्येनेत्याशङ्क्याह । न चैवमिति ॥

तर्कितेथ ऽनुमानं प्रयुङ्क्ते । तथाचेति ।

(उक्तेऽर्थेऽनुमानप्रयोग) **तथा च घटावच्छिन्नचैतन्यस्याविद्यानिवृत्तिः, प्रतियोगिसमानाश्रयज्ञानजन्या, अविद्यानिवृत्तित्वान्मूलाज्ञाननिवृत्तिवत् । न च साध्यविकलो दृष्टान्तः । चरमान्तःकरणवृत्तेरप्यन्तःकरणाभिन्नसदधिष्ठानत्वात् । अपि च विषयापरोक्षार्थमपि वृत्तेर्निर्गमनं वाच्यमन्यथा विषयस्य प्रमात्रव्यवहितत्वलक्षणापरोक्षत्वानुपपत्तेः, वृत्तिद्वारा विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेद एव तदध्यस्तविषयस्यापि तत्सम्भवात् । तथा च प्रत्यक्षो घटादिः स्वाकारवृत्तिसंयुक्तप्रत्यक्षद्रव्यत्वादात्मवत् । विपक्षे चानुमेयस्येवाप्रत्यक्षत्वापत्तिर्बाधिका । अत एव वृत्तेः संयोगपरिमाणादिद्रव्यत्वव्यवस्थापकगुणसत्त्वाद्द्रव्यत्वसिद्धिः ॥**

मूलाज्ञाननिवृत्तौ सिद्धसाधनतापरिहाराय घटा-

वच्छिन्नेति विशेषणम् । इन्द्रियसन्निकर्षादिनार्थान्तरवार णाय ज्ञानपदम् । चिन्मात्रस्य मूलाज्ञानाश्रयत्वात्तन्निवर्तकवृत्तेः प्रमातृनिष्ठत्वाद्वैय्यधिकरण्यमित्याशङ्क्याज्ञानाश्रयस्यैव चिन्मात्रस्य सर्वाधिष्ठानतया वृत्तिम्प्रत्यप्याश्रयत्वान्नैवमित्याह । न च साध्येति । किञ्चैकान्तःकरणसम्बन्धात्प्रमातृप्रमाणप्रमेयचैतन्यानामेकलोलीभावेनाभिव्यक्तत्वेन तदध्यस्तविषयापरोक्ष्यसम्भवाद्वृत्तिरूपेण परिणतान्तःकरणोपहितत्वं विषयावच्छिन्नचैतन्यस्यावश्यकमित्याह । अपि चेति । अत्राप्यनुमानमाह । तथा चेति । स्वाकारवृत्तिसंयुक्त इति । स्वाकारवृत्त्या स्वरूपसम्बन्धवान्न भवतीत्यर्थः । स्वशब्दः पक्षवाची । तथा च वृत्तौ न व्यभिचारः । न वा दृष्टान्तः सा' यविकलः । स्वरूपस बन्धमात्रवत्वे दोषमाह । विपक्षे चेति । ज्ञानघटयोः स्वरूपसम्बन्धनिषेधे परिशेषात् संयोग एव पर्यवस्यति । तथा च बुद्धेर्गुणत्वक्षतिरित्याशङ्क्य इष्टापत्तिरित्याह । अत एवेति ॥

ननु वाचस्पतिमते घटावच्छिन्नचैतन्यावरकमप्यज्ञानं जीवनिष्ठम् । अर्थापरोक्षं चापरोक्षज्ञानविषयत्वप्रयुक्तम् । ज्ञानापरोक्षत्वं च करणविशेषजन्यत्वप्रयुक्तमित्यभिमतम् । वृत्तिनिर्गमनेन विना किमनुपपन्नमिति तत्राह । केचित्त्वति ।

( यत्र वाचस्पति सवाद । ) केचित्तु घटप्रत्यक्षं घट एव व्यवहार मुत्पादयति न पट इति नियमेन तस्य घटेन सह पटव्यावृत्तसम्बन्धसिद्धौ स्वरूपसम्बन्धस्य

सम्बन्धिद्वयस्वरूपमात्रात्मकस्य पटसाधारणत्वान्मुख्यसम्बन्धे सम्भवत्यमुख्यसम्बन्धकल्पनायोगाच्च संयोगादिसिद्धौ वृत्तेर्निर्गमनं वाच्यम् । अनुमितेस्तु नैवं निर्गमहेत्विन्द्रियसन्निकर्षाभावात् । व्यवहारनियमस्यानिर्वचनीयवादे अविद्ययैवोपपत्तेः । तस्या अघटितघटनापटीयस्त्वादित्याहुः ॥

ननु स्वरूपसम्बन्ध एव नियतव्यवहारहेतुः तथा च न वृत्तेर्निर्गमनमपेक्षितमित्याशङ्क्य तस्य चक्षुरादिसाधारणत्वान्न नियामकत्वमित्याह । स्वरूपसम्बन्धस्येति । किञ्च यथा परमते चक्षुषः प्राप्यकारितानिर्वाहाय ध्रुवादिमण्डलेनास्य संयोगस्तदर्थं निर्गमनं च कल्प्यते तत्कस्य हेतोः, सम्भवति मुख्यसम्बन्धे स्वरूपसम्बन्धस्याकल्पनीयत्वात् । एवमत्रापि प्रत्यक्षवृत्तेर्विषयेण संयोगादिसम्भवात्तदभिव्यक्तचैतन्यस्य तादात्म्यसम्भवात्तदर्थं वृत्तिनिर्गमनं वाच्यमित्याह । मुख्यसम्बन्ध इति । तर्हि वृत्तित्वाविशेषादनुमित्यादेरपि निर्गमनं स्यादित्याशङ्क्य क्लृप्तकारणाभावान्नैवमित्याह । अनुमितेस्त्विति । कथं तर्हि ततो व्यवहारनियम इत्याशङ्क्याह । व्यवहारनियमस्येति । अविद्या वा कथमसम्बद्धविषयव्यवहारनिर्वाहिकेत्याशङ्क्यातीतादेरप्यनिर्वचनीयसूक्ष्मरूपेण विद्यमानत्वात्परोक्षविषयमात्रस्याविद्यकस्वरूपसम्बन्धविशेषादेव व्यवहारनियम इत्याह । तस्या इति ॥

वृत्तिनिर्गमनेऽनुपपत्तिर्वक्तुं तत्स्वरूपं विमर्शति । अथ केयमिति ।

(वृत्तिस्वरूपे पूर्वपक्षः) **अथ केयं वृत्तिर्यस्या निर्गमनं निरूप्यते?**

**न तावत्पराभिमतज्ञानवदात्मगुणः । तस्य निष्क्रियत्वात् । नापि द्रव्यम् । तस्यात्मसमवयानुपपत्तेः । आत्मनो द्रव्यासमवायित्वात् । नाप्यन्तःकरणसमवेतं द्रव्यम् । कार्यद्रव्यस्य स्वाश्रयं विनान्यत्रागमनात् । स्वाश्रयेण सहैव गच्छतीति चेन्न । मूर्तद्रव्यस्य युगपद्विरुद्धदेशसम्बन्धासम्भवेन पूर्वदेशविश्लेषे मरणप्रसङ्गात् । देहावच्छिन्नात्मनो वियोगस्यैव मरणत्वात् । न च विषयदेश एव वृत्तिरारभ्यत इति वाच्यम् । तदुपादानस्यान्तःकरणस्य तत्राभावात् ॥**

किं वैशेषिकाद्यभिमतज्ञानमिव गुणः, उत सांख्याभिमतज्ञानमिव द्रव्यमथवा भट्टाभिमतज्ञानमिव क्रियेति किं शब्दार्थः । आद्ये क्रियारहितत्वान्निर्गमनानुपपत्तिरित्याह । न तावदिति । द्वितीयं निराकरोति । नापीति । तत्र किमात्मसमवेतद्रव्यमुतान्तःकरणसमवेतम् । नाद्यः स्पर्शरहितस्यात्मनो द्रव्यासमवायित्वादित्याह । तस्येति । द्वितीयं दूषयति । नेति । अत्रापि वक्तव्यम्, किं वृत्तिरन्तःकरणेन सहैव विषयदेशं गच्छति उत स्वयमेव, अथवा विषयदेश एवोत्पद्यत इति । न तावत् द्वितीयकल्प इत्याह ।

कार्यद्रव्यस्येति । आद्यमनूद्य दूषयति । स्वाश्रयेणेति । प्राणोत्क्रमणाभावान्न मरणमित्याशङ्क्यान्तःकरणगमने । तदपि स्यादित्यभिप्रेत्याह । देहावच्छिन्नेति । तृतीय दूषयति । न चेति ।

आद्यतृतीयेऽपि किं परिस्पन्दलक्षणा क्रिया, उत परिणामलक्षणा। उभयथापि किमात्मसमवेता, उतान्तः करणसमवेता। सर्वथाप्यनुपपत्तिरित्याह । अत एवेति ।

**अतएव न क्रियापि वृत्तिरात्मनि परिस्पन्दपरिणामयोरसम्भवात् । अन्तःकरणगतयोश्च तयोराश्रयं विना अगमनादिति चेत्।**

( वृत्तिस्वरूपनिरूपणम् ) **उच्यते, अन्तःकरणस्य स्वाश्रयस्यस्यैव चक्षुरादेरिव देशान्तरप्राप्तजलूकावस्थावृत्तिरित्युच्यते। सा च चक्षुरादिनिमित्तसम्बन्धात्प्रत्यक्षस्थले विषयव्यापिनी भवत्यनुमेयादौ तु नैवम् । तत्सहकारिण इन्द्रियसम्बन्धस्यैवाभावात् । एतेन यदन्तःकरणं सङ्कोचविनाशशीलं स्वदेशस्थमेव वृद्धिं गतं वृत्तिरित्युच्यते? कृतं तर्हि चक्षुरादिना, तस्य तेन विनापि सत्त्वात्, वृद्ध्यर्थं च तदपेक्षायां वृद्धेस्ततोऽन्यत्वान्नोक्तदोषपरिहार इति निरस्तम् । कार्यस्य सदसत्त्ववादिमत एवास्योपालम्भस्य प्रसङ्गात् । अनीर्वच-**

**नीयवादे ऽस्यानवकाशत्वात् । कार्यद्रव्यमात्रस्य स्वसमवायिदेशादधिकदेशत्वाच्च । अतो ऽन्तःकरणवृत्तिस्तस्यैवावस्थाविशेषो द्रव्यम् ॥**

सावयवमन्तः करणं चक्षुर्वत्सङ्कोचविकासशीलं तद्वृद्ध्यधीनवृद्धिमच्च । तथा च तस्य विस्तीर्णावृत्तिरिति नोक्तविकल्पावकाश इति परिहरति । उच्यत इति । ननु विस्तीर्णावस्थापि किमन्तःकरणमेव किं वा ततोऽन्या । आद्ये न चक्षुर्वृद्ध्यपेक्षास्यादन्तःकरणस्य तया विनापि सत्त्वात् । द्वितीये पुनर्गुणादिविकल्पप्रसङ्गादिति चोद्यं चक्षुर्दृष्टान्ताभिधानेन निरस्तमित्याह । एतेनेति । किञ्च वृद्धेर्भेदादिना दुर्निरूपत्वं चक्षुरादेस्तत्त्वतोवृद्धिमङ्गीकुर्वाणस्य तवैव दोषावहमस्माकन्तु कारणस्यैव तत्तद्दुर्निरूपरूपान्तरापत्तिमङ्गीकुर्वतां नायमुपालम्भ इत्याह । कार्यस्येति । यदुक्तं वृत्तेर्द्रव्यत्वे ऽन्तःकरणादधिकदेशत्वं न सम्भवतीति तत्राह । कार्यद्रव्येति । आद्यतन्त्वारब्धस्य पटस्यान्ततन्तुदेशेऽपि दर्शनादित्यर्थः । न च तत्राप्युपादानान्तरमस्तीति वाच्यमत्रापि ब्रह्मरूपोपादानस्य विषयदेशेऽपि सत्त्वादिति भावः । वृत्तेः संयोगादिमत्वाद्द्रव्यत्वमित्युपसंहरति । अत इति ॥

ननु वृत्तेस्त्रिक्षणावस्थायित्वाच्छब्दवद्द्रव्यत्वमनुपपन्नमिति चोदयति । नन्विति ।

(वृत्तेर्द्रव्यत्वे चोद्यपरिहारौ) **ननु यदि वृत्तिरन्तःकरणस्यैवावस्थाविशेषो द्रव्यमित्युच्येत, तदा कथं प्रतिक्षणं विष-**

यज्ञानानां विनाशः । द्रव्यस्याक्षणिकत्वात् । तद्विनाशहेतोरनिरूपणाच्च । न चोत्तरवृत्त्या पूर्ववृत्तिनिरास इति वाच्यम् । एकद्रव्यवति-द्रव्यान्तरानारम्भादिति चेन्न तु वृत्तिविनाशे वृत्त्यन्तरं हेतुः । सुषुप्तिपूर्वक्षणवृत्तेरपि नाशप्रसङ्गात् ।

किञ्चवृत्तेर्गुणत्वे शब्दवद्विरोधिगुणोदयान्नाशः स्याद् द्रव्यत्वे तु नाशकारणमपि नास्तीत्याह । तद्विनाशेति । गुणत्वपक्ष इव द्रव्यत्वपक्षेऽपि वृत्त्यन्तरोदयादेव विनाशः किन्न स्यादित्याशङ्क्य पूर्वद्रव्यविनाशमन्तरेण तदाश्रये द्रव्यान्तरोत्पत्तिरेव न सम्भवतीत्याह । न चोत्तर-वृत्त्येति । कारणविनाश एव वृत्तिविनाशे हेतुस्तस्यास्त्रिक्षणावस्थायित्वनियमेऽप्यसिद्ध इति वक्तुं पराभिमतविनाश-कारणं दूषयति । न तु वृत्तिविनाश इति ॥

उपान्त्यवृत्तिविनाश एव तत्र हेतुरित्याशङ्क्याननुगमात्कारणविनाशद्वारा वानुगतो वृत्तिविनाशहेतुरित्याह । अपित्विति ।

(वृत्तिविनाशहेतोरनुगतत्वम्) अपि तु तद्धेतोरिन्द्रियमनःसंयोगादेर्विनाश एव कारणविनाशत्वेनानुगतो वृत्तिविनाशमात्रे हेतुः । न च निमित्तविनाशाद्द्रव्यविनाशो न दृष्ट इति वाच्यम् । कारणान्तरानिरू-

तस्य वृत्तौ पूर्वमिति पूर्वनिपातः। महान्तं धर्मं श्रित इति सापेक्षत्वाद्वृत्त्यभावः। यदा महांश्चासौ धर्मश्च महाधर्म इति तदा महाधर्मश्रित इति भवति ॥

## स्वयं क्तेन ॥ २२ ॥

स्वयमित्येतत् भिसंज्ञं क्तान्तेन सह षसो भवति। इबधिकारो ऽसम्भवादिमं योगमुत्प्लुत्य गच्छति। स्वयन्धौतौ पादौ। स्वयंगुप्ताः। कृद्ग्रहणे तिकारकपूर्वस्यापि ग्रहणम्। स्वयंविलीनमाज्यम्। एकपदं प्रयोजनम्। स्वयंधौतस्येदं स्वायंधौतम् ॥

## खट्वा ऽक्रमे ॥ २३ ॥

आचार्यासनं खट्वा। उत्पथगमनमक्रमः। खट्वाशब्द इबन्तः क्तान्तेन सह षसो भवति अक्रमे। खट्वारूढो जाल्मः। खट्वाश्रितः। खट्वाप्लुतः। सर्व एते अविनीतपर्यायाः। गुरुभिरनुज्ञातेन खट्वा आरोढव्या तदन्यथाकरणमक्रमोऽत्र प्रतीयते। अत्रापि वृत्तिपदेनाक्रमो गम्यत इति नित्यः सविधिः। वाक्यं सादृश्यमात्रेण। अक्रम इति किम्। खट्वामारूढोऽध्यापको ऽध्यापयति ॥

## सामि ॥ २४ ॥

सामि इत्यर्द्धवाचि भिसंज्ञं तत् सुबन्तं क्तान्तेन षसो भवति। सामिकृतम्। सामिभुक्तम्। सङ्घाताद्वृदुत्पत्तिः प्रयोजनम्। इबित्युपेक्षया गच्छति ॥

## कालाः ॥ २५ ॥

कालवाचिनः शब्दा इबन्ताः क्तान्तेन सह षसो भवति। कालाध्वन्यविच्छेद इत्यनेन या विहितेप् तस्या

उत्तरसूत्रेणाक्तान्तेन वृत्तिं वक्ष्यति विच्छेदे क्तान्तेनेहो-दाहरणम् । षण्मुहूर्त्ताश्चराः । ते उत्तरायणेऽहर्गच्छन्ति । दक्षिणायने रात्रिम् । तेन नास्त्यविच्छेदः । अहरतिसृता मुहूर्त्ताः । अहःसंक्रान्ताः । रोसुपीत्यन्हो नकारस्य रेफा-देशः । रात्र्यारूढाः । रात्रिसंक्रान्ताः । मासं प्रमितो मास-प्रमितश्चन्द्रमाः । मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमाः । तेन विच्छेदः ॥

## अविच्छेदे ॥ २६ ॥

क्तान्तेनेति निवृत्तम् । अविच्छेदोऽत्यन्तसंयोगः । कालाः इबन्ताः सुबन्तेन सह षसो भवति अविछेदे । अविच्छे-दश्च कालस्य द्रव्यक्रियागुणैः सम्बन्धिभिर्व्याप्तिः । अत्यन्तं सुखमत्यन्तसुखम् । अत्यन्तरमणीयम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना । कालाध्वन्यविच्छेद इतीप् ॥

## भा गुणोक्त्यार्थैनोनैः ॥ २७ ॥

भान्तं गुणोक्त्या अर्थशब्देन गुणवाचिभिश्च शब्दैः सह षसो भवति । शङ्कुलया खण्डः शङ्कुलाखण्डः । गुण-वचनादुविति मतोरुप् । एवं गिरिणा काणः गिरिकाणः । मदेन पटुर्मद पटुः । कुसुमैः सुरभिः कुसुमसुरभिः । कार्य-कारणभावलक्षणमत्र सामर्थ्यं शङ्कुलादिकृतत्वात् खण्ड-त्वादीनाम् । उक्तिग्रहणं किमर्थम् । उच्यते इत्युक्तिः । गुणे-नोक्तिर्गुणोक्तिः । गुणद्वारेण द्रव्ये यः शब्दो वर्तते तेन वृत्ति-र्यथा स्यात् केवलेन गुणेन मा भूत् । मदेन पाटवम् । वृत्तेन पाटवम् । अर्थेन । धान्येनार्थो धान्यार्थः । पुण्येनार्थः पुण्या-र्थः । अर्थशब्दोऽत्र प्रयोजनवाची । ऊनैः । माषेणोनो माषो-नः । माषविकलम् । एतैरिति किम् । गोभिर्वपावान् । अस्त्यत्र

कार्यकारणभावः । गोभिः कृतत्वाद्वपावत्वस्य । इह कस्मान्न भवति । अक्ष्णा काणः । असामर्थ्यात् । नात्र काणत्वमक्षिकृतमन्येन केनापि काणः कृतः । केवलमक्ष्णा काणत्वयुक्ता लक्ष्यते । इह कस्मान्न भवति । दध्ना पटुः । घृतेन पटुः । अनभिधानात् ॥

## पूर्वावरसदृशकलहनिपुणमिश्रश्लक्ष्णसमैः ॥२८॥

पूर्व-अवर-सदृश-कलह-निपुण-मिश्र श्लक्ष्ण-सम इत्येतैः सह भान्तं षसो भवति। मासेन पूर्वो मासपूर्वः । संवत्सरपूर्वः । मासावरः । संवत्सरावरः । अस्मादेव वचनाद्वा । हेतौ वा । पित्रा सदृशः । पितृसदृशः । भाऽतृलोपमाभ्यां तुलार्थैरिति भा । विद्यया सदृशो विद्यासदृशः । असिना कलहोऽसिकलहः । वाचा निपुणो वाङ्निपुणः । गुडेन मिश्रा गुडमिश्राः । तिलमिश्रा धानाः । वाचा श्लक्ष्णो वाक्श्लक्ष्णः । जिह्वाश्लक्ष्णः । मात्रा समो मातृसमः । कुलेन समः कुलसमः ॥

## साधनं कृता बहुलम् ॥ २९ ॥

साधनं कारकं तत् कृदन्तेन बहुलं षसो भवति । कर्तृ । अहिना हतोऽहिहतः । करणम् । विषेण हतो विषहतः । कृद्ग्रहणे तिकारकपूर्वस्यापि । नखनिर्भिन्नः । तथा देवदत्तेन नखैर्निर्भिन्नः देवदत्तनखनिर्भिन्नः । कर्म । ग्रामं गमी ग्रामगमी । ओदनं बुभुक्षुरोदनबुभुक्षुः । अपादानम् । ग्रामनिर्गतः । अधर्मजुगुप्सुः । सम्प्रदानम् । पादाभ्यां ह्रियते पादहारको भूपः । अधिकरणम् । गले चोपते गलेचोपकः । युद्धाबहुलमिति बहुलवचनादुभयत्र कर्मणि

ण्वुच् । क्वचिन्न भवति । दात्रेण लूनवान् । परशुना छिन्नवान् । व्यान्तैरधिकार्थवचन इष्यते । कुक्कुटैः सम्पात्याः कुक्कुटसम्पात्या ग्रामाः । अत्यासन्नताकथनम् । काकपेया नदी । श्वलेह्यः कूपः । कण्टकसचेय ओदनः । बाष्पच्छेद्यानि तृणानि । क्वचिन्न भवति । काकैः पातव्याः । काकैः पानीया नदी । क्वचिदधिकार्थाभावेऽपि । बुसोपेन्ध्यम् । तृणोपेन्ध्यम् । पूर्वमुत्तरञ्च कारकविभक्तिलक्षणं सविधानमस्यैव प्रपञ्चः । साधनमिति किम् । भिक्षाभिरुषितः । हेतौ भा । कृद्ग्रहणं किम् । कृदन्तेनैव वृत्तिर्यथा स्यात् सुबन्तेन मा भूत् । अभ्रविलिप्ती । क्तादल्प इत्यकारान्तात् ङीविधिः सिद्धः । सुप्पुंलिङ्गयुक्ताद्भवति ॥

## भक्ष्यान्नाभ्यां मिश्रणव्यञ्जने ॥ ३० ॥

मिश्रणव्यञ्जनवाचिनी सुबन्तेन भक्ष्यान्नवाचिभ्यां यथासंख्यं षसो भवति । गुडेन मिश्रा धाना गुडधानाः । वृत्तौ क्रियाया अन्तर्भावादप्रयोगः । एवं गुडपृथुकाः । तिलपृथुकाः । व्यञ्जनम् । दध्ना उपसिक्त ओदनो दध्योदनः । घृतोदनः ।

## अप्तदर्थार्थबलिहितसुखरक्षितैः ॥ ३१ ॥

तस्मै इदं तदर्थम् । अबन्तं तदर्थेनार्थशब्देन च बलि-हित-सुख-रक्षित इत्येतैश्च सह षसो भवति । रथाय दारु । रथदारु । कुण्डलाय हिरण्यम् । कुण्डलहिरण्यम् । बहुलग्रहणानुवृत्तेः प्रकृतिविकृतिभावे तदर्थेन वृत्तिः । विकृतिः प्रकृत्या सह इत्यर्थः । इह न भवति । रन्धनाय स्थाली । अवहननायोदूखलम् । इदमेव ज्ञापकं तादर्थ्ये

अप् भवति । कथमश्वघासो हस्तिविद्येति । तासेन सिद्धम् । अर्थशब्देन नित्यं वृत्तिः । मात्रे इदं मात्रर्थम् । त्रिलिङ्गता लोकाश्रयत्वाल्लिङ्गस्य । आतुरार्था यवागूः । आतुरार्थः सूपः । देवाय बलिः । देवबलिः । गृहबलिः । तादर्थ्ये अप् । गोभ्यो हितं गोहितम् । अश्वहितम् । हितयोगे इदमेव ज्ञापकमपः । गोभ्यः सुखं गोसुखम् । अप्चाशिष्येत्यादिना अप् । गोभ्यो रक्षितं गोरक्षितम् । तादर्थ्ये अप् ।

## का भीभिः ॥ ३२ ॥

बहुवचनादर्थविज्ञानम् । कान्तं भीवचनैः सह षसो भवति । वृकेभ्यो भीः वृकभीः । वृकेभ्यो भीतो वृकभीतः । वृकेभ्यो भीतिः वृकभीतिः । वृकेभ्यो भयं वृकभयम् । सुखनुग्रहार्थम् । पूर्वस्यायं प्रपञ्चः ।

## मुक्तापेतापोढपतितापत्रस्तैः प्रायः ॥ ३३ ॥

मुक्त-अपेत-अपोढ-पतित-अपत्रस्त इत्येतैः सह कान्तं प्रायः षसो भवति । भवान्मुक्तो भवमुक्तः । पापापेतः । सुखापोढः । स्वर्गपतितः । तरङ्गापत्रस्तः । सर्वत्रापादाने का । प्राय इति किम् । प्रासादात् पतितः । भोजनादपत्रस्त इत्येवमादौ न भवति ॥

## स्तोकान्तिकदूरार्थकृच्छ्रं क्तेन ॥ ३४ ॥

स्तोक अन्तिक दूर इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च कान्ताः क्तान्तेन सह षसो भवति । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । कृच्छ्राल्लब्धः । स्तोकार्थकृच्छ्रेभ्यो

ऽपादाने का। दूरान्तिकार्थेभ्य इप्चेति का। कायाः स्तोका-देरित्यनुप्।

## ईप्शौण्डैः ॥ ३५ ॥

ईबन्तं शौण्डादिभिः सह षसो भवति। शौण्डैः सहचरिताः शौण्डाः। अक्षेषु प्रसक्तः शौण्डोऽक्षशौण्डः। पानशौण्डः। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादप्रयोगः। सर्वत्र अधिकरणे ईप्। शौण्ड धूर्त कितव व्याड संवीत समीरण अन्तर् वने अन्तर्वनान्तः। अधि। राज्ञि अधि राजाधीनम्। अषडक्षासितंग्वधिघोरिति खः। यदा पूर्वप-दार्थप्राधान्यं विभक्त्यर्थश्च तदा हसः। अन्तर्वणम्। अधिस्त्रि। पण्डित। कुशल। चपल। निपुण ॥

## सिद्धशुष्कपक्वबन्धैः ॥ ३६ ॥

सिद्ध-शुष्क-पक्व-बन्ध इत्येतैरीबन्तं षसो भवति। कांपिल्ये सिद्धः कांपिल्यसिद्धः। सांकाश्यसिद्धः। ऊके शुष्कः। ऊकशुष्कः। छायाशुष्कः। कुम्भोपक्वः। स्थाली-पक्वः। चक्रबन्धः। चारकबन्धः। साधनं कृतेत्यस्यैव प्रपञ्चः।

## ऋणे व्यैः ॥ ३७ ॥

ईबन्तं व्यान्तैः सह षसो भवति ऋणे गम्यमाने। मासे देयमृणं मासदेयम्। मासैकदेशे मासशब्दः। अधि-करणे ईप्। एवं संवत्सरदेयम्। नियोगतः कार्यमृणम्। तेनेहापि भवति पूर्वाह्णज्ञेयम्। प्रातरध्येयम्। अत्र यत्या-न्तेनैवाभिधानादिह न स्यात्। मासे दातव्यम्। मासे दानीयम्। ऋण इति किम्। मासे देया भिक्षा।

खौ ॥ ३८ ॥

खुविषये ईबन्तं सुबन्तेन सह षसो भवति । अरण्येतिलकाः । वृत्तिपदेन संज्ञा गम्यत इति नित्यः सविधिः । ईपोऽहल इत्यनुप् । एवमरण्येमाषकाः । वनेकसेरुकाः । वनेवल्वजकाः । पूर्वाह्णेस्फोटकाः । कूपेपिशाचिकाः ।

क्तेनाहोरात्रभेदाः ॥ ३९ ॥

भेदा अवयवाः । क्तान्तेन सह अहोरात्रभेदा ईबन्ताः षसो भवति । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रभुक्तम् । अपररात्रभुक्तम् । भेदग्रहणं किम् । उलूखलैराभरणैः पिशाची यदभाषत । एतत्तु ते दिवा नृत्तं रात्रौ नृत्तन्तु द्रक्ष्यसि ।

तत्र ॥ ४० ॥

क्तेनेति वर्तते । तत्रेत्येतत् क्तान्तेन सह षसो भवति । तत्रकृतम् । तत्रभुक्तम् । तत्रपीतम् । ऐकपद्यं प्रयोजनम् ।

क्षेपे ॥ ४१ ॥

क्षेपः कुत्सा । क्षेपे गम्यमाने ईबन्तं क्तान्तेन सह षसो भवति । कृद्ग्रहणे तिकारकपूर्वस्यापि । अवतप्तेनकुलस्थितं एतत् । कार्येष्वनवस्थितत्वं तवेदमित्यर्थः । षे कृति बहुलमित्यनुप् । एवमुदकेविशीर्णं भस्मनिहुतम् । निष्फलं तवेदमित्यर्थः ।

ध्वाङ्क्षैः ॥ ४२ ॥

क्तेनेति निवृत्तम् । क्षेप इति वर्तते । बहुवचनादर्थनिर्देशः । ध्वाङ्क्षवाचिभिः सुबन्तं षसो भवति क्षेपे ।

तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। वृत्तावियार्थस्यान्तर्भावः। तीर्थकाकः । श्राद्धवायसाः। अनवस्थित एवमुच्यते। ध्वाङ्क्षैरित्यर्थनिर्देशात्तत्सदृशानामपि ग्रहणमिति केचित्। तीर्थश्वा। तीर्थसारमेयः। तीर्थसृगालः। क्षेप इति किम्। तीर्थे ध्वाङ्क्षो वास्यते।

## पात्रेसमितादयश्च ॥ ४३ ॥

क्षेप इति वर्तते। पात्रेसमितादयश्च शब्दा गणपाठादेव निपातिताः षसंज्ञा भवन्ति क्षेपे। पात्रे एव समिताः पात्रेसमिताः। पात्रेबहुलाः। न क्वचित्कार्य इति क्षेपो गम्यते। निपातनादनुप्। उदुम्बरे मशक इव उदुम्बरमशकः। उदुम्बरकृमिः। कूपकच्छपः। अवटकच्छपः। कूपमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। एतेष्विवार्थो वृत्तावन्तर्भूतः। मातरिपुरुषः। अयुक्तकारीत्यर्थः। पिण्डीशूरः। निरुत्साह इत्यर्थः। गेहेक्ष्वेडी। गेहेनर्दी। गेहेनर्ती। गेहेविजिती। गेहेव्याडः। गर्भेतृप्तः। गर्भेदृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठेविजिती। गोष्ठेक्ष्वेडी। गेहेशूरः। गेहेमेही। गेहेदासः। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेचुरुचुराः। चकारोऽवधारणार्थः। पात्रेसमितादय एव न वृत्त्यन्तरं लभन्ते। परमाः पात्रेसमिताः। अत एव क्तान्तेनापीह वृत्तिः सार्थिका अन्यथा क्षेप इत्यनेनैव सिद्धा स्यात्।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलं यपूचैकाश्रये ॥ ४४ ॥

एकाश्रयः समानाधिकरणम् । पूर्वकालवाचि-एक-सर्व-जरत्-पुराण-नव-केवल इत्येते सुबन्ता एकाश्रये सति सुबन्तेन सह यसंज्ञः सो भवति षसंज्ञश्च । पूर्वः कालो यस्य स पूर्वकालः । सम्बन्धिशब्दत्वादपरकालेन तस्य वृत्तिः । पूर्वं स्नाताः पश्चादनुलिप्ताः स्नातानुलिप्ताः । कृष्टसमीकृतम् । च्छिन्नप्ररूढम् । दग्धप्ररूढम् । एकसाटी । एकचर्या । एकभिक्षा । सर्वदेवाः । सर्वपदार्थाः । जरद्धस्ती । जरद्गवः । पुरा भवं पुराणम् । सायञ्चिरम्प्राह्णेप्रगेऽभि-भ्यस्तनङिति तनट् । अत एव निपातनात्त्वम् । पुराणान्नम् । पुराणशास्त्रम् । नवावसथः । केवलमसहायं ज्ञानं केवलज्ञानम् । विशेषणवृत्तेरयं प्रपञ्चः । चशब्दः षसंज्ञासमावेशार्थः । अन्यथा राजपुरुषादौ कृतार्था षसंज्ञा बाध्येत । मोषिका गौः मोषकगवी । स्त्र्युक्तपुंस्कादिना पुंवद्भाव नधुहृत्कोङ इति प्रतिषिद्धो यसंज्ञायां पुंवद्यजातीयदेशीयेति पुनर्भवति । षसंज्ञाश्रयो गोरहृटुपीति टः सान्तः । इत उत्तरमेकाश्रयाधिकारो यावन्मयूरव्यंसकादयश्चेति । एकाश्रय इति किम् । एकस्याः साटी ।

## दिक्संख्यं खौ ॥ ४५ ॥

दिग्वाचि संख्यावाचि च सुबन्तं एकाश्रये सुबन्तेन सह षसो भवति खुविषये । पुर्वेषुकामसमी । अपरेषुकामसमो । पूर्वकृष्णमृत्तिका । अपरकृष्णमृत्तिका । दक्षिणपञ्चालाः । उत्तरपञ्चालाः । संख्या । पञ्चाम्राः । पञ्चवटाः । सप्तर्षयः । खाविति किम् । दक्षिणा ग्रामाः । पञ्च ग्रामाः ।

## हृदर्थद्युसमाहारे ॥ ४६ ॥

दिक्संख्यमिति वर्तते । हृदर्थविषये द्यौ परतः समाहारेऽभिधेये दिक्संख्यमेकाश्रये सुबन्तेन सह षसो भवति । दिक् । हृदर्थे । पूर्वस्यां शालायां भवः षसे कृते समुदायाद्दिगादेरस्वाविति णः । पौर्वशाल । आपरशालः । द्यौ । पूर्वा शाला प्रिया अस्य पूर्वशालाप्रियः । अपरशालाप्रिय । अवयवापेक्षया षसाः । पूर्वपदस्य पुंवद्भावः । दिशां समाहारो नास्ति । क्रियागुणापेक्षयाऽपि समाहारे अनभिधानम् । संख्या । हृदर्थे । पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः । अनेन षसे कृते तस्य संख्यादेरश्चेति रसंज्ञायां आर्हीयस्य ठणो रादुवस्वावित्युप् । हृदुप्युबिति स्त्रोत्यस्योप् । पञ्चानां नापितानामपत्य पाञ्चनापितिः । रस्योबनपत्य इति वचनं ज्ञापकं हृदर्थेपि से हृदुत्पत्तिर्भवति । द्यौ । पञ्च गावो धनमस्येति पञ्चगवधनः । अवयवसापेक्षया गोरहृदुपीति टः सान्त सिद्धः । द्वे ऽहनी जातस्य द्व्यन्हजातः । एभ्योऽन्होन्ह इत्यन्हादेशः । समाहारे । पञ्च पूलाः समाहृताः पञ्चपूली । अनेन षसः । उत्तरसूत्रेण रसंज्ञायां रादिति ङीविधि । कथं षण्णगरी अत्रापि क्रियागुणापेक्षया समाहारोऽस्ति । लब्धा शोभनाचेति गम्यते समाहारस्यैकत्वादेकवचनम् । ननु समाहारः समूह स तु हृदर्थ एव न पृथक् समाहारनिर्देशात् । समूहार्थस्य त्यस्यानुपपत्तिः पञ्चानां कुमारीणां समाहारः पञ्चकुमारी । त्योत्पत्तौ हि रस्योबनपत्य इत्युप् प्रसज्येत । ततश्च हृदुप्युबिति स्त्रीत्यस्योप् स्यात् ।

**संख्यादी रश्च ॥ ४७ ॥**

हृदर्थद्युसमाहार इत्यत्र संख्यादिर्यः स उक्तः स

रसंज्ञो भवति । हृदर्थे । द्वावनुयोगौ वेत्त्यधीते वा द्व्यनुयोगः । रस्योबनपत्य इत्यण उप् । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । द्यौ । पञ्च नावः प्रिया अस्य पञ्चनावप्रियः । नावो रादिति टः सान्तः । समाहारे । पञ्चपूली । चशब्दः षसंज्ञासमावेशार्थः । द्वे अङ्गुली समाहृते द्व्यङ्गुली । षेङ्गुलेर्झिसंख्यादेरिति अः सान्तः । रादिति ङीविधिश्च सिद्धः ।

## कुत्स्यं कुत्सनैः ॥ ४८ ॥

कुत्स्यवाचि सुबन्तं कुत्सनवाचिना षसो भवति । वैयाकरणखसूचिः । प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तस्य कुत्सायामयं सविधिः । रूपसिद्धिं पृष्टो निःप्रतिभः सन् य खं सूचयति वीक्षते स खसूची । खसूचित्वं कुत्सनम् । विशेषणस्य परनिपातार्थ आरम्भः । एवं क्षत्रियभीरुः । श्रोत्रियकितवः । भिक्षुविटः । मीमांसकदुर्दुरूढः । कुत्स्यमिति किम् । वैयाकरणः कितवः । न हि वैयाकरणत्वं कितवत्वेन कुत्स्यते । कुत्सनैरिति किम् । कुत्सितो ब्राह्मणः ।

## पापाणके कुत्स्यैः ॥ ४९ ॥

पापाणकशब्दौ कुत्सनवचनौ कुत्स्यवचनैः षसो भवति । पापकुलालः । अणकनापितः । पूर्वयोगेन कुत्स्यस्य पूर्वनिपाते प्राप्ते परनिपातार्थ आरम्भः ।

## सामान्येनोपमानम् ॥ ५० ॥

उपमानोपमेययोः साधारणो धर्मः सामान्यम् । उपमीयते परिच्छिद्यते अनेन सादृश्येनार्थ इत्युपमानम् । उपमा-

नवाचि सुबन्तं सामान्यवाचिना सुबन्तेन सह षसो भवति । निराधारं सामान्यं न प्रतीयत इति सामान्यधर्मेण विशिष्टं यदुपमेयं तेनात्र वृत्तिः । शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता । शस्त्रीशब्दः श्यामगुणमुपादाय देवदत्तायां वर्तत इति एकाश्रया वृत्तिर्न्न विरुध्यते । मृगीव चपला मृगचपलेति पुंवद्भावश्च भवति । एवं कुमुदश्येनी हंसगमनी न्यग्रोधपरिमण्डला दूर्वाकाण्डश्यामा सरकाण्डगौरी । सामान्येनेति किम् । फला इव तण्डुलाः । पर्वता इव बलाहकाः । उपमानमिति किम् । देवदत्ता श्यामा ।

## व्याघ्रैरुपमेयेऽतद्योगे ॥ ५१ ॥

तस्य समानस्य योगः प्रतिषिध्यते । उपमेयार्थवाचिव्याघ्रादिभिः सह षसो भवत्यतद्योगे । उपमेयशब्दस्य सम्बन्धित्वादुपमाने वृत्तिः । साधारणधर्मः सामान्यं हि वृत्तावन्तर्भूतम् । अतद्योग इत्यनेन विशिष्टः साधारणधर्मः प्रतिषिध्यते । पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः । पुरुषविशेषस्य परनिपातार्थ आरम्भः । व्याघ्र सिंह ऋषभचन्दन वृक वृषभ वृष वराह हस्तिन् कुञ्जर रुरु पुण्डरीक स्त्री पलाविका । आकृतिगणोऽयम् । तेन मुखकमलं करकिशलयं पुरुषचन्द्रादि सिद्धम् । अतद्योग इति किम् । पुरुषोऽयं व्याघ्र इव शूरः । इदमेव प्रतिषेधवचनं ज्ञापकं भवति प्रधानस्य सापेक्षस्यापि वृत्तिः । तेन राजपुरुषो दर्शनीयः । राजपुरुषः पण्डित इत्येवमादि सिद्धम् ।

## विशेषणं विशेष्येणेति ॥ ५२ ॥

एकाश्रय इति वर्तते । यत् सामान्याकारेण प्रवृत्तं सत् अनेकप्रकाराधारभूतं वस्तु प्रकारान्तरेभ्यो व्यावृत्त्यै-

कत्र प्रकारे अवस्थापयनि तद्विशेषणम् । अनेकप्रकाराधारभूतं वस्तु विशेष्यम् । विशेषणवाचिना सह षसो भवति । कृष्णश्च स कम्बलश्च स कृष्णकम्बल । लोहिता च सा साटी च सा लोहितसाटी । अर्द्धं च तत् पिप्पली च सा अर्द्धपिप्पली । यदा पिप्पल्यवयवे पिप्पलीशब्दस्तदेय वृत्तिरेकाश्रयाधिकारात् । यदा समुदाये वर्तते तदा पिप्पल्यर्द्धमिति तासः । भिक्षैकदेशे भिक्षाशब्द । द्वितीया भिक्षा द्वितीयभिक्षा । तृतीयभिक्षा । चतुर्थभिक्षा । तुर्यभिक्षा । इह भिक्षाद्वितीयमिति तासो नोपपद्यते । डदूग्रहणादिप्रतिषेधस्य बलीयस्त्वात् । कायैकदेशो कायशब्दः । पूर्वः कायः पूर्वकायः । अपरः कायः । अपरकायः । उत्तरकायः । एवं मध्यान्हः । सायान्हः । पूर्वं कायस्येति अवयवसम्बन्धे तासानभिधानं पूर्वं कायादिति प्राप्नोति । विशेषणविशेष्ययोरन्यतरस्य ग्रहणेऽपि सम्बन्धिशब्दत्वादुभयोः प्रतिपत्तिरिति द्वयनिर्देशो व्यर्थः । नैवं यत्र पूर्वोत्तरपदयोः प्रत्येकं विशेषणविशेष्यभावस्तत्र यथा स्यादिह मा भूत् । वृक्षः शिंशपा । शिंशपा हि वृक्षार्थं न व्यभिचरतीति न तस्या विशेष्यत्वम् । यदा शिंशपादिशब्दाः फलादिष्वपि वर्तन्ते तदोभयोर्विशेष्यत्वे सविधिर्भवत्येव । शिंशपावृक्ष· । पलाशवृक्षः । उभयोर्विशेषणत्वे कस्य पूर्वनिपात इति चेत् प्रधानद्रव्यापेक्षयान्वर्थस्य नीचो गुणस्य पूर्वनिपातः । यद्यप्युत्पलादिशब्दो जातिशब्दस्तथापि जातिर्द्रव्यस्योत्पत्तेः प्रभृत्या विनाशादात्मभूता प्रतीयत इति जातिनिमित्तः शब्दो द्रव्यशब्दो व्यवस्थाप्यते । अत एव विशेष्यत्वमुत्तरपदार्थस्य द्रव्यद्वारेण जातेरनीलत्वादना-

धेयातिशयत्वाच्च सामानाधिकरण्यन्तु जात्यपेक्षया जातेर्भेदाभेदविवक्षा अनेकान्ताधिकाराल्लभ्यते । विशेषणमिति किम् । तक्षकः सर्पः । संज्ञैषा । अस्यां विशेष्यत्वमेव विशेषणत्वम् । विशेष्येणेति किम् । लोहितस्तक्षक । तस्य लोहितत्वाव्यभिचारादविशेष्यत्वम् । इतिशब्दः किमर्थो यत्र लोके विवक्षा तत्र यथा स्यात् । इह न भवति रामो जामदग्न्यः । अर्जुनः कार्तवीर्यः । इह कृष्णसर्पः । लोहिताहिः लोहितशालिरित्येवमादिषु संज्ञाशब्देषु नित्यः सविधिः । वाक्यन्तु सादृश्यमात्रेण । नीलोत्पलादिषूभयम् । नीलमुत्पलं नीलोत्पलम् । इहेच्छया विशेषणत्वम् । खञ्जकुण्टः । कुण्टखञ्ज ।

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः ॥ ५३ ॥

पूर्व-अपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीर इत्येते एकाश्रये सुपा सह समस्यन्ते षसो भवति । पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः । इह सूत्रे पूर्वशब्दो वीरशब्दश्चोपसर्जनं तयोर्वृत्तौ परत्वात् वीरशब्द उपसर्जनम् । वीरपूर्वः । वृन्दारकनागकुञ्जरैस्तदित्यत्र नागशब्दः प्रधानं पोटायुवतीत्यत्र प्रवक्तृशब्दः प्रधानं तयोर्वृत्तौ परत्वात् प्रवक्ता प्रधानम् । नागप्रवक्ता ॥

## श्रेण्यादि कृतैः ॥ ५४ ॥

श्रेण्यादयः कृतादिभिः सह एकाश्रये षसो भवति ।

दुःख्यन् प्रस्तरवद्भवन् बहुपशुःसुःख्यन्नसौ देहभृद्
दग्धादग्धसजीवितद्रुमदशादीनोदरीदृश्यते ॥१५॥

अपिच,

विचित्रजवविश्वकृद्विहृतिमारुतप्रेरणा
विभक्त भवितव्यताविपिनसिन्धुविष्फूर्तिभिः।
जटालवृजिनाविलेजवनयौवनास्वादने
जरामरणभीषणेजगतिजन्तुरावर्त्यते ॥ १६ ॥

विवेकः—( सानुशय ) देवि सत्यमिदमितः पूर्वं, अद्य खलु अपुनरावर्त्तनी-
मारुरुक्षतः पुरुषस्य चिरकालसंचितपुण्यसंचयविशेषमाकर्णय·

पातत्रासनिरीक्षणप्रशमितस्वर्वासदुर्वासना
पुंसस्संप्रतिशेमुषीनिरवधिंपुष्णातितृष्णांपरे।

---

नुभवाभावात् पाषाणकल्पोभवन् बहुपशु हिताहितविवेकापायात् पशुसमः सुख्य न्सुखमनुभवन्नसौ देहभृत दग्धश्चादग्धश्च सजीवितो यो द्रुम' तस्य दशया दीनः शोच्य दरीदृश्यते क्वचित्प्रदेशे दग्ध प्रदेशान्तरे पत्रपल्लवाद्युपेत अतएव अन्तरार्द्र तरुर्यथा शोच्योभवति तथायमपि पुरुषोतिशोच्यो दृश्यतइति हृदय ॥ १५ ॥

पुनरपि तदवस्थामेवाह अपिचेति—॥

विचित्रेति—॥ विचित्रः जवो यस्यास्सा तथा साचासौ विश्वकृद्विहृतिश्च भगवल्लीलासैव मारुतस्तस्यप्रेरणया विभक्तायाः भवितव्यताया विपिनजाल तदेव सिन्धो' समुद्रस्य विष्फूर्त्तिभि जटालानि परस्परानुबद्धानि वृजिनानिपापानि तैरा विले सङ्क्षुब्धे जवन वेगवत अस्थिर यौवनस्यास्वादन यस्मिन् तस्मिन् जरामरणाभ्या भीषणे एतद्द्वयोपादान मन्येषा रोगादीनामप्युपलक्षण जगति आवर्त्यते पुनः पुन आवर्त्य माना· क्रियते ॥ १६ ॥

अपुनरावृत्ति पुनरावृत्तिर्नविद्यते यस्या ता वर्त्तनीं पदवीमारुरुक्षत' आरोढुमि च्छतो मुमुक्षोरित्यर्थ चिरकालसंचितेन पुण्यसञ्चयेन परिणता तमेवाह—

पातेति—॥ पात पतन तस्मा त्त्रास भय तस्य निरीक्षणेन स्वर्गेपि पात-भीतस्य क्षयिष्णोर्नास्ति निर्वृतिः इत्युक्ते स्वर्गे वसतोपि पातभयमस्तीत्यवगम्यते तदवलोकनेन प्रशमिता स्वर्वासदुर्वासना स्वर्गवास दुर्वासना यस्यास्सा तथा पुंस·शे-मुषी बुद्धिर्निरवधि तृष्णा परे सर्वाधिके पुंसि पुष्णाति वर्धयति मतिक्रमल बुद्धि

अर्थित्वे मतिकश्मलप्रचलितेप्येवंप्रतिष्ठापिते
सामर्थ्यंचसमाधिसीम्निनियतावस्थंव्यवस्थाप्यते १७

अपिच,

प्रतिक्षिप्तावद्यप्रवरगुणनिर्धारणभुवा
परप्रेम्णाजुष्टोभवभृदधुना भाग्यवशतः ।
अभिन्नास्वादानाममृतलहरीणामिवधियां
विकल्पंविज्ञाताविधिपवनवैषम्यजनितम् ॥ १८ ॥

अयचपरमपुरुषचरणारविन्दमकरन्दमधुकरो वृन्दारकनगरमपिन र-कमिव पर निश्चेष्यति ।

अत्रच,

भवपथकथारागेभग्नेगतागतचिन्तया
परमपुरुषप्रेप्सालाभेतदद्भुतबोधनात् ।

---

चाचल्य अक्षय्यंहवै चातुर्मास्ययाजिनस्सुकृतंभवति इत्यादिश्रवजनितमतिक्षोभे प्रचलितोप्यर्थित्वे एव स्वर्गपातत्रासनरीक्षणेन प्रतिष्ठापिते सति समाधिसीम्नि सामर्थ्यं च नियतावस्थं नियता निश्चला अवस्था अवस्थान यस्य तत्तथा व्यवस्थाप्यते अनेनास्य मुमुक्षा समाधौ सामर्थ्यं च सिद्धमिति द्योत्यते ॥ १७ ॥

उपायानुष्टान च भविष्यतीत्याह प्रतिक्षिप्तेति–॥

प्रतिक्षिप्तेति–॥ प्रतिक्षिप्तानिनिरस्तानि अवद्यानि दोषा येषा ते प्रतिक्षिप्तावद्या हेयप्रतिभटा इत्यर्थ तेचते प्रवरगुणाश्चेति कर्मधारय प्रवरगुणा· कल्याण गुणाः तेषां निर्धारणेन निश्चयेन भवतीति निर्धारणभूः तेन परप्रेम्णा परस्मिन् ब्रह्मणि प्रेम्णा भक्तिरूपेन भाग्यवशत अधुना जुष्टो भवभृदभिन्न· एकरूप आस्वाद· भोगरसः यासातासां अमृतलहरीणा अमृतप्रवाहानामिव भोग्यभूताना धिया ज्ञानाना विधिः ध्यायीत उपासीतेत्यादिरूपः स एव पवन तस्य वैषम्यण भेदेन जनित विकल्प भेदं विज्ञाता ज्ञास्यति नानाशब्दादिभेदादिति सूत्रकारेणोक्त विद्याना नानात्व ज्ञास्यतीतिभाव· ॥ १८ ॥

इतः परमस्य स्वर्गाभिलाषो न भविष्यतीत्याह अयंचेति–। उक्त ह्येतत्

एते वै निरयास्तात स्थानस्य परमात्मन· । इति

अयमिदानी सिद्धा साध्यां सत्त्वसवेत्याह अत्रचेति–॥

गुणगणभिदासंभेदाभ्यामुपस्कृतविग्रहे
क्षममिहपरंविद्यावर्गेविमोहनिवर्तनम् ॥ १९ ॥

इह च मोहप्रशमनदिङ्मात्रेणोदाहरामि

समानामुक्तिश्चेन्नखलुघटतेसाधनभिदा
नचेत्स्वर्गन्यायस्तरतमतयान्याभिमतया ।
प्रमाणप्रागल्भ्यप्रणिधिमवधूयप्रलपता
मतिक्षीबः क्षोभस्त्वमतिविहतेरेवनिहतः ॥ २० ॥

एवमपि ये मुह्यन्तितेमुह्यन्त्येव नखलुसहस्रैरपि सलिलकुम्भैर्बलिभुजः प्रक्षाल्यमानाबलक्षतांप्रतिपद्यन्ते दुर्वादिगर्वसर्वस्वनिर्वापकैस्सर्वज्ञबुद्धिवेदिभिर्वर्णित निर्विशङ्कमखिलमधिगम्यसर्वेश्वरनिर्विशन्तिसन्तः—

---

भवेति—॥ गतागतचिन्तया जायस्वम्रियस्वगतागतं कामकामालभन्ते इत्यादि प्रमाण बलादस्य पुरुषस्य गतागत चिन्तया भवपथः संसारमार्गः तस्य कथाप्रसंगः तद्विषये रागे भग्ने सति तस्य परमपुरुषस्याद्भुतमाश्चर्यरूप यद्गुणशीलादिक तस्य बोधनात ज्ञानात परमपुरुषप्रेप्साया परमात्मप्राप्तीच्छाया॰ लाभेसति गुणानामानन्दादीनां गणस्य भिदाभ्सभेदाभ्या भिदाभेद अनुपसंहार. अभेदः उपसंहार ताभ्यामुपस्कृत विग्रहे उपस्कृत स्वरूपे विद्यावर्गे विमोहनिवर्तनं पर तमं युक्तं विमोहः भ्रमः तन्निवर्तनमेव कर्तुं युक्तमितिभाव ॥ १९ ॥

अत्रपूर्वपक्षिणोयमभिप्रायः मुक्तिस्तावदेका वा उतानेका आद्ये कल्पे साधन बहुत्व नस्यात् एकेनैव साध्यसिद्धौ साधनान्तराणा वैयर्थ्यं स्यात् द्वितीये स्वर्गस्येव मुक्तेरपि तारतम्य स्यादिति एतद्दूषयितुमनुवदति—

समानेति—॥ मुक्तिः तत्तद्विद्याभिः साध्यामुक्ति समाना एकाचेत साधन भिदा साधनानामुपकोसलविद्या सद्विद्या दहरविद्यादीना भेदः नघटते खलु वैयर्थ्यात इत्यर्थः एका नचेत अन्याभिमतयामीमांसकाभिमतयातरतमतया स्वर्गन्यायः प्रसज्जेतेति शेषः परिहरति प्रमाणेति—। प्रमाणाना प्रागल्भ्य धार्ष्ट्यं तद्विषय प्रणिधिं चिन्तामवधूयापहाय प्रलपतामिति उक्तप्रकारेण क्षीबैरज्ञै॰ कृतः क्षोभ स्वमतिविहतेः मुक्तेरेकत्वे साधन बहुत्वस्य वैयर्थ्यात् साधन बाहुल्येन स्वर्गस्येवास्यामुक्तेरपि बहुत्वमङ्गीकरणीयमिति या स्वमतिः तस्या. निरञ्जनः परमं साम्यमुपैतीत्यादि प्रमाण बलात विहतेरेवहेतो निहत॰.प्रतिक्षिप्तः ॥ २० ॥

सुमतिः—( सश्लाघ ) * णाह, पडिट्ठाविअह्मि दाणिपमाणप्पणअपेसलेन तुम्ह भासिएण, पडिबुद्धजण सभावणिज्जेपमाण उत्तन्दणिरिक्खणमिमसब्भहिअदरिद्द खुतुह माहप्प, दाणि किल ।

कप्पारम्भपअण्डतण्डवकला कीलन्तकालान्दअ
क्खोहुव्वेलकवन्द सिन्धुलहरी धूअन्तचन्दप्पहं ।
एक्कक्खरणिअणिब्भरसुहासन्दोहसन्तोसिआ
आमेल्लन्दि भुअङ्गिआतुह जसम्वेलन्तसेलन्दरे ॥ २१ ॥

* नाथ प्रतिष्ठापितास्मि इदानीं प्रमाणप्रणयपेशलेन युष्मत् भाषितेन प्रतिबुद्धजनसम्भावनीये प्रमाणवृत्तान्तनिरीक्षणे समाधिकदरिद्र खलु तवमाहात्म्य ।

इदानीं किल ।

कल्पारम्भ प्रचण्डताण्डवकला क्रीडमानकालान्तक
क्षोभोद्वेलकपर्दिसिन्धुलहरी धूयमानचन्द्रप्रभ ।
एकैकाक्षर निर्यन्निर्भरसुधासन्दोहसन्तोषिता
आम्रेडन्ति भुजङ्गिकास्तवयशोवेलान्तशैलान्तरे ॥

अतीन्द्रियेष्वर्थेषु श्रुतमेव प्रामाण्याद्यथाश्रुतमेव कल्पनीयमिति मुह्यन्त्येवेति—।

किमुक्त मोहोनिवार्यतामित्यत्राह न खल्विति—।

अतएव अर्थस्थितिरित्याह दुर्वादीति—।

दुर्वादिनां गर्वसर्वस्व निर्वापकैः निवर्तकैः सर्वं जानातीति सर्वज्ञाबुद्धिर्येषां तैः निर्वर्णित निष्कृष्यवर्णित सर्वेश्वर निर्विशङ्कमधिगम्यनिर्विशन्ति ।

नाथप्रतिष्टापितास्मीत्यादि प्रतिबुद्धा. ज्ञानिन तेच तेजनाश्च तैस्सभावनीये प्रमाणानां वृत्तान्त' प्रवृत्तिस्तस्य निरीक्षणे समाधिकाभ्यां दरिद्रे रहितं ।

कल्पारंभेति—॥ कल्पस्य प्रलयस्यारंभेप्रचण्डमुद्धतं यत्ताण्डवं तस्य कलया विद्यया क्रीडन् यः कालान्तकः रुद्रः तस्य क्षोभेण उद्वेलाउत्कूलाकपर्दे, तस्य जटाचूडे या सिन्धुर्गंगा तस्यालहरीभिः धूयमानस्य चन्द्रस्य प्रभेव प्रभा यस्य तत्तव यशः एकैका क्षरेभ्यं निर्यान्ति निर्भरानिबिडा च या सुधा तस्यास्सन्दोहैः निष्यन्द. सन्तोषिता आनन्दिता भुजङ्गिकाः वेलान्तेषु समुद्रतीरान्तेषु येशैलाः तेषामन्तरे आम्रेडन्ति पुनः पुनः गायन्तीत्यर्थ ॥ २१ ॥

( विद्यामाहात्म्यमनुचिन्त्यसहर्षरोमाञ्च ) ।

*** जम्भाअन्त दइच्चमद्दणदआ सलो असोतस्सिणी**
**वी ईसीअलसाहुसुद्धसुहआसोहन्तिविज्जा इमा ।**
**जाणङ्किं विभवग्गिदाविअ जणो घेत्तूणचिन्ताणिअं**
**मुत्तिंपेक्खइहत्थमज्झणिहिअं मोहंमिसन्तेविअ॥२२॥**

विवेकः—किमुच्यते, अवरोपितप्रायः खलु पुरुषस्य चिन्ताभारः अपि चास्यससारदोषदर्शनसातत्यसमुत्थितादपि परब्रह्मदिदृक्षास रम्यजृम्भितं परमवैराग्यमुपधानीभवति ।

तथाहि ।

**निषिद्धं विधार्थादधिकमपि काम्यञ्चविजहत्**
**परप्रीत्यैकर्मप्रतिनियतमादायमुदितः ।**

* जृम्भमाणदैत्यमर्दनदयास्वर्लोक स्रोतस्विनी
वीचीशीतलसाधुशुद्ध सुभगाशोभन्तेविद्याइमाः ।
यासा किमपि भवाग्नितापितजनोगृहीत्वा चिन्तानीता
मुक्ति प्रेक्षतेहस्तमध्यनिहिता मोहेसत्येव ॥

जृंभमाणेति—॥ जृंभमाणदैत्यमर्दनदयैव स्वर्लोकस्रोतस्विनी तस्यावीचय इव शीतलाः साधुसम्यक्शुद्धा पावन्य सुभगा सुखावहाः विद्याः शोभन्ते यासा मध्ये कामपि विद्यां भवाग्निना ससाररूपवह्निना तापितो जन गृहीत्वा स्वीकृत्य चिन्तानीता चिन्तया समाधिना आनीता मुक्ति मोहे शान्ते सत्येव हस्तमध्यनिहिता प्रेक्षते करतलगता मन्यत इत्यर्थ ॥ २२ ॥

अवरोपितप्रायः प्रायेणावरोपितं खलु ससारस्य दोषाणामल्पत्वास्थिरत्वानर्थावहत्वादीनां दर्शनानि ज्ञानानि तेषां सातत्यमविच्छेद तस्मिन् समुत्थितादपि वैराग्यात् परब्रह्मदिदृक्षाया सरंभेण जृंभितं वैराग्यमस्योपधानी भवति उपकरणंभवति । उक्ताद्वैराग्यादयमतिशय सिद्धइत्याह—।

निषिद्धमिति—॥ निषिद्ध शास्त्रैरिति शेषः विद्यार्थात् विद्यानिष्पत्तिरेवार्थो प्रयोजनं यस्य तस्मादधिकं कर्म काम्यंकर्मच विजहत्यजन् परस्यभगवतः प्रीत्यै प्रतिनियतं कर्म नित्यनैमित्तिकरूपमादायानुष्ठीयात् इव मुदितः शुभे शुभाश्रयभूते ब्रह्मणि अद्धैव

शुभश्रद्धा दुग्धोदधि नवसुधोल्लासललिते
समासावाधातुं त्वरयतिमुनिस्सम्प्रतिमनः ॥ २३ ॥

अपिच ।

विलक्षोपक्षिप्तं विषयरसगन्धर्वनगर
प्रशंसायाथार्थ्यं प्रणिदधतिचित्तेपितनुभृत ।
मयादत्तेहस्तेमतिकलुषमुल्लंघ्यतरसा
परब्रह्मैकान्तीभवजलनिधिं गोष्पदयति ॥ २४ ॥

सुमतिः—( सविमर्श ) * तहवि पिआमहप्पमुहे महाजोइजणे वासणादापिअविसअरसबलिसमोहिए णिसाअरगहणकोदूहलप्पसारिअकरस्सबालिसस्सविअ अह उण कस्सविमोक्खोहोज्जन्ति विअलिआसस ब्बीलिअ विअ मह माणस ।

---

* तथापि पितामहप्रमुखे महायोगिजने वासनादापित विषयरस बलिशमोहिते निशाकरग्रहणकौतूहलप्रसारितकरस्यबालिशस्येव कथ पुन. कस्यापिमोक्षो भवेदिति विगलिताशसव्रीलितमिवममेमानस ।

---

दुग्धोदधिः तस्य नवायाः सुधाया उल्लास उद्भव इवललिते समाधौ मन आधातुं त्वरयति ॥ २३ ॥

विलक्षेति—॥ विलक्षेण लज्जया उपक्षिप्तमन्वित यथा भवति तथा विषयेषु शब्दादिषु रसः प्रीतिः स एव गन्धर्व नगर तस्य प्रशसाया याथार्थ्य सत्यत्व चित्ते प्रणिदधत्यपि तनुभृत जीव मया हस्ते दत्तेसति तरसा झटिति मतिकलुष चित्तकालुष्यमुल्लघ्य परब्रह्मणि एकान्तोसन्भवजलनिधि ससाराब्धि गोष्पदयति गोष्पदवन्मनुत इत्यर्थः. ॥ २४ ॥

वासनयादर्शित विषयरस एव बलिशमत्स्यबन्धन तेन मोहिते सति निशाकरग्रहणकुतूहलेन प्रसारितकरस्य बालिशस्येव विगलित आशस आश्वासो यस्यतत्तथा । वृथा चन्द्रग्रहणापसेयाप्रसारित करस्य बालस्य तत्प्राप्तिर्नभवति तथैवास्य मोक्षलाभोपि न स्यादिति मानसाश्वासो मम नास्तीतिभाव ॥

साहं तपश्चरिष्यामि गर्भमाधातुमर्हसि ।
[1]तत्र मे शक्रहन्तारं पुत्रं त्वं जनयिष्यसि ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तदा ।
प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥
एवं भवतु भद्रं ते शुचिर्भव तपोधने ।
जनयिष्यामि भद्रं ते शक्रहन्तारमीप्सितम् ॥ ५ ॥
[2]पूर्णे वर्षसहस्रं त्वं शुचिर्यदि भविष्यसि ।
[3]पुत्रं त्वं शक्रहन्तारं मत्तो वै जनयिष्यसि ॥ ६ ॥
एवमुक्त्वा महातेजाः पाणिना[4]संममार्ज ताम् ।
[5]संस्पृश्य चोक्त्वा स्वस्तीति जगाम तपसे मुनिः ॥७॥
[6]गते तस्मिन् रघुश्रेष्ठ दितिः परमहर्षिता ।
[7]उदक्प्रस्रवणे देशे तप आतिष्ठदुत्तमम् ॥ ८ ॥
[8]चरन्त्यास्तु तपस्तस्याः परां सन्नतिमास्थितः ।
परिचर्यां स्वयं शक्र[9]श्चकारात्यन्ततत्परः ॥ ९ ॥

1 जनयिष्यसि पुत्र त्व शक्रहतारमाहवे ॥ G. 5 जनयिष्यसि पुत्रत्व etc. 2 For this Sl B 6 पूर्णे वर्षसहस्रेतु शुचिर्यदि भविष्यसि । पुत्र त्रैलोक्यहंतारं मत्तस्त्व जनयिष्यसि ॥ 3 This line is wanting in G, but P has it 4 G 6 स ममार्ज etc but P has ससमार्ज etc 5 B 7 (a)तामालभ्य ततः स्वस्ति इत्युक्त्वा तपसे ययौ ॥ (a) V समालभ्य स्वभवन जगाम स महान ऋषि· ॥ 6· For this Sl B 8 गते तस्मिनरश्रेष्ठ दिति· परमहर्षिता । कुशप्लव समासाद्य तपस्तेपे सुदारुण ॥ 7 G 8 उदकप्रवणे etc, but P has उदक् प्रस्रवणे etc, 8 For this Sl B 9 तपस्तस्या हि(a)कुर्वत्या परिचर्यां चकार ह । सहस्राक्षो नरश्रेष्ठ परयागुणसम्पदा ॥ (a) V & S कुर्वन्त्या etc 9 G 9· श्चकारो

[1]समित् कुशं [2]मूलफलं पुष्पमग्निं तथा जलम् ।
प्रयत्नवानाजहार तस्याः काले पुरन्दरः ॥ १० ॥
[3]गात्रसंवाहनं कुर्वन् श्रमापनयनं तथा ।
शक्रः सर्वेषु [4]कालेषु दितिं परिचचार ह ॥ ११ ॥
[5]गते वर्षसहस्रे तु दशोने रघुनन्दन ।
दितिः प्रीता सहस्राक्षमिदं वचनमब्रवीत् ॥ १२ ॥
[6]प्रीता तेऽहं[7]सहस्राक्ष दशवर्षाणि पुत्रक ।
अवशेषाणि भद्रन्ते द्रष्टासि भ्रातरन्ततः ॥ १३ ॥
[8]तमहं त्वत्कृते[9]पुत्र समाधास्ये [10]यथा तथा ।
सौभ्रात्रेणैव सहितस्त्वं हि राज्यमवाप्स्यसि ॥ १४ ॥
[11]एवमुक्त्वा ततः शक्रं विश्वस्ता शक्रसन्निधौ ।

---

त्यत्यतत्पर॰ 1 For this Sl B 10 अग्नि कुशा काष्ठमप॰ (a)फलमूलं तथैव च । न्यवेदयत्सहस्राक्षो यच्चान्यदपि कोचित ॥(a)V फलमून etc 2 P फलंमूल etc 3 For this Sl B 11 गात्रसवाहनैश्चैव श्रमापनयनैस्तथा । शक्र etc 4 P कार्येषु etc 5 For this Sl B 12 पूर्णे वर्षसहस्रे(a)सा दशोने रघुनन्दन । दिति॰ परमसहृष्टा सहस्राक्षमथाब्रवीत् ॥ (a) तु etc 6 For this Sl B 13 तपश्चरत्या वर्षाणि दश वीर्यवतावर । अवशिष्टानि भद्र ते भ्रातर द्रक्ष्यसे तत ॥ 7 G 12 महावीर्य etc but P has सहस्राक्ष etc 8 For this Sl B 14 (a)यमह त्वत्कृते पुत्र तमाधास्ये जयोत्सुक । त्रैलोक्यविजय पुत्र सह भोक्ष्यसि विज्वर ॥ (a) V तमह त्वत्कृते पुत्र etc 9 P पुत्र etc 10 G 13 जयोत्सुक , but P has यथा तथा Before the following Sl of our text B (15) reads याचितेन सुरश्रेष्ठ पित्रा तव महात्मना । वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ॥ 11 For this Sl B 16 (a)इत्युक्त्वा च दितिस्तत्र प्राप्ते मध्य दिनेश्वरे । निद्रयापहृता देवी पादौ कृत्वाथ शीर्षत ॥ (a) V एवमुक्त्वादिति॰ etc.

[1]कृतपादा शिरःस्थाने दितिः सुष्वाप राघव ॥ १५ ॥
[2]दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजाम् ।
कृतपादां शिरः स्थाने[3]मुमोद च जहास च ॥ १६ ॥
[4]तस्याः शरीरं विवृत्तं प्रविश्य बलसूदनः ।
बिभेद सप्तधा गर्भं वज्रेण शतपर्वणा ॥ १७ ॥
[5]एकैकं चैव[6]गर्भाङ्गं पुनश्चिच्छेद सप्तधा ।
विस्फुरन्तं बलाद् राम रुदन्त[7]श्चार्त्तया गिरा ॥ १८ ॥
[8]भिद्यमानस्तदा गर्भः कुक्षौ वज्रेण वज्रिणा ।
रुरोद सुस्वरं राम ततो दितिरबुध्यत ॥ १९ ॥
[9]मा[10]रोदीरिति तं शक्रः प्ररुदन्तमभाषत ।
बिभेद चैनं वज्रेण रुदन्तमपि वासवः ॥ २० ॥
[11]नहन्तव्यो नहन्तव्य इति तं दितिरब्रवीत् ।
निर्ययौ च ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥

---

1. Before this line of this Sl G (15) reads the additional line: निद्रयापहृता देवी मध्य प्राप्ते दिवाकरे, which however is wanting in P 2 For this Sl B 17 दृष्ट्वा तामशुचि शक्र पादयो कृत मूर्द्धजा । शिर. स्थाने कृतौ पादौ जहास च मुमोद च ॥ 3 P मुमुदे etc 4 For this Sl B 18 तस्या शरीरविवर प्रविवेश पुरदर. । गर्भ च सप्तधा राम चिच्छेद परमात्मवान् ॥ 5 This Sl is wanting in B 6 G. 18 गर्भांशं etc 7. P. श्चार्तभाषया । 8 For this Sl B 19 भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा । etc 9 For this Sl B 20 मारुदो मारुदश्चेति गर्भं शक्रों ऽभ्यभाषत । बिभेद च महातेजा रुदत.ऽपि वासव. ॥ 10 G. 20 रोधी etc but P has रोदी etc 11 For this Sl B 21 (a)नहतव्य नहतव्यमित्येव दितिरब्रवीत् । निष्पपात ततः शक्रो मातुर्वचनगौरवात् ॥ (a) V. has नहतव्यो नहंतव्य इत्येव

[1]प्राञ्जलिश्चाब्रवीदेनां विनिःसृत्याग्रतः स्थितः ।
अशुचिर्देवि सुप्तासि [2]पादयोः कृतमूर्धजा ॥ २२ ॥
लब्ध्वा तदन्तरञ्चाहं मद्विनाशार्थमाहितम् ।
गर्भं ते हतवान् देवि तन्मे त्वं क्षन्तुमर्हसि ॥ २३ ॥

आदि काण्डे दितिगर्भभेदः ॥

---

XLVIII

[3]एकोनपञ्चाशत्तथा भिन्ने गर्भे ततो दितिः ।
सहस्राक्षं दुराधर्षमुवाच भृशदुःखिता ॥ १ ॥
[4]ममापराधाद् गर्भोऽयं बहुधा विदलीकृतः ।
नापराधोऽस्ति देवेश तवात्रात्महितैषिणः ॥ २ ॥
[5]एवं गते[6]ऽपि दुर्वाचः प्रियं मे कर्त्तुमर्हसि ।
इमे ते सप्तकाः सप्त मरुतो नाम विश्रुताः ॥ ३ ॥
[7]चरन्त्वाज्ञाकराः [8]शक्र वातस्कन्धेषु सप्तसु ।

---

etc 1. For this, and the following Sl B 22 and 23 प्राञ्जलिर्वज्र सहितो दिति शक्रोऽभ्यभाषत । अशुचिर्देवि सुप्तासि पादयो कृतमूर्धजा ॥ तदतरमह लब्ध्वा शक्रहतारमाहवे । (a)अभिद सप्तधा देवि तन्मे त्व क्षतुमर्हसि ॥ (a) S has अच्छिद etc 2 P पादतः etc 3 G 1 एकोनपञ्चाशच्छा तु भिन्ने etc. For this Sl B XLVII 1 सप्तधा तु कृते गर्भे दिति परमदु.खिता । सहस्राक्ष दुराधर्षं वाक्यं सानुनयाब्रवीत् ॥ 4 For this Sl B 2 ममापराधाद गर्भोऽय सप्तधा शकलीकृत । नापराधो हि देवेश तवात्र बलसूदन ॥ 5 For this Sl B 3 प्रिय त्वत्कृतमिच्छामि मम गर्भविपर्यये । मरुता सप्तसप्ताना स्थान-पाला भवन्तु ते ॥ 6 G 3 ऽपिशक्रत्वप्रिय etc, P पुत्र वत्स. प्रिय etc 7 For this Sl B 4 वातस्कधा इमे सप्त चरतु दिवि पुत्रक । मारुता इति विख्याता दिव्यरूपा ममात्मजा ॥ 8. G 4 सप्त etc

सहैभिर्मम पुत्रैस्त्वं मरुद्भिर्जहि शात्रवान् ॥ ४ ॥
[1]ब्रह्मलोके चरन्त्वेक इन्द्रलोके तथापरे ।
दिक्षु चैतासु सर्वासु विचरन्तु तवाज्ञया ॥ ५ ॥
दिव्यमूर्त्तिधरा भूत्वा मरुतोऽमृतभोजनाः ।
तवैवाज्ञाकराः शक्र कुरुष्वैतद्वचो मम ॥ ६ ॥
[2]तस्यास्तद्वचनं श्रुत्वा शक्रः शक्तिमतांवरः ।
उवाच प्राञ्जलिर्वाक्यमेवमस्त्विति राघव ॥ ७ ॥
त्वत्कृतेनैवनाम्ना ते भविष्यन्ति तवात्मजाः ।
ख्याता मरुत इत्येवं दिव्यरूपा ममाज्ञया ॥ ८ ॥
[3]सर्वमेतद्यथाऽऽत्थ त्वं करिष्येऽहमशेषतः ।
अमृतप्राशिनः पुत्रा इमे ते सहिता मया ॥ ९ ॥
विचरिष्यन्ति लोकांस्त्रीन् निर्भया विगतज्वराः ।
निर्वृता भव भद्रन्ते[4] भविष्यति न संशयः ॥ १० ॥

---

1 For this and the following Sl. B. 5 7 ब्रह्मलोक चरत्वेक इन्द्रलोक तथा परः । दिव्यवायुरितिख्यात स्तृतीयोऽपि महायशा ॥ चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात । सचरिष्यति भद्रते कालेन हि ममात्मजा ॥ त्वत्कृतेनैव नाम्ना वै मारुता इति विश्रुता । 2 For this Sl B 7 8 तस्यास्तद्वचन श्रुत्वा सहस्राक्ष पुरदर ॥ उवाच प्राञ्जलिर्वाक्यमितीदबलसूदन । a V वाक्य दिति च etc 3 For this, and the following thiee Slokas, B 8-10 सर्वमेतद्यथोक्त ते भविष्यति न सशय ॥ विचरिष्यति भद्र ते देवरूपास्तवात्मजा । एव तौ निश्चय कृत्वा माता पुत्रौ तपोवने ॥ जग्मतुस्त्रिदिव राम कृतार्थाविति नः श्रुत । The first line of Sl 8 of our text is wanting in P, the 2nd line with सर्वमेतद्यथात्थ त्व भविष्यति न संशय. forms a Sl after Sl 10 of our text G also reads the line सर्वमेतद् etc after Sl 10 4 G 10 करिष्ये वचनं तव

एवं तौ निश्चयं कृत्वा मातापुत्रौ परस्परम्
जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् ॥ ११ ॥
एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ।
दितिं यत्र तपः सिद्धामेवं परिचचार सः ॥ १२ ॥
[1]इक्ष्वाकोरत्र राजर्षेः पुत्रः परमधार्मिकः ।
अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः ॥ १३ ॥
[2]विशालस्य सुतो राम हेमचन्द्रोऽभवन्नृपः ।
सुचन्द्र इति विख्यातो हैमचन्द्रिर्महायशाः ॥ १४ ॥
धूम्राश्वतनयश्चापि सृञ्जयः [3]समजायत ॥ १५ ॥
[4]सृञ्जयस्य सुतस्त्वासीत् स्वर्णष्ठीवीतिश्रुतः ॥
स्वर्णष्ठीविसुतश्चापि[5]कृशाश्व इति विश्रुतः ॥ १६ ॥
[6]कृशाश्वस्य महातेजाः सोमदत्तः सुतोऽभवत् ।
सोमदत्तस्य काकुत्स्थ सुतोऽभूज्जनमेजयः ॥ १७ ॥
[7]तस्यपुत्रो[8]ऽथकाकुत्स्थ पात्येतां साम्प्रतं पुरीम् ।

---

1 B 1 इक्ष्वाकोस्तु नरव्याघ्र etc 2 For this Sl B 12–13 तेन चासीदिह स्थाने विशालेति पुरी कृता ॥ विशालस्य सुतो राम हेमचन्द्रो महाबलः । सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तर ॥ Between Slokas 13 & 14 of our text G (14) has तेनेय निर्मिता राम वैशाली नगरी शुभा ॥ which however is wanting in P 3 B 14 समपद्यत 4 For this Sl B 15 सृञ्जयस्य सुत. श्रीमान् सहदेव प्रतापवान । कुशाश्च· सहदेवस्य पुत्र परमधार्मिक ॥ 5 G 17 कुशाश्व etc, but P has कृशाश्व etc 6 G 18 कुशाश्वस्य etc but P has कृशाश्वस्य etc For this Sl B. 16 कुशाश्वस्य महातेजा सोमदत्त. प्रतापवान । सोमदत्तस्य (a) पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ (a) V पुत्रोऽभूत etc 7 For this Sl B 17 तस्य पुत्रो महातेजा सम्प्रत्येष पुरीमिमा । आवसत्यमरप्रख्य सुमतिर्नामदुर्जयः ॥ 8 P

धर्मात्मा नरशार्दूल प्रमतिर्नाम वीर्यवान् ॥ १८ ॥
[1]इक्ष्वाकवः सर्व[2] एते ख्याता वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तो महाबलाः ॥ १९ ॥
[3]इहाद्य रजनीं राम सुखं वत्स्यामहे वयम् ।
श्वःप्रभाते तु जनकं ध्रुवं द्रक्ष्याम राघव ॥ २० ॥
[4]प्रमतिस्तं ततः श्रुत्वा विश्वामित्रमुपागतम्
प्रत्युद्गम्य महात्मानं पूजयामास पार्थिवः ॥ २१ ॥
[5]पाद्यार्घासनदानेन सोपाध्यायगणस्तदा ।
प्राञ्जलिः कुशलं[6] चैव पृष्ट्वेदं वाक्यमब्रवीत् ॥ २२ ॥
[7]प्रीतोऽस्म्यनुगृहीतश्च[8] पश्य मे विषयं[9] मुनिः ।
संप्राप्तो दर्शनञ्चैव नास्ति धन्यतरो मम ॥ २३ ॥
[10]अद्य मे सफलं जन्म संवृत्तश्च मनोरथः ।
यत्त्वां कुशलिनं ब्रह्मन् पश्यामि समुपागतम् ॥ २४ ॥

॥ आदौ [11]विशालपुरीवर्णनम् ॥

---

नरव्याघ्र etc , 1 For this Sl B 18 इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपा । दीर्घायुषो महात्मानो वीर्यवन्त सुधार्म्मिका ॥ 2 G 20 सव etc 3 For this Sl B 19 इहाद्य रजनोमेका सुख स्वप्स्यामहे वय । श्व प्रभाते नरश्रेष्ठ जनक द्रष्टुमर्हसि ॥ 4 For this Sl B 20 सुमतिस्तु महातेजा विश्वामित्रमुपागत । श्रुत्वा नरवरश्रेष्ठ प्रत्यागच्छन्महायशा ॥ 5 For this Sl B 21 पूजा च परमा कृत्वा सोप ध्याय सबान्धव । प्राञ्जलि कुशल पृष्ट्वा विश्वामित्रमथाब्रवीत ॥ 6 G 23 चैन etc 7 For this Sl B 22 धन्योस्म्यनुगृहीतोस्मि यस्य मे विषय मुने । सम्प्राप्तो etc ॥ 8 G 24 यस्य etc 9 G 24 मुने, but P has मुनि 10 This Sl is wanting in B 11. G has प्रमति समागमोनाम etc

XLIX

[1]पृष्ट्वा तु कुशलं प्रश्नं परस्परमशेषतः ।
कथान्ते प्रमतिस्तत्र विश्वामित्रमभाषत ॥ १ ॥
[2]इमौ कुमारौ भगवन् कुतः कस्य च शंस मे ।
[3]किमर्थञ्च त्वया सार्द्धं [4]रमेते देवरूपिणौ ॥ २ ॥
[5]सिंहर्षभगती वीरौ शार्दूलवृषभाविव ।
पद्मपत्रविशालाक्षौ वरायुधधरावुभौ ॥ ३ ॥
[6]अश्विनाविवरूपेण समुपस्थितयौवनौ ।
यदृच्छया क्षितीं प्राप्तौ देवलोकादिवा[7]गतौ ॥ ४ ॥
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ।
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्वरम् ॥ ५ ॥
[8]परस्परस्य सदृशौ प्रमाणस्थिति चेष्टितैः ।
वराम्वरधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥
[9]तस्यैतद्वचनं श्रुत्वा यथावृत्तं न्यवेयत् ।

1 For this Sl B XLVIII 1 पृष्ट्वा तु कुशलं तत्र परस्परसमागमे कथान्ते सुमतिर्वाक्य व्याजहार महामुनि ॥ 2 For this line B 2 इमौ कुमारौ भद्रन्तै देवतुल्यपराक्रमौ । 3 This line is wanting in B 4 G 2 समेते etc., but P has रमेते etc 5 For this Sl B 2-3 गजसिंहगती वीरौ शार्दूल वृषभोपमौ ॥ पद्मपत्रविशालाक्षौ खड्ग(a)तूणधनुर्धरौ । (a) V and S तूणी etc 6. For this Sl B 3 4 अश्विनाविव etc ॥ यदृच्छयेव गा प्राप्तौ देवलोकादिवामरौ । 7 G 4 मरौ, but P has गतौ 8 For this Sl B 5 6 परस्परेण सदृशौ प्रमाणेङ्गितचेष्टितै ॥ किमर्थं च नरश्रेष्ठौ सम्प्राप्तौ दुर्गमे पथि । वरायुधरौ वीरौ (a) श्रोतुमिच्छामि तत्त्वत ॥ (a) V कस्यपुत्रौ महामुने ॥ 9 For this and the following Sl B 7 and 8. तस्य तद्वचन श्रुत्वा यथावृत्तं न्यवेदयत् । विश्वामित्रवच श्रुत्वा राजा परमविस्मित ॥ अतिथी (a) परम प्राप्तौ पुत्रौ दशरथ

सिद्धाश्रमकथाञ्चैव राक्षसानां वधञ्च सः ॥ ७ ॥
विश्वामित्रवचः श्रुत्वा प्रमति भृशविस्मितः ।
अतिथी पूजयामास पुत्रौ दशरथस्य तौ ॥ ८ ॥
ततः परमसत्कारं [1]प्रमतेः प्राप्य राघवौ ।
[2]उषित्वा च निशां तत्र जग्मतु र्मिथिलां प्रति ॥९॥
[3]तां दृष्ट्वा[4]दूरतः सर्वे जनकस्य पुरीं शुभाम् ।
[5]मुनयो हृष्टमनसः शशंसुः साधु साध्विति ॥ १०॥
[6]मिथिलोपवने तस्मिन्नाश्रमं प्रेक्ष्य राघवः ।
पप्रच्छ मुनिशार्दूलं किमिदं निर्जनं वनम् ॥ ११ ॥
[7]श्रीमानविरलच्छायो मुनिसंघविवर्जितः ।
श्रोतुमिच्छामि भगवन् कस्यासीदयमाश्रमः ॥ १२ ॥
[8]इतितस्य वचः श्रुत्वा विश्वामित्रो ऽभ्यभाषत ।
रामं कमलपत्राक्षमाभाष्य मधुरं [9]ततः ॥ १३ ॥
[10]हन्तते कथयिष्यामि शृणु यस्यायमाश्रमः ।

---

स्य तौ । पूजयामास विधिवत्सत्कारार्हौ महाबलौ ॥ (a) V परमौ etc 1 B 9 सुमते etc 2 B 9 उष्य तत्र निशामेका जग्मतुर्मिथिला तत॰ ॥ 3 V ते etc 4 B 10 मुनय॰ सर्वे etc 5 B 10 साधु साध्विति शसन्तो मिथिला समपूजयन् ॥ 6 For this Sl B 11 मिथिलोपवने तत्र आश्रम दृश्य राघवः । पुराण निर्जन रम्य पप्रच्छ मुनिपुङ्गव ॥ 7 For this Sl B 12 (a) इदमाश्रम-सङ्काश किन्चिद मुनिवर्ज्जित । श्रोतुमिच्छामि भगवन कस्याय पूर्व आश्रम (a) V श्रीमदाश्रम etc 8 For this Sl B 13 तच्छ्रुत्वा राघवेणोक्त वाक्य वाक्य-विशारद । प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ॥ Between the two lines of Sl 13 of our text, P reads the line विनयावनत वीर धर्मज्ञ सत्यवादिन ॥ 9 G 13 वच 10 For this Sl B 14 हत ते कथयिष्यामि

यथा शून्योऽभवच्चायं शप्तः कोपान्महात्मना ॥ १४ ॥
[1]गौतमस्याश्रमः [2]पुण्यः पूर्वमासीन्महात्मनः ।
नित्यं पुष्पफलोपेतैः पादपैरुपशोभितः ॥ १५ ॥
[3]सचेह तप आतिष्टदहल्यासहितो मुनिः ।
संवत्सरसहस्राणि बहूनि रघुनन्दन ॥ १६ ॥
[4]अहल्यया रघुश्रेष्ठ तरुणादित्यरूपया ।
[5]ततस्तां चकमे दृष्ट्वा काम्यरूपां पुरन्दरः ॥ १७ ॥
[6]तस्यान्तरं विदित्वाथ कामार्त्तस्त्रिदिवेश्वरः ।
मुनिवेशधरो भूत्वा सोऽहल्यामिदमब्रवीत् ॥ १८ ॥
[7]ऋतुकालः प्रतीक्ष्योऽपि न प्रतीक्षे सुमध्यमे ।
सङ्गमं शीघ्रमिच्छामि पृथुश्रोणि सहत्वया ॥ १९ ॥
[8]मुनिवेशधरं शक्रं सा ज्ञात्वापि परंतप।
[9]मतिञ्चकार दुर्मेधा देवराजकुतूहलात् ॥ २० ॥

शृणु तत्त्वेन राघव । यस्यैतदाश्रमपदं शप्तं कोपा(a)न्महात्मन ॥ (a) V न्महामुने·
1 For this Sl B 15 गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मन । आश्रमो दिव्यसकाश सुरैरपि सुपूजित ॥ 2 G 15 पुण्यो ह्ययमासी etc
3 For this Sl B 16 स चात्र तप आतिष्ठदहल्यासहित पुरा। वर्षपूगान्यनेकानि राजपुत्र महा (a) यश· ॥ (a) S यशा 4 This Sl is wanting in both B and G, but P has it 5 For this line P has ततस्ता सुन्दरी दृष्ट्वा कामरूपा पुरन्दरः ॥ 6 For this Sl B 17 (a) तस्यान्तरं विदित्वा च सहस्राक्ष शचीपति । मुनिवेषधरो भूत्वा अहल्यामिदमब्रवीत ॥ (a) Before this Sl V and S read the line . कदाचिद्दिवसे राम ततो दूरङ्गते मुनौ । 7 For this Sl B 18 ऋतुकाल प्रतीक्षते नार्थिन सुसमाहिते । सगम त्वहमिच्छामि त्वयासह सुमध्यमे ॥ 8 For this Sl B 19 मुनिवेश सहस्राक्ष विज्ञाय रघुनन्दन । (a) मति etc (a) V रति etc 9 For this line P reads रति च कारयामास

[1]अब्रवीच्च सुरश्रेष्ठं कृतार्थं सा वचस्तदा ।
कृतार्थोऽसि सुरश्रेष्ठ गच्छ शीघ्रमलक्षितः ॥ २१ ॥
[2]तामिन्द्रः प्रहसन् वाक्यमहल्यामिदमब्रवीत् ।
सुश्रोणि परितुष्टोऽस्मि गमिष्यामि[3]यथागतम् ॥ २२ ॥
[4]एवमुक्त्वा ततोऽहल्यां निष्क्रामन्नुटजान्मुनिम् ।
ददर्श सहसायान्तं गौतमं दीप्ततेजसम् ॥ २३ ॥
[5]देवैरपि [6]सुदुर्धर्षं तपोवीर्यबलाश्रयात् ।
पुण्यतीर्थोदकक्लिन्नमाज्यक्लिन्नमिवानलम् ॥ २४ ॥
[7]समित्कलापं सकुशमादाय यान्तमाश्रमम् ।
दृष्ट्वैव च तदा शक्रो विषादमगमत् परम् ॥ २५ ॥
[8]सोऽपि दृष्ट्वैव देवेन्द्रं मुनिवेशधरं मुनिः ।
दुर्वृत्तं वृत्तसम्पन्नो रोषाद्वचनमब्रवीत् ॥ २६ ॥

देवराज कुतूहलात ॥ 1 For this Sl B 20-21 अथाब्रवीत्सुरश्रेष्ठ कृतार्थे नातरात्मना । कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमित प्रभो ॥ आत्मान माच देवेश सर्वथा रक्ष गौतमात् । Between this, and the following Sl of our text, G (21) reads the line आत्मान माच देवेश सर्वथा रक्ष मानद, which however is wanting in P 2 B 21 इन्द्रस्तु प्रहसन etc 3 B 22 यथागत 4 For this Sl B 22-23 एव संगम्य तु तदा निश्चक्रामोटजात्तत ॥ स सभ्रमात्त्वरन राम शङ्कितो गौतम प्रति ॥ गौतम (a) स ददर्शाथ प्रविशत महामुनि (a) V सददर्शाथ etc Between the two lines of this Sl of our text G (23) reads the line सम्भ्रमात त्वरितो राम शङ्कितो गौतम प्रति । 5 For this Sl B 24 देवदानवदुर्धर्षं तपोबलसमन्वित । तीर्थोदकपरिक्लिन्न दीप्यमान मिवानल ॥ 6 P दुराधर्ष etc 7 B 25 गृहीतसमिध तत्र सकुश मुनिपुगव । दृष्ट्वा सुरपतिस्त्रस्तो विषण्णवदनोऽभवत् ॥ The first line of this Sl of our text is wanting in G , for the second line G (25) has दृष्ट्वा च त तदा etc , but P has the Sl just as it is in our text 8 B 26 अथ दृष्ट्वा सहसाच

मम रूपं समास्थाय कृतवानसि दुर्मते ।
अकर्त्तव्यमिदं यस्मात्[1] तस्मात् त्वं विफलो भव ॥२७॥
गौतमेनैवमुक्तस्य [2]सरोषेण महात्मना ।
पेततुर्वृषणौ भूमौ सहस्राक्षस्य [3]राघव ॥ २८ ॥
[4]व्यथितः स तदा चासीद्धुतौजा विफलीकृतः ।
धर्षितस्तपसोग्रेण कश्मल[5]श्चैवमाविशत् ॥ २९ ॥
[6]तं शप्त्वैव मुनिवरो भार्यां तामपि शप्तवान् ।
[7]इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥ ३० ॥
तप्यमाना निरालम्बा सततं भस्मशायिनी ।
अदृश्या सर्वभूतानां वनेऽस्मिंस्त्वं निवत्स्यसि ॥३१॥
[8]यदात्विदं वनं घोरं रामो दशरथात्मजः
आगमिष्यति तं दृष्ट्वा धूतपापा भविष्यसि ॥ ३२ ॥
[9]तस्यातिथ्यं सुदुर्मेधे कृत्वा लोभविवर्जिता ।
मत्समीपं मुदोपेता समुपैष्यस्यसंशयम् ॥ ३३ ॥

---

मुनिवेष etc 1 B 27 विफलस्त्व भविष्यसि· 2 B 28 सुरोषेण etc but V· and S have सरोषेण etc 3 B 28 तत्क्षणात् 4 This Sl is wanting in B 5 G 29 श्चापि सोऽविशत । 6 For this, and the following Sl B 29 and 30 तथा शप्त्वा च वै शक्र भार्यामपि च शप्तवान् । इह वर्षसहस्राणि बहूनि निवसिष्यसि ॥ वातभक्षा निराहारा तप्यती भस्मशायिनी । अदृश्या सर्वभूतानामाश्रमेऽस्मिन वसिष्यसि ॥ 7 G 30 वर्षपूगानसङ्ख्येयास्त्व पापे दुष्टचारिणि । 8 For this Sl B 31 (a) यदात्वेतद्वन etc etc । आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ (a) S यदैतच्च वनं etc. 9 For this Sl B, 32, तस्यातिथ्येन दुर्वृत्ते

[1]एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
हिमवच्छिखरं गत्वा तपस्तेपे [2]सुदुश्चरम् ॥ ३५ ॥
॥ आदिकाण्डेशक्राहल्याशापवर्णनम् ॥

---

L

[3]विफलस्तु कृतः शक्रो देवानग्निपुरोगमान् ।
अब्रवीत्[4]त्रस्तवदनःसहसिद्धर्षिचारणान् ॥ १ ॥
[5]कुर्वता तपसो विघ्नं प्राप्तेयं विक्रिया मया ।
गौतमात् क्रोधमुत्पाद्य सुरकार्यं चिकीर्षुणा ॥ २ ॥
[6]अफलोऽहं कृतस्तेन क्रोधात् सा च निराकृता ।
शापमोक्षेण तेनास्य तपोविघ्नः कृतोमया ॥ ३ ॥
[7]तन्मां सुरगणाः सर्वे सर्षिसंघाः सचारणाः ।
सुरकार्यार्थमफलं सफलं कर्त्तुमर्हथ ॥ ४ ॥
[8]शतक्रतोर्वचः श्रुत्वा देवा अग्निपुरोगमाः ।

---

लोभमोहविवर्ज्जिता । मत्सकाश मुदा युक्ता स्ववपुर्धारयिष्यसि ॥ 1 For this Sl B 33 and 34 एव मुक्त्वा etc । इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥ हिमवच्छिखरे रम्ये तपस्तेपे महातपा॰ ॥ Between the two lines of this Sl of our text G (34) reads the line पुण्यदेश समासाद्य सिद्धचारणसेवित । 2 P सुदुष्करम 3 For this Sl B XLIX 1 अफलस्तु तत॰ शक्रो देवानग्निपुरोगमान । अब्रवीत् त्रस्तनयन. सिद्धगधर्वचारणान ॥ 4 G 1 त्रस्तमानसः etc but P has त्रस्त वदन etc 5 For this Sl B 2 कुर्वता तपसो विघ्न गौतमस्य महात्मन॰ । क्रोधमुत्पाद्य हि मया सुरकार्यमिद कृतं ॥ 6 For this Sl B 3 अफलोऽस्मि कृतस्तेन क्रोधात्साच निराकृता । शापमोक्षेण महता तपोऽस्यापहृत मया ॥ 7 For this Sl B 4 (a) तन्मा सुरवरा सर्वे etc । सुरकार्यकरं (b) यूय सफल etc ॥ (a) V तस्मात् etc (b) सर्वे etc 8 For this Sl B 5 शतक्रतोर्वच॰ श्रुत्वा

ऊचुः पितृगणान् वाक्यमिदं तत्र समागतान् ॥ ५ ॥
[1]एष मेषः सवृषणः शक्रश्चावृषणीकृतः ।
अस्येमौ वृषणौ छित्वा महेन्द्राय प्रयच्छत ॥ ६ ॥
[2]अफलस्तु कृतो मेषः परां तुष्टिमुपैष्यति ।
[3]भवताञ्चास्य मांसेन परा तृप्तिर्भविष्यति ॥ ७ ॥
तस्मान्मेषस्य वृषणौ[4]छित्वा तौ दातुमर्हथ ।
इन्द्राय सुरकार्यार्थं विफलाय पितामहाः ॥ ८ ॥
[5]श्रुत्वाथाग्निपुरोगाणां देवानां पितरो वचः ।
उत्कृत्य मेषवृषणाविन्द्रायोपददु[6]स्तदा ॥ ९ ॥
[7]ततः प्रभृति काकुत्स्थ पितरः कव्यभोजिनः ।
अफलं भुञ्जते मेषं सफलन्तु न भुञ्जते ॥ १० ॥
इन्द्रः[8]समेषवृषण[9]स्ततः प्रभृति राघव ।
गौतमस्य प्रभावेन[10]बभूवामितेजसः ॥ ११ ॥

---

देवा साग्निपुरोगमा । पितृदेवानुपेत्याहु सर्वे सहमरुदगणै ॥ P has शतक्रतुवच etc 1 For this Sl B 6 अय मेष. सवृषण' शक्रो ह्यवृषण कृत । मेषस्य वृषणौ गृह्य शक्रायाशु (a) प्रयच्छत ॥ (a) V प्रदोयता 2 For this, and the following Sl B 7 अफलस्तु कृतो मेष' परा तुष्टि प्रदास्यति । भवता हर्षणार्थं च ये च दास्यन्ति मानवा ॥ अक्षय हि फल तेषा यूय दास्यथ पुस्कल ॥ 3 For this line G 7 भवतामुपयोगेन (a) तच्चास्य सुमहत् फल । (a) P, तच्चस्य etc 4 G 8 छित्वेमौ etc , P छित्वेतौ etc 5 For this Sl, B 8 अग्नेस्तु वचन श्रुत्वा पितृदेवा समागता । उत्पाट्यमेषवृषणौ सहसाह्ने (a) न्यवेशयन् ॥ (a) V and S न्यवेद्रयन 6 P, स्तथा 7 For this Sl B. 9 तदा प्रभृति काकुत्स्थ पितृदेवाः समागताः । अफलान् भुजते मेषान् फलैस्तेषामयोजयन् ॥ 8 B 10 स्तुमेष etc , G 11 श्च मेष etc 9. B 10 स्तदा etc. 10

[1]तस्मात् प्रविश रामाशु गौतमस्याश्रमं विभो ।
तारयेमां महाभागामहल्यां शाप[2]वैकृताम् ॥ १२ ॥
[3]विश्वामित्रवचः श्रुत्वा रामःसौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य प्रविवेशाश्रम ततः ॥ १३ ॥
स ददर्श महाभागां तपसा द्योतितप्रभाम् ।
[4]सेन्द्रैरपि सुरैः साक्षादनालक्ष्यां समागतैः ॥ १४ ॥
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।
धूमेनाभिपरीताङ्गीं दीप्तामग्निशिखामिव ॥ १५ ॥
[5]तुषारेणावृतां[6]सान्द्रां पूर्णचन्द्रप्रभामिव ।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १६ ॥
साहि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
त्रयाणामपि लोकानां यावद् रामस्य दर्शनम् ॥ १७ ॥
[7]दृष्ट्वैव राघवौ तस्याः पादौ जगृहतुस्तदा ।
सा च तौ पूजयामास स्मृत्वा गौतमभाषितम् ॥ १८ ॥

---

B 10 तपसा च महात्मन । 1 For this Sl B• 11 तदा गच्छ महातेज आश्रम पुण्यकर्मण॰ । तारयैना महाभागामहल्या देवरूपिणी ॥ 2 G 12 वितता, but P has वैकृता 3 For this Sl B 12 विश्वामित्रवच श्रुत्वा राघव सहलक्ष्मण । विश्वामित्र पुरस्कृत्य आश्रम प्रविवेश ह ॥ 4 For this line, B 13 लोकैरपि समागम्य दुर्निराक्ष्या सुरासुरै॰ ॥ 5 B 15 स तुषारावृता साभ्रा etc 6 G 16 साभ्रा etc but P has सान्द्रा etc 7 For this Sl B 17 and 18 शापस्यान्तमुपागम्य तेषा दर्शनमागता ॥ राघवौ तु तदा तस्या. पादौ जगृहतुर्मुदा । स्मरती गौतमवच. प्रतिजग्राह साहि

[1]पाद्यार्घ्यासनसत्कारैर्यथावत् प्रीतमानसा ।
प्रतिजजग्राह रामश्च पूजां तां विधवत् तदा ॥ १९॥
[2]सस्वनुर्देववाद्यानि पुष्पवृष्टिः पपात खात् ।
गन्धर्वाप्सरसाश्चैव महानासीत् समागमः ॥ २० ॥
[6]साधुसाध्विति देवाश्च तदाहल्यामपूजयन् ।
[3]विशुद्धां तपसोग्रेण तदा रामसमागमे ॥ २१ ॥
[4]गौतमश्च महातेजा दृष्ट्वा दिव्येन चक्षुषा ।
स्वमाश्रमपदं राममागतं प्रत्यपूजयत् ॥ २२ ॥
समेत्य भार्यया चैव पूतयाहल्यया तदा ।
तयैव सहितो भूयस्तपस्तेपे महायशाः ॥ २३ ॥
[6]रामोऽपि परमां पूजां गौतमादृषिसत्तमात् ।
अवाप्य विधिवत् तस्माज्जगाम मिथिलां प्रति ॥ २४ ॥

॥ आदौ रामायणेऽहल्यादर्शनम् ॥

---

तो ॥ 1 For this Sl B 19 पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता । प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्म्मणा ॥ 2 For this Sl B 20 पुष्पवृष्टिर्महत्यासीद्देवदुदभिनि स्वनै । गधर्वाप्सरसा चैव महानासीत्समुत्सव. ॥ 3 For this Sl B 21 साधु साध्विति देवास्तामहल्या समपूजयन । तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगा ॥ 4 For this line P has तपोबलविशुद्धा च गौतमस्यवशानुगा ॥ 5 For this, and the following Sl B 22 गौतमोऽपि महातेजा अहल्यासहित. सुखी । राम सपूज्यविधिवत्तपस्तेपे महातपा· ॥ G 22 गौतमोऽथ etc, P is illegible here 6 For this Sl B 23 रामोऽपि परमा पूजा गौतमस्य महामुनेः । सकाशाद विधिवत प्राप्य जगाम मिथिला तत· ॥

"tion of something else' If *non-existence* also were cognised "independently by itself, then it would in no way be different "from *existence*, hence there can be no indeterminate cognition "of *non-existence* Then it has been argued that,—' in the case "cited above, was the cognition one of the house along with "Dēvadatta, or that of the house apart from Dēvadatta? "If the former, then the subsequent recalling could not be of "the house alone, and if the latter, then the non-existence (of "Dēvadatta) also will have been already perceived, and as "such would only be remembered at the subsequent occasion' "But there is not much in this argument, because even though "there be no cognition of the existence or non-existence of "Devadatta (in the house, the house by itself could very "well be cognised, hence there could be no cognition of the "non existence on the previous occasion, and in the absence "of the previous cognition, the subsequent one could not be a "case of *remembrance* Nor is there any other means of know-"ledge available at the time Consequently even though the "counter-entity be not in close proximity, when this would be "recalled by memory, there would be a cognition of *non-*'*existence*, and the means of this cognition could only be in "the form of the *absence of sense perception and the other four* "*means of knowledge* The cognisability of non-existence by "negation having thus been proved in one case, the same "reasoning might be applied to all other cases (of the cognition "of *non-existence*), and thus it must be admitted that Negation "is a distinct means of knowledge"

**[Page 227]** To the above we make the following reply When the man has gone away from the house to some other place and is questioned as to the existence therein of Devadatta, does he cognise the non-existence of Devadatta at the time of the question, by means of his non-perception at the same time? Or does he cognise his non-existence at the previous time—in the form 'he did not exist in the house at the time that I saw the house,

—by means of his non-perception there at that time? As for the 'non-perception at the present time' (of the questioning), this would not be the 'non-perception of the perceptible' (which is regarded as the means of cognising non-existence), because of the house being hidden from view by the intervening space And as for the non-existence of Devadatta in the house at the time of the question, it would be doubtful, as he might have come into it in the mean time, and as for the previous 'non-perception,'—which alone could indicate his non-existence on the previous occasion, it could not continue up to the time of the question, as the conditions will have changed in the meantime And when that 'non-perception' is not present at the time of the questioning, it could not bring about any cognition (of present non-existence), nor could it operate through being recalled to memory, as it has never before been cognised That is to say, 'non-perception' is not cognisable by any other means of knowledge, being, as it is, of the nature of 'non-existence' or 'negation', and if it were to depend upon another 'non-perception,' (for its cognition), then there would be an endless series of 'non-perceptions,' and it is for this reason that it is maintained that like the sense-organs, 'nonperception' also brings about the cognition of its objective without being itself cognised And such being the case, as it would never be *cognised,* how could there be any *remembrance* of it (as all *remembrance is* based upon a previous *cognition*)?

*Objection* "The non-perception of Devadatta in the house is set aside only by his perception, but the man who has gone away from the house does not have a perception of him (in the house), and hence the previous non-perception would remain. It is true that the conditions of the observer will have changed (since he visited the house), but no change of conditions can alter the nature of things"

*Reply* This may be so in the case in question, but in a case where the non-existence of a thing has not been appre-

hended, on account of there being no remembrance of its counter-entity,—and later on that thing is met with in the place,—then there arises the idea that 'this thing did not exist here before,' with regard to its *previous* non-existence, what explanation will you have of this? As in this case the previous non-perception' will have been set aside by the later 'perception' Nor will the mere fact of its previous existence enable the 'non-perception,' even though non-existent at the subsequent time, to bring about any cognitions, as if this could be possible, then sensuous cognition also would be possible for one whose sense-organs have been destroyed

*Objection* "The presumption to-day does certainly set aside the non-perception of the same day as for the previous non-perception, that remains, and this would be capable of pointing to the *previous non-existence,* which would be duly cognised by its means"

*Reply* What a wonderful learning and philosophic insight you display! 'Non-perception' is the *previous negation of perception*, and this is one only, extending up to the time of the *appearance of the thing* (when the non-perception ceases), and it does not become different with the difference in time, being the same to-day that it was yesterday, and then, who would be the clever person who could assert that the *previous* non-perception has been set aside, and that of to-day still remains,—an assertion that indicates an extreme nicety of discriminative faculty!

For these reasons then, we cannot understand how non-existence can be rendered cognisable by negation, and we conclude that on the previous occasion (in the house) the observers apprehended the mere form of *non-existence,* and then on the subsequent occasion, having gone to the other place, he has the cognition of that same non-existence, following upon the remembrance of its counter-entity (Devadatta), and this would be a case of purely *inferential* cognition,—the process of inference involved

being this when a thing is such as is capable of being remembered at the remembrance of another thing, if the former is not remembered even though the desire to remember it is present (and the remembrance of the latter thing is also present), then it must follow that it did not exist at the time of the perception of the other thing, as for instance, when the *mere* place is remembered, there is remembrance of the jar whose non-existence had been previously cognised, and in the case in question even though the temple is remembered, we do not remember Devadatta, even though he is quite capable of being remembered, and the desire to remember him is also present, and from this it follows that he did not exist at the time that the temple was perceived, and this is a case of *inference* based upon non-remembrance

[**Page 228**] *Objection* —Of two things perceived together, it so happens that, on account of the impressions of one being stronger than those of the other, while one is remembered, the other is not, for instance, when a *Çloka* is learnt, it so happens that when recalling the *Çloka* to the mind, while we distinctly remember one line of it, the other line is not remembered at all, and in this case, one line being remembered, how could there be any inference of non-existence from the fact of the non-remembrance of the other line? Any such inference under the circumstances would not be conclusive"

*Reply* Even when two things may exist together, it may be that, owing to the nature of the causes (leading to perception), while one of them is perceived, there is no perception of the other How then could the mere *perception* of the ground prove the *non-existence* of the jar (as it may be that while the causes for the perception of the former are fully operative, those for the perception of the latter may not be equally efficient, even though it may be existing all the same)?

*Objection* "When two things are related to one and the same cognition (*e g* the *ground* and the *jar*), then, if in any case only one of these happens to be perceived, the non-perception of

the other and not all non-preception—proves that this latter does not exist, *e g* the cognition that apprehends the ground, apprehends also the jar in contact with it, the accessories for the perception of the jar are the same as those for the perception of the ground, hence if the jar existed on the ground, then it would certainly be perceived when the ground is perceived, as the conditions for the perception of both are exactly the same, as a matter of fact however, in the case in question, the jar is not perceived, and hence it follows that it does not exist there as its non-perception could not be otherwise possible"

*Reply*: If it be so, for us then also, of two things related to the same cognition, if one is remembered and the other is not, then this non-remembrance would prove the non-existence of this latter, in the case in question, the conditions of the perception of the house are the same as those for the perception of Devadatta who is its correlative, and similarly the conditions of the remembrance of the house are the same as those of the remembrance of Devadatta, hence in as much as the house and Devadatta would both be related to the same cognition, if Devadatta had existed in the house at the time that the house was perceived, he would certainly have been remembered when the house was remembered, because of the conditions of the remembrance of both being the same, as a matter of fact however we find that he is not remembered, and hence we conclude that he did not exist in the house at the time, as his said non-remembrance, could not be otherwise explained And this process of reasoning would be exactly similar to your own

As for the *Çloka,* for the sake of proper pronunciation its words are read one after the other, and as such they are not connected with one and the same cognition, and those words whose impression may be stronger than that of others would be remembered, while the rest would not, and there would be nothing incongruous in this

Thus then, even when an object is perceived at the present time, the cognition of its *previous* non-existence—in the form

that 'it did not exist before,'—is purely *inferential*, being based upon the non-remembrance of its existence at the time when the previous existence of its counter-entity is remembered

Some people hold that the *absence of remembrance* also is only a form of 'Negation' as a means of knowledge But this view would be opposed to such declarations of the *Bhāshya* as—'Negation is only the absence of the other means of knowledge' and also to the *Vārtika* which declares that 'Negation is that where the five means of knowledge are not operative' So here we drop this subject

Others again maintain that, "in as much as there is no knowable thing of a negative character, it is not right to enter into any discussion as to the means of knowing it"

[**Page 229**] To these people should be put the question—What is the substratum of the notion 'this is not'? If it has no substratum, then a great lending hand is given to the *Mahāyānikas* (Bauddhas) who hold all notions to be without substratum If then, the ground be regarded as the necessary substratum,(of the notion 'this is not') then even when the ground would be studded with thorns, we would have the notion that 'the thorn is not,' and this would lead to our fearless passing and repassing over the ground, as there would be nothing to restrain us from doing so

*Objection* It is with regard to the *bare* ground that we have the notion 'it is not', and as the presence of the thorns would set aside the *bareness* of the ground, there could be no such notion as 'the thorn is not', nor could there be any activity in accordance with this notion"

*Reply* Does *bareness* constitute the very form of the ground or is it a distinct quality of it? If the former, then it could not be set aside even when the thorn would be cognised, and hence the absurdity of the said notion and activity would remain as before If it be regarded as a distinct quality, then

that would be admitting a distinct objective (as we regard *negation* to be)

*Objection* "It is *existence* (i e an existing thing the ground f i) itself that has the two states of *being alone*, and of being *with a second*, and it is in the former state that it is known as 'itself' or 'bare', and when there is a desire to apprehend the jar &c, that are the counter-entities of the 'bare' ground, then the cognition of this *bare* ground brings about the notions and activities pertaining to the *non-existence* of these, *jar* and other things"

*Reply* What denotation of the word 'alone,' apart from the ground wherein the jar &c are non-existent, have you established which you seek to make the substratum of the negative notion 'it is not'? As a rule, unless there is a peculiarity in the object cognised, there can be no peculiarity in the cognition, nor till then can there be any change in the activity of the agent

*Objection* "What we mean by *alone* is the *singleness* that is natural to all things"

*Reply* What is this 'singleness'? Is it the *absence of* the *counter-entity*, or the *number* 'one'? As for the number 'one,' it will remain as long as its substratum exists, and as such would continue to exist even on the occasion of the object being accompanied by a second If the *natural* 'singleness' be regarded as the *absence of the counter-entity*,—then the existence of a distinct object of cognition becomes admitted

*Objection* "Even for one who accepts *negation* as a distinct cognisable thing,—it is the apprehension of the bare *ground* that becomes the cause of the cognition of negation, as until the ground has been apprehended, there can be no cognition of any negation or non-existence therein But the cognition that 'the thorn does not exist' cannot be due to the apprehension of the *ground as devoid of thorns*, as if the apprehension of the *ground qualified by non-existence* were the cause of the cogni-

tion of the 'non-existence,'—then it would come to this the apprehension of the non-existence (of thorns) would bring about the apprehension of the ground as qualified by that non-existence, and the apprehension of the ground as qualified by that non existence would lead to the apprehension of the non-existence, and thus this latter cognition would become its own cause For these reasons, it must be admitted even by you that of the ground there is a certain condition of 'being alone,' which is independent of all touch with the counter-entity, and which is distinct from 'negation' or 'non-existence', and that the apprehension of that condition brings about the cognition of *non existence*, and it is this that for us brings about the notion 'this does not exist'."

*Reply* This is not right, as it is the apprehension of the form of the ground itself that is the cause of the cognition of *non-existence* Nor would there be any chance of the cognition of this non existence even when the ground would be perceived along with something else, as like the apprehension of the ground, the direct contact of non-existence with the sense-organs also is a necessary condition of the cognition of non-existence, and when there would be any such thing as thorn and the like on the ground, then, in as much as there would not be non-existence, there would be no contact of the sense-organs with that non-existence, and hence even though the apprehension of the ground would be there, there would be no cognition of non-existence As for instance, even though such aids to vision as the eye and the proper amount of light are present, yet a thing that does not exist in the place is never cognised

Thus the fact of Non existence' being a distinct object of cognition has been established

---

**[Page 230]** This 'Non-existence' is of four kinds (1) *Prāgabhāva*, 'Previous non-existence,' (2) *Pradhvansābhāva*, Destruction, (3) *Itarētarābhāva*, 'mutual negation,' and (4) *Atyantābhāva* 'Absolute non-existence'

(1) As an instance of 'Previous non-existence,' we have the non-existence of the effect in the cause, prior to its being produced Prior to the appearance of the effect, there is its non-existence, and this Previous non-existence, even though without beginning, is yet transient, as it is destroyed by the appearance of the effect, as if it were not destroyed then the effect would not be produced

*Question* "What would be the *destruction* of Previous non-existence?"

*Answer* It would consist in the appearance of the effect.

*Obj* "In that case, when the object will have ceased to exist, there would be a likelihood of perceiving its 'Previous non-existence'"

*Reply* Not so, because like the object, its constituent particles also, when operating towards their effects, constitute the 'destruction' of the *Previous non-existence*

(2) 'Destruction, *Pradhvansābhāva*, consists in the *falling off of the object* from its real nature And even though this has a beginning, yet it is eternal, as the object (that has under-gone destruction) is never again perceived

*Question* "The 'beginning' of a thing consisting in its coming into existence from previous non-existence,—what would be the 'previous non-existence' of Destruction?"

*Answer* The 'previous non-existence' of Destruction would consist in the normal condition of the existence of the object of which it is the destruction And just as the appearance of an object is the disappearance of its 'previous non-existence,' so the appearance of Destruction would constitute the disappearance or cessation of its 'previous non-existence' It would not be right to urge the objection that, "that which is a non-entity, how could there be a 'non-existence' of that?"—as no objection can rightly be taken to what is in the nature of things

भुङ्क्ते । स्वाद्वर्थेषु वाक्षु स्वादुमि णमिति णम् भवति । स्वादुमिति निर्देशात्त्यसन्नियोगे मान्तता निपात्यते ॥ अमैवेति किम् । कालो भोक्तुम् । समयो भोक्तुम् । कालसमयवेलासु तुम्वेति तुम् । आरम्भादेव नियमः सिद्धः । झिनैवेति विपरीतावधारणे व्यावर्त्त्यं नास्तीत्येवकारः किमर्थः । अमैव यत् सह निर्दिष्टं वाक्संज्ञं तस्य वृत्तिर्यथा स्यात् । अमा चान्येन च यत् सहानिर्दिष्टं तस्य मा भूत् । अग्रे भोजं गच्छति । अग्रे भुक्त्वा । प्रथमम्भोजम् । पूर्वभोजम् । वाग्रेप्रथमपूर्वे इति त्त्वाणमौ विहितौ । झिनेति विस्पष्टार्थम् । व्यावर्त्त्याभावात् ॥

## वा भादि ॥ ८४ ॥

उपदंशो भायामित्यतः प्रभृति वाक्संज्ञं भादीत्युच्यते । वाक्संज्ञानि अमा सह वा समस्यन्ते षसो भवति । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । उपदंशो भायामिति णम् । पार्श्वोपपीडम् । पार्श्वेनोपपीडं पार्श्वं उपपीडं शेते । ईपि चोपपीडरुधकर्ष इति णम् । अमन्तेनेत्येव । पर्याप्तो भोक्तुम् । पर्याप्तिवचने अलमर्थ इति तुम् । एवकारो नानुवर्त्तते तेन भादिषु यदमा सह निर्दिष्टं वाक्संज्ञं यदमा चान्येन च सह निर्दिष्टं तदपि समस्यते । उच्चैःकारमाचष्टे उच्चैःकारं भ्राविति निष्ठोक्तौ कृञः त्त्वाणमाविति णम् ॥

## त्त्वा ॥ ८५ ॥

क्त्वान्तेन सह वा भादि समस्यते षसो भवति । उच्चैःकृत्याचष्टे । उच्चैः कृत्वा । भादीत्येव । प्रदेशान्तर-

वाचो वृत्तिर्न भवति । अलं कृत्वा । खलु कृत्वा । अग्रे भुक्त्वा ॥

## अन्यपदार्थेऽनेकं वम् ॥ ८६ ॥

वानिर्दिष्टं सुब्ग्रहणमनुवर्तते । भानिर्दिष्टं निवृत्तम् । अन्यस्य पदस्यार्थे वर्तमानमनेकं सुबन्तं वसंज्ञकः सो भवति । चित्रगुः । लम्बकर्णः । दर्शनीयरूपः । अन्यग्रहणं किम् । स्वपदार्थे वसो मा भूत् । लम्बश्च स कर्णश्च स लम्बकर्णः । पदग्रहणं किम् । अन्यवाक्यार्थे मा भूत् । अर्थग्रहणं किमर्थम् । यावता शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञास्यते । अन्यपदार्थस्य ये लिङ्गसंख्ये ते यथा स्यातामित्येवमर्थम् । बहुयवं कुलम् । बहुयवा भूमिः । बहुयवौ । बहुयवाः । वाविभक्त्यन्ते अन्यपदार्थे वृत्तिर्न भवत्यनभिधानात् । अनेकग्रहणं बहूनामपि प्रापणार्थम् । सामानाधिकरण्याभावेऽपि वसो भवति । कण्ठेकालः । उरसिलोमा । उच्चैर्मुखो देवदत्तः । अस्तिक्षीरा गौः । झीनामसंख्यत्वादसामानाधिकरण्यमिहाभिधानाभावान्न भवति। पञ्चभिर्भुक्तमस्य। सामानाधिकरण्येऽप्यनभिधानम्। पञ्च भुक्तवन्तोऽस्य । नपा निर्देशः किमर्थः । उन्मत्तगङ्गम् । लोहितगङ्गम् । खावन्यपदार्थे इति हस एव भवति । इह वीरपुरुषको ग्राम इति परत्वाद्धसः षसस्य बाधकः । शस्त्रीश्यामा देवदत्तेत्येवमादिषु यश्चैकाश्रय इति प्रकृतमस्ति तेन वसस्य बाधः । प्रादयो गताद्यर्थे वया इत्येवमादि वार्त्तिकवचनं प्रमाणम् । तेन निष्कौशाम्बिरित्येवमादिषु वसो न भवति । ईबुपमानपूर्वस्य चुखं वक्तव्यम् ।

उदरे स्थितो मणिरस्य उदरेमणिः । षे कृति बहुलमिति ईपोऽनुप् । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । उपमानावयवत्वादुष्ट्रोऽप्युपमानम् । इह केशचूडः सुवर्णालङ्कारो देवदत्तः इति केशसम्भारे केशशब्दः । सुवर्णविकारे सुवर्णशब्दो वर्तते । सङ्गतार्थः समर्थ इति निर्देशादेवं जातीयस्य वा युस्वं द्रष्टव्यम् । प्रपतितपर्णः । प्रपर्णः । अविद्यमानभार्यः । अभार्यः ।

## संख्येये संख्यया भ्यासन्नादूरसंख्यम् ॥ ८७ ॥

सङ्ख्येये या संख्या वर्तते तया भ्यि आसन्न अदूर इत्येतानि संख्या च वसो भवति । अनन्यार्थार्थं वान्तेऽप्यन्यपदार्थे प्रापणार्थञ्च । समीपे दशानामिमे उपदशाः । उपविंशाः । समीपप्राधान्ये तु हसः । आसन्ना दशानामिमे आसन्नदशाः । आसन्नविंशाः । अदूरदशाः । अदूरचत्वारिंशाः । द्वौ वा त्रयो वा इमे द्वित्राः । त्रयो वा चत्वारो वा इमे त्रिचतुराः । नक्तिसूपत्रिभ्यश्चतुर इति अस्त्यो निपात्यते । त्रिर्दश इमे त्रिदशाः । वृत्त्यैवाभ्यावृत्तेरुक्तत्वात् सुचोऽप्रयोगः । संख्यासंज्ञाविधानेऽधिकशब्दस्यापि संख्यात्वमुक्तम् । अधिका दशानामिमेऽधिकदशाः । संख्येय इति किम् । अधिका विंशतिर्गवाम् । संख्ययेति किम् । पञ्च पदार्थाः । भ्यासन्नादूरसंख्यमिति किम् । पार्थिवाः पञ्च ॥

## दिशो ऽन्तराले ॥ ८८ ॥

दिक्छब्दाः सुबन्ता अन्तरालवचने वसंज्ञकः सो भवति । अन्तराल एव यथा स्यादिति नियमार्थ आरम्भः ।

विवेकः-अयि भीरु अवधारितपरमार्थापि क्रिपवानमानसेवकि पुनरप्यतिशङ्कसे शृणुष्वचैतत् ।

विषमधुबहिष्कुर्वन्धीरोबहिर्विषयात्मकं
परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।
निरवधिमहानन्दब्रह्मानुभूतिकुतूहली
जगति भविता दैवात्कश्चिज्जिहासितसंसृतिः॥२५॥

निस्संशयः खलु पटुभिरपिविटपमारोहद्भिरप्राप्तानां पचेलिमानां फलानामयतमानस्यापिसुकृतपरिपाकेन पान्थजनस्यपुरतः परिपातः ।

अपि च ।

विवित्सति यदिस्वयं किमपि सूरिसेव्यं पदं
कृतस्ययदिनिष्कृतिर्यदिकरिष्यते नाहितं ।

---

क्रिपवान क्षुद्र मानस यस्या स्सा तथा एतदवक्ष्यमाण शृणु । कितदित्यत आह

विषेति-॥ बहिर्विषयाश्शब्दादय तदात्मक तत्स्वरूप विषमधु विषसदृष्टमधु अत्यल्पसुखंमनर्थावह चेति कृत्वा बहिष्कुर्वन् नसेवमान अनेन पशुपुत्रादिकमैहिकमामुष्मिक स्वर्गादिकं च त्याज्यमिति प्रत्यपादि परिमितरसस्य भगवदपेक्षया शेषत्वपारतन्त्र्याद्यनुभवमहानन्दरसविधुरस्य स्वात्मन प्राप्तौ प्रयासाद्यत्नात्पराङ्मुख. परावृत्त. निरवधि अवधिरहितः महानन्दो यस्या तस्या ब्रह्मानुभूतौ कुतूहली इच्छावान् जिहासितत्यक्तुमिष्टा संसृतिः संसारो येन स तथा कश्चित्पुरुष. दैवाज्जगति भविता ॥ २५ ॥

दैवादित्युक्तमेव सदृष्टान्तमाह निस्संशयइति । दृष्टान्तबलेनास्य सामर्थ्यं यत्नादिकमकिंचित्कर भगवत्कृपैव तत्प्राप्तिहेतुरिति व्यक्त विवित्सादिसंभवे मुक्तिस्स्यतीत्याह अपिचेति ।

विवित्सतीति-॥ किमप्यवाङ्मनसगोचर सूरिसेव्य नित्यमुक्तानुभाव्यं

यत्र पूर्वे साध्यास्सन्ति देवा ।
सदापश्यन्ति सूरय. ॥

इत्यादि श्रुते पद स्थान स्वय यदि विवित्सति लब्धुवाञ्छति कृतस्य पापस्येति शेष निष्कृति प्रायश्चित्त यदि क्रियते यदि अहित प्रातिकूल्य करिष्यते नयदि निसर्ग

निसर्गसुहृदीश्वरो यदिहलक्ष्यमन्वीक्षते
किमत्रपरमुच्यते किमितिनात्मविन्मुच्यते॥ २६ ॥

सुमति·—

* णाह जंएव्व तुए दिएणहत्थो ससारमाअर अइलङ्घइपुरुसोमे ताकहदवदहणपज्जलिअपस्सजुअलदारूअरगअव्वकीडो सारमेअगण परिगओव्व सारगोसमीरणदोलणडोलाअन्तपोओदरगओव्वमजत्तिअसत्थो महप्पवाहमज्झणिरोहसभतणअणोव्व जबुओ विसहरपरिग्गहिअ घरघुर तहिअओव्व कुडुम्बिअणो वियडअरभङ्गसभमसखुहिअगगाअडवेपतस हणणोव्वसाहिमण्डलो राहवसरणिअरखोहिअरअणाअरमज्झ ठओव्वम च्चसघाओ सध्वसगहिओ होइ ।

---

* नाथ यद्येवत्वयादत्तहस्तस्ससारसागरमतिलघतेपुरुष तत्कथ दवदहन प्रज्व लितपार्श्वयुगलदारुदरगत इवकीट सारमेयगण परिगतइव सारङ्ग समीरणान्दोलन डोलायमान पोतोदरगत इव सायात्रिकसार्थ महाप्रवाहमध्यनिरोधसमान्तनयन इव जम्बुकः विषधरपरिगृहीतगृह घूर्णमानहृदय इव विकटतरभङ्गसभ्रमसक्षुभितगङ्गातट-प्रवेपमानसंहनन इव शाखिमण्डल. राघवशरनिकरक्षोभित रत्नाकरमध्यस्थित इवम त्स्यघात साध्वसगृहीतो भवति ।

---

सुहृत्स्वभावसुहृत सुहृदं सर्वभूतानामिति स्मृते ईश्वर भगवान् लक्ष्य व्याज-मन्वीक्षते यदि आत्मवित् परावरतत्वयाथात्म्यवेदी किमिति न मुच्यते कुतो हेतैर्नमुच्यते मुच्यतएवेत्यर्थ· । अत्रास्मिन्नर्थेपरमन्यत्कि किंवोच्यते न किंचिद्वक्तव्यमिति भाव ॥ २६ ॥

दव दहनेन वन वह्निना प्रज्वलित पार्श्वयुगल यस्य तस्य दारुण. उदरमभ्यन्तर गत कीट कृमिविशेष इव सारमेयाणा शुना गणेन परिवृत्त सारग· हरिणः समीरणेनान्दोलन चालन तेन डोलायमानस्य पोतस्योदरगत· सायात्रिकाणा पोतवणिजा सार्थस्समूह· महत प्रवाहस्य मध्ये निरोधेन समान्ते नयने यस्य स तथा जबुकः फेरुः विषधरेण सर्पेण परिगृहीते गृहे घूर्णमान हृदय यस्य स तथा कुटुंबि पुत्रपौत्रादि समेतो जन विकटतरमतिशयेन विशालं यस्यतट तस्यभगे पातने यस्समस्तेन संक्षु

विवेकः-भद्रे पाण्डित्यमपि निर्विद्यबाल्येन तिष्ठसि यन्मोक्ष्यमाणमपिमुक्तमिव अभिमन्यसे पश्य पश्य ।

**वर्णितगुणप्रकर्षावर्णाश्रमनियमदेशकालमुखाः ।**
**अनवहितमानसानां भवन्तिनित्यं भयोदयस्थानम्॥२७॥**

अन्येषुतुविशेषबोधयामि

**भयाभयस्थान विशेषवेदिनः**
**प्रमादमुक्तस्यपरीक्ष्यकारिणः ।**
**परानुभूतिप्रतिबन्धशंकया**
**भयानुबन्धोप्यभयायकल्पते ॥ २८ ॥**

---

भिताया गगायास्तटेवेपमान सहनन कपमानशरीर शाखिना वृक्षाणा मडलवयह· साध्वसेन भयेन गृहीतोभवति ।

पाण्डित्य निर्विद्यबाल्येतिष्ठासेदिति । कुत एतदुक्तमित्यत आह **यदिति**-मोक्ष्यमाणस्यप्रामादिकाकृत्य करणादिसभावनयाभिव्यज्यतइति । जानत्यपि अजानातीव भाषसे इति भाव । मुक्तस्य हि भयाभाव· **अथसोभयगतोभवतीति** श्रुतेः

अत्राभिप्रेतमर्थं विशदयति-

**वर्णित इति-॥** वर्णित· प्रशसिता गुणस्य मुक्तिसाधनत्वस्य प्रकर्ष अतिशयो येषा ते तथावर्णा ब्राह्मणादय· आश्रमा· ब्रह्मचर्यादय· नियमाः धर्माः देशाः श्रीरगादय· काला उत्तरायणादय· एते मुखानि प्रधाना· येषा ते देशादय· अनवहितमवधानरहितं मानस येषां तेषा पुसा भयोदयस्य भयोत्पत्तेः स्थान भवति ॥२७॥

अन्येष्ववहितमानसेषु विशेष बोधयामि । को विशेष इत्यत आह

**भयेति**—भयस्थान काम्य कर्म अस्य भयस्थानत्व स्वफलानुभवद्वारामुमुक्षावेक्षल्य जनकत्व अभयस्थान नित्यनैमित्तिकादिक कर्म इद च भगवदाज्ञारूपत्वेनानुष्ठातृपुसदनुग्रहहेतुत्वादभयस्थान तयोर्विशेष वेदितु शीलमस्यास्तीति विशेषवेदी तस्य प्रमादैरनवधानैर्मुक्तस्य परीक्ष्य कारिणा उदर्कविचारपूर्वक नित्यनैमित्तिकमात्रानुष्ठातु परानुभूतेः परमात्मानुभूते प्रतिबन्धशकया भयानुबन्ध· भयानुवृत्तिरप्यभयाय मोक्षाय कल्पते समर्थोभवति भयानुबन्धः प्रमादराहित्यमापादयन् मोक्षाय भवतीति भावः ॥ २८ ॥

आमोक्षाच्च विदुषोपि निरनुबन्धाभीतिरिति नभःप्रसूनसौरभास्वादः ।

दिग्देशकाल करणाकरणादिरूपे
देहादिके च हितसाधनभावयोग्ये ।
दुष्कर्मपङ्क्तिमनुचिन्तयतोविचित्रां
किन्तद्यदस्यपुरुषस्यनभीतिहेतुः ॥ २६ ॥

सुमतिः—* एव्व किल सव्वंवि जइ भअट्ठाण ताकह णिब्भअ णिप्पाअणिज्ज पणिहाणसपज्जइ ।

विवेकः-भद्रे सयगनुयुक्त भवत्या, अस्ति खलु सूक्ष्मं किंचित् तदपि प्रतिपन्नामेवत्वा बोधयामि प्रतिसन्धीयतामिद तावत् ।

* एव किल सर्वमपि यदि भयस्थान तत्कथ निर्भयनिष्पादनीय प्रणिधान सपद्यते ।

अत्र केचिन्नबिभेति कुतश्चनेति श्रुतेः ब्रह्मवेदनानन्तर विदुषोभय न भवतीति वदन्ति तदनूद्य दूषयति आमोक्षादिति—॥

विदुषा ब्रह्मज्ञानवत आमोक्षादाशरीरवियोगान्निरनुबन्धनिर्हेतुकाभीतिर्न खल्विति वचन नभःप्रसूनसौरभास्वाद· अत्यन्तासभावितइत्यर्थ कुत एवमुच्यत इत्यत आह

दिग्देशेति—॥ दिश· प्राच्यादय देशा· कुण्डीरचोलादय काला वसन्तादयः करणं नित्यनैमित्तिक कर्मणामकरण काम्यकर्मणा आदिशब्देन समयाचारो गृह्यते एवरूपे देहादिके च अत्र आदिशब्द इन्द्रिय वाची हितसाधनभावस्य मोक्षसाधनत्वस्य योग्ये विचित्रा दुष्कर्मपक्ति अनुचिन्तयतः अस्य पुरुषस्य यद्भीतिहेतुर्नभवति तत्कि न किमपीत्यर्थ. । मोक्षसाधनतया प्रतीतेषु दिगादिषु दुष्कर्मवशात्कदा कि भविष्यतीति सर्वभय जनक भवतीति भाव ॥

कालेष्वपि च सर्वेषु दिक्षुसर्वासुचाच्युत ।
शरीरे च यतोचापि वर्ततेमे महत्भयं ॥ इत्युक्तेः ॥ २६ ॥

प्रतिपन्न ज्ञातमेवप्रतिसन्धीयता अनुस्मर्यताम् ।

सुमतिः—* आणवेदु अय्यउत्तो ।

विवेकः—

प्रवृद्धमतिकश्मलप्रलयपावकप्रक्रियां
विमुच्य भगवत्कृपांवृजिनसिन्धुकुक्षिंभरीं ।
कदध्वपरिवर्त्तिभिर्यदिहकर्मनिर्मीयते
तदस्तुलवणाकरे लवणसेतुराधित्सितः ॥ ३० ॥

यः पुनरनन्यभावेन भगवदनुकम्पामालम्बते तस्यतुतादृशीं सिद्धि-मवधारय ।

विविक्तनिखिलस्थितिर्विषयवृत्ति निर्वेदवान्
विरक्तिपरिरम्भणग्लपितसर्वदुर्वासनः ।
निवृत्तिपथजांघिको निभृतचित्तवृत्तिः परं
प्रपद्यमुरभित्पदं भवमतीत्यसंसिध्यति ॥ ३१ ॥

* आज्ञापयत्वार्यपुत्र ।

प्रवृद्धेति—॥ प्रवृद्ध अधिक यन्मतिकश्मल मतिकालुष्यंतस्य प्रलयपावकस्य कालानलस्यप्रक्रियां प्रकारं तच्चाशकरोमित्यर्थ वृजिनानि पापानि एव सिन्धुस्समुद्रः तेनकुक्षिभरीं उदरभरणं कुर्वाणा पापापहन्त्रीमितियावत भगवत्कृपां विमुच्यकदध्वसु-दुर्मार्गेषु स्वर्गादि साधनेषु प्रवृत्तिभिर्यत्कर्मनिर्मीयतेतत लवणाकरे आधित्सितः आधातुमिष्टः लवणसेतु. लवणैः कृतस्सेतुरस्तु समुद्रे चिकीर्षितलवण सेतुरिव स्वय नश्यतीति भाव ॥ ३० ॥

एवं भगवत्कृपावैधूर्य्यप्रणिधानाभावं प्रतिपाद्य तदालम्बने भगवत्प्राप्ति पर्य्यन्ता सिद्धिर्भविष्यतीत्याह य पुनरिति—॥

अनन्यपरात्मनोन्यो न विद्यते यस्मिन सोनन्य

तेन भावेन तत्तादृशो इत्यत्र तच्छब्द स्वरूपपर तादृकशब्दः स्वभाववरः तां तादृशो च सिद्धिमवधारया विविक्तदेश सेवित्वादिभि समाधिसिद्धि फलसिद्धिश्च भविष्यतोत्याह—

विविक्तेति—॥ विविक्ते एकान्ते निखिलास्थिति स्थितिशब्द गमन शयना दीनामप्युपलक्षक. अनेन विविक्तदेशसेवित्व सूच्यते विषयेषु शब्दादिषु यावृत्ति वर्त्तनं तदनुभवः तस्या निर्वेदवान् विरक्ते. वैराग्यस्य परिरम्भणेन सम्श्लेषेण ग्लपिता शान्ता सर्वा दुर्वानास यस्य सतथा निवृत्ति पथे निवृत्तिधर्मे जाङ्घिकः जङ्घालः तदेकसंचारी

सुमतिः—*जुत्त एदं तहवि पच्चक्खिअपरमत्थ तुमं एव्वपरिपुच्छ-मणिम्मलगुरुसआसणिध्धारिअणिअमतहिअआण णिट्ठाविअणिहिल-पडिपक्खाण णिस्सेसपसमिअणिज्जरघरवासरसवासणाण अणाल-क्खिअदोसगन्धमङ्गलैकताण महुमहणचलणसेवामहाणदलाहलंपडाण अप्पमाअपरिगहिअ णिउत्ति धम्माण असम्भाविअपच्चूहाण वि महा-पुरुसाण केण उण विणिवाएण मोखोव्वाओ सिग्घणमपज्जइ ।

विवेकः—प्रिये इदमपि ते महामतिभिरवधारणीयमतिगहनमभि-दधामि यत्तत्सनकसनन्दनसनत्कुमारनारदशाण्डिल्यप्रभृतयः परमैका-तिनः प्रतिपादयन्तिआकर्ण्यताम् एतदवहितया भवत्या—

**तिमिङ्गिल तिमिङ्गिलो गिलतितद्गिलस्तन्तथा**
**तमप्यथ च तद्गिलस्तदिह पश्यकर्मक्रमे ।**

---

*युक्तमेतत तथापि प्रत्यक्षित परमार्थ त्वामेव परिपृच्छामिनिर्मलगुरुसकाशनि र्धारितनिगमान्तहृदयाना निष्ठापितनिखिलप्रतिपक्षाणा निश्शेषप्रशमितनिर्झरगृह वासरसवासनानामनालक्षितदोषगन्धमङ्गलैकतानमधुमथनचरणसेवामहानन्दलाभल-पटानां अप्रमादपरिगृहीत निवृत्तिधर्माणां असम्भावित प्रत्यूहानामपिमहापुरुषाणा केन पुनर्विनिपातेन मोक्षोपायः शीघ्रं न सम्पद्यते ।

---

निभृता निश्चला चित्तवृत्ति' मनोव्यापारो यस्यसतथा परं सर्वोत्तर सुरभित्पद भगव तस्थानं प्रपद्य भयमतीत्य न बिभेति कुतश्चनेति श्रुते: ससिध्यति संसिद्धो भवति सिद्धभगवत्साम्य भविष्यतीत्यर्थ ॥ ३१ ॥

निष्टापिताः प्रणाशिताः निखिला. प्रतिपक्षा । यैस्तेषा निश्शेष यथाभवति तथा प्रशमिता निर्जरगृहे स्वर्गे वासरसेवासना येषा ते तथा अनालक्षित दोषगन्धो ययोस्तौ तथा मंगलानामेकताने मधुमथन चरणौ तयोस्सेवाया यो महानन्दरस तस्य लपटानामुत्सुकानामप्रमादेनावधानेन परिगृहीतो निवृत्तिधर्मो यैस्तेषा विनिपातेन विघातेन मोक्षोपायभक्ति' प्रपत्तिर्वा शीघ्र न सपद्यते फलप्रदो न भवति ।

अतिगहनमति रहस्य। प्रभृति शब्देन शुक शौनकादयो गृह्यन्ते ।

तिमिमिति—॥ तिमिङ्गिलः शतयोजनायतमत्स्यग्रसनसमर्थोमत्स्यः तिमिं शत-योजनायतं मत्स्य गिलति ग्रसति किल तथा तद्गिलस्तञ्चक्र तं गिलति तद्गिल' ति-

समस्तवृजिनोदधिप्रसनडम्बकुंभोद्भवे
निवृत्तिमपि धर्ममत्त्यनघतत्वविन्निग्रहः ॥ ३२ ॥

अन्यदप्येतादृशमवधारयेथा ।

प्रथितंपातकिवर्गंकृतघ्नएकोहिकृत्स्नमतिशेते ।
तमिमंक्रियमाणघ्नस्तमपिदुरात्माकरिष्यमाणघ्नः ॥३३॥

सुमतिः-(विचिन्त्य,) * इदणाम णिस्समब्भहिअमाहप्पस्स पडि-वुद्धअणणिग्गहस्स पहावो दस्सिओ अस्स उण णाह किं णास्थि परिहारो ।

विवेकः-अस्तितु कश्चिदेक. यदिहपुनस्तत्प्रसादन ।

तथा हि ।

तोयोज्झनेन परितापमुपेत्यजन्तु
स्तोयेनजीवतिपुनः क्रमयोजितेन ।

---

* इतिनाम निस्समाभ्यधिकमा ।त्म्यस्य प्रतिवुद्धजननिग्रहस्य प्रभावो दर्शित अस्य पुनर्नाथ किन्नास्ति परिहार ।

---

मिङ्गिलगिलगिल त तिमिङ्गिलगिल गिलति इह लोके कर्मक्रमे कर्मपरपराया तत्ति मिगिरणादिक पश्य एवमनघस्य तत्वविद ब्रह्मविदइत्यथ निग्रह. कोप तद्विषय पचारजन्मा तद्दोष समस्तानि च तानि व्रजिनानि च तान्येवोदधि तस्यग्रसने डिभकुंभोद्भवं बालागस्त्य समस्तपापहरमपि निवृत्तिधर्मम् अत्ति नाशयति ब्रह्मविद पचारेण प्रतिबद्धफला विद्या भवतीति भाव. ॥ ३२ ॥

उक्त निवृत्तिधर्मादपि ब्रह्मविदपचारस्य प्राबल्य दृष्टान्तेन दृढयितुमाह अन्यदपीत्यादिना— ॥

दृष्टान्तान्दर्शयन्त-

प्रथितमिति—॥ अत्र यथा पातकिवर्गात्कृतघ्नस्य कृतघ्नात् क्रियमाणघ्नस्य तस्मात्करिष्यमाणघ्नस्य प्राबल्य तथा सकलपातक निवर्त्तकादपि निवृत्तिधर्मात् ब्रह्म-विदपचारस्य प्राबल्यमिति भाव ॥ ३३ ॥

इति नाम निस्समाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजन निग्रहस्य प्रभावोदर्शितः तत्प्रसादन तस्य ब्रह्मविदप्रसादन ।

तत्प्रसादनत्वपरिहारत्व दृष्टान्तेन उपपादयति-।

तोयोज्झनेनेति—॥जन्तु मत्स्य तोयोज्झनेन तोयस्य उज्झनेन त्यागेन

तद्वन्महत्त्यजनतस्तमसिप्रविष्ट
स्तत्संश्रयेण भजतेपरमार्थदृष्टिम् ॥ ३४ ॥

अपि च।

बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगंपुरुषं।
अभिसरतिनित्यरक्ता सत्वरमपवर्गसाधिनीविद्या॥३५॥

सा च।

परभक्तिरप्रकम्प्यानिवृत्तिधर्मानुबन्धिगुणबन्धैः।
भवजलधि पोतपात्री जातावृद्धिं दिनेदिनेभजते॥३६॥

सुमति'-(सविमर्शं) *जुत्तं एद जइ दुणिवारणिअइबलणिम्मि-
आअपक्कणिस्सेसकसाअस्स मोक्खपक्खवाणिक्खेव जोग्गा अणिममहिम-

* युक्तमेतत यदि दुर्निवारनियति बल निर्मिता अपक्वनि शेषकषायस्य मोक्ष-

परितापमुपेत्य क्रमेण योजितेन तोयेन पुनर्जीवति तद्वत्महत्यजनत तमसि अज्ञाने प्रविष्ट' जनः तत्संश्रयेण तस्य ब्रह्मविद संश्रयणेन परमार्थदृष्टि यथार्थज्ञान भजते यथा मत्स्यः तोयत्यागेन तप्त' पुनरपि जलेनैव जीवति एव तत्वविदो निग्रहात अज्ञानमासाद्य मोमुह्यमानो जन. तत्प्रसादेनैव प्रतिबुद्धोभवतीति भाव. ॥ ३४ ॥

तस्य समाधिसिद्धिश्चभवतीत्याह अपिचेति-।

बह्विति—॥ बहुषु जन्मसु कृतैस्सुकृतैस्सिद्ध निर्मलचित्तब्रह्मविद्विषयापचारस्य दूरगं दूरेवर्तमान अपवर्गसाधिनीविद्या नित्यरक्ता नित्यमनुरक्तासती सत्वरमभिसरति अत्र।

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभि'।
नराणां क्षीणपापानां कृष्णेभक्तिः प्रजायते ॥

इत्यादिकमनुसन्धेय ॥ ३५ ॥

निष्पन्नायाविद्याया दिने दिने वृद्धिश्चभव तीत्याह साचेति—॥

परभक्तिरिति—॥निवृत्तिधर्मानुबन्धिन ये गुणाश्शमदमादय रज्जवश्च त त्कृतबन्धे' अप्रकम्प्या तयेव भवजलधे. संसारसागरस्य पोतपात्री पोतरूपपात्री जाताविद्या परभक्तिरूपा सती दिने दिने वृद्धि भजते ॥ ३६ ॥

गरिमलहिमवसित्तशेसित्तर्णासित्तशपत्तिपाक्रम्मपमुहापरमपुरसत्तसिद्धिसा-हणजोअन्तराआणहोन्ति ।

विवेकः—सत्य देवि दुर्जयाएतेदुरन्तवैरिणो योगान्तरायाः त द्वेषा सभवे परिहरणादपि सम्भवस्यैव परिहरणेन निष्प्रत्यूहा भवति नैश्श्रेयसीसिद्धिः—

तत प्रविशति भूर्जपत्रभूषितोत्तमाङ्गो दूतः—

दूतः—साञ्जलिबन्धं—

राजन् अयमहमस्मिदेवस्यमहाराजस्यमहामोहस्य दृष्टिपथमनुक्रान् सर्वत्राप्रतिहतगतिः सवृतिसत्योनाम दूत. तदभिवादये सावरोध भवन्त।

विवेकः—( स्वगत ) किंन्निमित्तमयमुपागतः ।

( प्रकाश ) अस्थानवृत्तिमपहायापरिमितायुर्भूयाः

दूतः—उत्तमाङ्गादवतारित दरविकसिताञ्जलिकोशनिहित भूर्जप त्रमुपदर्शयन्, इदकिल महाराजचतुर्दशभुवनचक्रचक्रवर्त्तिनो द्वापर मन्त्रिनिर्द्धारित निखिलकार्यस्यदुर्मतिमतप्रतिष्ठितस्य देवस्य महामो

---

पक्षनिक्षेपयोग्या अणिममहिमगरिमलघिमवशित्वेशित्वप्राप्तिप्राकाम्यप्रमुखा. परम-पुरुषार्थसिद्धिसाधनयोगान्तराया न भवन्ति ।

---

अपक्वाः अदग्धा निश्शेषा कषायाः मनोमलानि यस्य तस्य पुरुषस्येति शेष' । मोक्षपक्षेविक्षेपस्य योग्याः परमपुरुषार्थस्य भगवत्प्राप्तिरूपस्य सिद्धे साधनभूतस्य योग स्यान्तराया न भवन्ति ।

यदि एतेषां सभवेसति परिहरणादपि संभवस्यैव ।

परिहरणेन यथा सभवो नस्यात्तया प्रयतनेन ॥

सवृतिसत्य अपरमार्थसत्य असत्येषु वस्तुषु सत्यत्व बुद्धेरभिमानिदेवताविशेष । एष एव योगाचारेण सवृतिसत्य इति व्यवह्रियते । प्रच्छन्नबौद्धास्तुव्यावहारिक सत्य इति वदन्ति । सावरोध सस्त्रीक ।

अस्थानेष्वपरमार्थवृत्तिषु वृत्ति वर्तनमपहाय दरविकसिते अञ्जलिकोशे पद्म कोशाकारे अञ्जलौ महित चतुर्दशभुवनानां । चक्रवर्त्तिन' सार्वभौमस्य । द्वापरयुगा-भिमानी सएष मन्त्री सहि कलेरासन्नत्वात् महामोहस्य मन्त्री तेन निर्धारित निश्चितं अखिल कार्य यस्य तस्य ।

हस्य लोभनाम्नागणिकेन लिखित्वात्वदर्थं प्रेषितमन्तरङ्गेणमया उपह्वृतमलघनीयशासन ।

विवेक·-सानादरावहित्थं, भद्रा अस्माकमप्यभिमत· खल्वसि-तदिह उपह्वरे त्वमेववाचय ।

दूतः—यदादिशति महाराज इति विनयनिभृत वाचयति ।

**एतत्कामादिमान्यस्य महामोहस्यशासनं ।**
**संसारह्रासभीतानां स्वर्गिणामपिसंमतं ॥ ३७ ॥**

विवेकः-(अपवार्य) (सान्तर्हास) देवि कि वयमपि शासनीय्याद्दुरात्मनो महामोहस्य परचित्तवेदनार्थमिहवाचिकन्तावच्छ्रोतव्य भद्र ततस्ततः—

**दूतः-परोपास्तिश्रद्धावधिकमतिवृत्तंयदिहते ।**
**तदैश्वर्यप्राप्त्यै भवतु वहुमन्येमहितदा ॥**

विवेकः-(अवज्ञा नाटयन्) प्रिये आकर्णितः किलाय भिक्षुपादप्रसरण न्यायः अथवा स्वाभाव्यमेव शवमुष्टिवद्गृहीतग्राहिता महामोहस्य ।

सुमति —* एव्व एद ।

---

* एवमेतत ।

---

दुर्मतिमते प्रतिष्ठितस्यानादरावहित्थाभ्या सहित यथा भवति तथा तस्याभिमतत्व सत्यत्वेन । उपह्वरे एकान्ते ।

एतदिति—एतत्कामादि मान्यस्य आदि शब्देन क्रोधलोभादयो गृह्यन्ते संसारस्य ह्रासात् च यात भीतानामैहिकभोग प्रवणाना स्वर्गिणामपि ॥ ३७ ॥

परेषा मोहादीना चित्तवेदनार्थमभिप्राय ज्ञापनार्थ ।

परेति—परस्य ब्रह्मण उपास्त्यै उपासने याश्रद्धा आदर सा अवधिः काष्ठा यस्य तत्तथा तं यदतिवृत्त अतिलघ्य वर्त्तन अनुचिताचरण मिति यावत् तत् ऐश्वर्य प्राप्तै भवतु । परोपास्त्य ऐश्वर्य प्राप्त्यै च भवति ।

विवेकः-ततः ।

दूतः-अतिक्रान्तावस्मद्भ्रुकुटिनटनारम्भसमय ।
प्रदीप्तक्रोधादिप्रतिभटनिरुद्धोनभवसि ॥ ३८ ॥

विवेकः-प्रिये स्वधर्मनिरतानस्मान् प्रति सोयमाशीर्वादः अयि मोहदूत किमस्तिशेषवाचकस्य ।

दूतः-अस्ति किञ्चिदात्मीयबलाध्यक्षकामक्रोधवैभवविषयम् ।

विवेकः-अस्तु को दोषः शृणुमस्तावत् ।

दूतः-विश्वाधिकोविलयमेष्यतिकस्यभूम्ना
वीरः प्रसिद्धमहिमा विबुधेषुकामः ।
क्रोधोदितं यदनुभाववशेनशम्भोः
शृङ्गारशीतलमभून्नयनं तृतीयम् ॥ ३९ ॥

---

चतुर्विधाभजन्तेमां जनास्सुकृतिनोर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
इत्यत्र तथा दर्शनात् । तदा बहुमन्येमहि ॥ ३८ ॥

अथ भिक्षुपादप्रसरण न्याय' आकर्णित । अनुपहत भिक्षुर्हि कुटुंबिनां गृहेषु पादमेक किंचित्प्रसार्यते कवाटेन द्वारपिधाने क्रियमाणे पादो निष्पीडत इत्याक्रुश्य पुनः कवाटे अपहृते अन्यमपि चरण तत्रनिधायान्तः प्रविष्ट इति तद्वदत्रापि किंचिदवकाशेदत्ते सर्वाक्रमणमारभ. । पक्षान्तर अथवेति स्वाभाव्य स्वाभाव्य एवशवमुष्टेः सवस्य मुष्टिरिव गृहीतग्राहिता गृहीतस्य वस्तुनो ग्राहकत्वमेतत् ।

अतिक्रान्तेति—अतिक्रान्तौ मच्छासनातिलघने सत्यां अस्माकं भ्रुकुट्या नटनारभ समये प्रदीप्ता तेजिष्टा. ये क्रोधादय तएव प्रतिभटा तैर्निरुद्धस्सन्भवसि नश्यसि ॥ ३८ ॥

एतमेवार्थमन्यथा योजयन्ति स्वधर्मेति स्वधर्म' पुरुषमोक्षणरूपः तस्मिन्निरतानस्मान् प्रत्याशीर्वाद निरुद्धो न भवसि जीवितो न भवसीति ।

आत्मीयस्य बलस्याध्यक्षा ये क्रोधादय' ते विषया यस्य तद्विषयं ।

विश्वेति—विश्वस्मात जगतो अधिका विबुधेषु देवेषु प्रसिद्धमहिमोकामकस्यभूम्ना महिम्ना विलयमेष्यति न कस्यापीत्यर्थ' शंभो क्रोधोदित क्रोधेन विकसित तृतीय नयन यदनुभाववशेन यद्वैभववशेन शृङ्गारेण शृङ्गाररसेन शीतल सुभगं अर्धनारीश्वरस्य ललाटनेत्रे अर्धस्य गौरीनेत्रतया तृतीय नयनस्य शृङ्गारशीतल त्व ॥ ३९ ॥

अपि च ।

कामोसौसमवर्ततताग्र इतिहि ब्रूते समीचीश्रुतिः
कामादेवजगज्जनिस्थितिलयैराद्यः पुमान्क्रीडति ।
निष्कामोपि सकाम एवलभते निश्रेयसंदुर्लभं
कामः कस्य वशेकएषभुवने कामस्यनस्याद्वशे ॥ ४० ॥

सुमतिः—*महाराज किं तुम्हेहि विदुज्जयो मअरलञ्छणो ।

विवेकः—देवि मिथ्यादृष्टिप्रियस्यमोहस्य प्रलपिते किं प्रत्युच्यते अवशिष्टमपि निशामयामः—

दूतः—यदि कुप्यतिकोपाय न कोपमतिवर्त्तते ।
अकोपविषयं कोपं कथं कश्चिद्विजेष्यते ॥ ४१ ॥

तदिदमुभयतः पाशारज्जुः ।

सुमतिः—†णाह ण कामादो विकोवो दुज्जयो जेणकामजअम्मि विसअ कालण होइ ।

---

* महाराज किं युष्माभिरपि दुर्जयोमकरलाञ्छन ।

† नाथ ननु कामतोपि कोपो दुर्जयो येन कामजयेपि स्वय कारण भवति ।

---

पुनरपि कामवैभवमाह अपिचेति—

कामइति—असौ काम अग्रे समवर्ततेति समीचो समीचीन श्रुतिर्ब्रूते हीति प्रसिद्धौ । अत्र कामस्तदग्रे सव्यवर्तनाधीति श्रुतिरभिप्रेत आद्य सर्वकारणभूत पुमान् नारायण कामादिच्छयैव जगज्जनिस्थितिलये. क्रीडति । अत्र सोकामयत बहुस्यां प्रजायायेति इत्यादि का श्रुतयोनुसधेया निष्कामोपि पुरुष दुर्लभ निश्रेयसंतस्मिन् सकाम एव लभते मोक्षेच्छाया अभावे तत्प्राप्त्यसभवात् एव भूतः काम कस्यवशे न कस्यापि भुवने कामस्यवशे यो नस्यादेषक न कोपीत्यर्थ. ॥ ४० ॥

मिथ्यादृष्टे मिथ्याज्ञानस्य प्रिय इष्टः तस्य प्रत्युच्यते प्रत्युत्तर दीयते ।

यदिति—॥ कोपाय कुप्यति यदि सकोप नातिवर्तते अकोपः कोपाभावः विषयो यस्य त कोप ममकोपोमाभूदित्यकोप इत्यर्थ कश्चित् कथं विजेष्यते न कश्चित्केनापि प्रकारेण विजेष्यत इत्यर्थः ॥ ४१ ॥

विवेकः—प्रिये स्थानक्रोधो न खलु दोषाय योसौ कामादिनिरसनार्थतया परमार्थवेदिभिः प्रशस्यते ( दूतमवलोक्य ) दूतश्रुतमिह- श्रोतव्य ब्रूहिमद्वचनाद्युष्मत्स्वामिन ।

अप्राणितमहामोहमनङ्गीकृतमन्मथं ।
विधूतप्रतिघंलोको विवेकं बहुमंस्यते ॥ ४२ ॥

दूतः—साधयाम्यहमिति द्वित्रिपदमतिक्रम्य स्वगतं ।

सुप्तप्रबोधनसमुत्सुकया सुमत्या
पत्न्या सहाचरित्त विश्वहितं विवेकं ।
जेतुं कएव जगति प्रभवेत्तथापि
स्वामीनियोजयतिमोह इति स्वयन्नः ॥ ४३ ॥

( प्रकाश ) महाराज 'त्यजेदेकं कुलस्यार्थे' इति ।
नीतिनातिवर्तेथाः इति निष्क्रान्तः ।
सुमतिः—* अय्यउत्त जइ मुत्तिसाहणसज्जो पुरुसो मोहपउत्तेहिं

*आर्यपुत्र यदि मुक्तिसाधनसज्ज पुरुषो मोहप्रयुक्तै कामक्रोधलोभ मदमत्सरप्रभृतिभिरभिभूयते एतावान् तवपरिश्रमोविफलो भविष्यति ।

उभयतः पार्श्वद्वयेपि पाश बन्धनरज्जू कोपोमाभूदिति कोपजयेपि कोपवशत्व तदभावेपि तद्वशत्व स्यादेवेति भावः ।

स्थाने कामादिजये तदेव विशदयति यासाविति ॥

अप्राणतेति—॥ अप्राणितः प्राणविहीनः सहृतइत्यर्थ. महामोहो येन त अनगीकृत. मन्मथ येन त विधूत निरस्ता प्रतिघ. क्रोधो येन त विवेकं लोको बहुमस्यते । महामोहादिप्रतिपक्षध्वसिनं मां लोको बहुमन्यते तदेववरं नतुबहुमन्येमहि तदेति त्वत्कृत बहुमानमिति भाव ॥ ४२ ॥

सुप्तेति—॥ सुप्तस्य प्रकृतिससर्गवशात् संकुचितज्ञानस्य प्रबोधनसमुत्सुकया आर्ये स्वपत्न्या सहाचरित मनुष्ठित विश्वस्यहित येन त विवेकं जेतुं जगति क एव प्रभवेत् कोपिनप्रभवेदेव । एव सति 'तूष्णी स्यातव्यमित्यत आह—स्वामीति—। नः अस्मान् ॥ ४३ ॥

त्यजेदेकमित्यादे. अय आशयः । पुरुषस्य एकस्य मोचणे कुलद्वय नश्यति यमो चणे कुलद्वय जीवति अत. कुलद्वयजीवनाय एक पुरुष त्यजेदिति ।

कामक्कोहनोहमग्रमच्चरप्पहुदीहिं अहिहूअइ एआवदोतुह्म परिस्समो विअलोहोदु—

विवेकः-देवि मैव मन्वीथाः आशंसेथाः पुनश्शोभनमेव ।

त्रय्यन्तैरवधारिते भगवतिक्षिप्तेविरोधभ्रमे
सांगोपाय विभागसंभृतमतिः संप्रत्यसौ साधकः ।
कामक्रोधनिशातकण्टकमिलत्कालुष्यपङ्कच्छटा
निर्मुक्तेन सुशीतलेनच पथानिश्रेयसंप्राप्स्यति ॥४४॥

( नेपथ्ये ) दिव्यवैतालिकौ विजयतां देवः—

प्रथम —

रम्या यामवती पदार्पणपटी रागाब्धिवेलोद्गति
श्वेताजन्मकदम्बधूलिविततिश्शृङ्गार चूडाजपा ।

---

शोभनाशंसनप्रकारमाह त्रय्यन्तैरिति ॥

त्रय्यन्तैरिति ॥ भगवति नारायणे त्रय्यन्तैः वेदान्तैः अवधारिते सर्वकारणतया निश्चिते सति अनेनकारणाध्याया उक्तः । विरोधभ्रमेप्रधानपरमाणवादि कारणत्ववादिनीभिः कपिलादिस्मृतिभिः ब्रह्मैककारणत्ववादिवेदान्तानां विरोधस्स्यादिति यो विरोधभ्रमः तस्मिन् क्षिप्तेसति विरोधज्ञानस्य भ्रमत्वं कपिलादि स्मृतीनां पुरुष प्रणीतानां दोष संभावनया पौरुषेय त्वे वे दान्तानां नित्यनिर्दोषतया च अनेनाविरोधाध्यायार्थसूचित । असौ साधकः पुरुष) सांगानां साधन सप्तक सहितानामुपायानां विद्यानां विभागे भेदे संभृतमतिः परिपूर्णमतिस्सन् अनेन साधनाध्यायार्थं स्सगृहीतः । कामक्रोधावेव निशातकण्टकौ ताभ्यां मिलतयत्कालुष्यं मतिभ्रम तदेव पङ्कच्छटा ताभ्यां निर्मुक्तेन परित्यक्तेन शीतलेन च पथा अर्चिरादिमार्गेण निश्रेयसं अपवर्गं प्राप्स्यति । अनेन फलाध्यायार्थस्सूचितः ॥ ४४ ॥

एव मुक्त्युपायायारंभमुक्त्वाप्रतिपक्षस्य सौप्तिकसनाह समय सूचनं निशामुखवर्णन व्याजेन वैतालिकाभ्यां विशदयति नेपथ्ये इत्यादिना ॥

देवो विजयतामिति वैतालिकौ वन्दिनावाहतुरिति शेषः । अथ तयोः कश्चिद्वदति । स एव प्रथम ।

रम्येति-॥ रम्या मनोज्ञा यामवत्याः रात्रेः पदार्पणपटी चरण न्यासोचिता

संमोहद्विपशोणबिन्दुपटलीसंध्याजरीजृम्भते
प्रत्यग्दिग्वनितापयोधरतटीकाश्मीरपङ्कद्युतिः ४५॥

द्वितीय.—

दिनाधिपविनाकृतिव्यसनखिन्नसंध्यावधू
विधूतकबरीभरप्रसरकौतुकापादकम् ।
विशृङ्खलकलिन्दजाजलतरङ्गभङ्गावली
मलीमसमिदन्तमोजगदशेषमाचूषति ॥ ४६ ॥

विवेकः—(कर्णं दत्वा) देवि दिवाभीतप्रायस्यास्मत्प्रतिपक्षस्य सौप्तिक सचाह समय सूचयतः प्रायेणस्वतोवियातवादिनौ वैतालिकौ सपश्यता भवती

प्रकाशस्सङ्कोचं भजतिजगतस्सीदतिरवौ
तमिस्राविस्फूर्तिस्स्थगयतिमुखं शक्रहरितः ।

---

कौसुम्भपटीराग एव अब्धि तस्या वेलाया लहर्यौ उद्गति उद्गमनमनुरागस्य रक्तवर्ण कविसमय सिद्ध चेतो जन्मन कामस्यकदबधूलीना कदबपुष्परजसा वितति मन्मथेन वकीर्यमाणा कदम्बधूलिर्विततिरित्यर्थः शृगारस्य शृगाररसस्य चूडाजपाकुसुम जात संमोह एव द्विप तस्य शोणबिन्दूना सिन्धूरबिन्दूना पटलीपंक्ति प्रत्यग्दिगेव वनिता तस्या पयोधर तट्यो यत् काश्मीर कुकुम तस्य द्युति. प्रभा सन्ध्या सन्ध्यारागः जरीजृम्भते ॥ ४५ ॥

दिनेति—॥ दिनाधिपस्य सूर्यस्य विनाकृते वियोगात व्यसन क्लेश तेन खिन्नाया सन्ध्याया एव वध्वा विधूतस्य बद्धान्मुक्तस्य कबरीभरस्य केशपक्षस्य प्रसट वस्फूर्तिरिति यत् कौतुकं तस्यापादक निष्पादकं विशृङ्खलस्य निर्निरोधस्य कलिन्दजा जलस्य यमुना जलस्य तरग भगाना वीचीभेदाना आवलीव मलीमसं नील इद दृश्य मानं तम. अशेष जगत् आचूषति आवृणोतीत्यर्थ ॥ ४६ ॥

दिवाभीताः उलूकाः तत्प्रायस्य तत्तुल्यस्य सौप्तिकं सुप्तिसमयसहारः तस्मिन् संनाहस्य समुचित सर्व सूचयत स्वत स्वभावादेर्वियातवादिनौ धृष्टतयावदतौ ॥

प्रकाशेति—॥ रवौसीदति अस्तगतेसति जगत प्रकाशः सकोच भजति त मिस्रायाः अन्धकारस्य विस्फूर्त्तिः शक्रहरित प्राच्या स्थगयति पिधत्ते विश्वमवस्कन्द-

अवस्कन्दन्विश्वं सुमुखिमधुना साकमधुना
विधत्ते दुर्दान्तो विविधमपनीतं रतिपतिः ॥ ४७ ॥

अपि च ।

अश्रान्तसन्ततिभिराभरणप्रकाशै
राम्रेडयन्त्य इव मङ्गलदीपभासः ।
अन्तःपुरं तिलकयन्ति समं समन्ता
दारात्रिकं मृगदृशो नियमं विधातुम् ॥ ४८ ॥

तदहमिह सान्ध्यम् नियममनुपाल्य परब्रह्मप्रवणमानस पुरुषम भिरक्षामि, भवत्यपि क्षान्तिशान्त्यादि परिजनसेविता मङ्गलाचरण सौध मधिरुह्य मत्प्रत्यागमन प्रतीक्षावर्तेथाः ।

इति सुमत्या सहनिष्क्रान्तः—

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
सङ्कल्पसूर्योदये भक्त्युपायारम्भो नाम तृतीयोऽङ्कः ॥
श्रीमते भगवते भाष्यकाराय महादेशिकाय नमः ।
श्रीमते निगमान्त महादेशिकाय नमः ॥

---

न्योदयन् रतिपतिरधुनामधुनासाकं विविधमपनीतमन्याय्य विधत्ते अकृत्य करणादिकं कारयति ॥ ४७ ॥

अश्रान्तेति-॥ अश्रान्ता अविरता सन्तति परपरा यासां ताभिः आभरणप्रभाभि मगल दीपाना मगलार्थमारोपितानां दीपानां भास किरणाः आम्रेडयन्त्य इव वर्धन्त्य इव स्थिता आरात्रिं नीराजनरूपं नियमं विधातुं मृगदृशः सम युगपदन्तःपुर समन्तात्तिलकयन्ति अलंकुर्वन्ति सायन्तन समये दीपा नारोप्य तत्तद्देवतानीराजनविधानाय संचरन्त्यस्स्त्रिय अन्तःपुरस्य अलकारभूता भवन्तीति भावः ॥ ४८ ॥

अनुपाल्य अनुष्ठायेत्यर्थः । मगलाचरणसमुचित सौधमधिरुह्य मत्प्रत्यागमने प्रतीक्षा दृष्टिर्यस्यास्सा तथोक्ता ।

॥ इति प्रभावल्या तृतीयोऽङ्कः ॥

LI

ततः प्रागुत्तरां गत्वा[1] दिशं रामः सलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य यज्ञ[2]वाटं ददर्श ह ॥ १ ॥
[3]तं रामो मुनिशार्दूलं दृष्ट्वा यज्ञमभाषत ।
अहो समृद्धिर्यज्ञस्य जनकस्य महात्मनः ॥ २ ॥
बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
[4]दृश्यन्ते ब्राह्मणानाञ्च नानाभाषाविचारिणाम् ॥३॥
[5]देशः परीक्ष्यतां ह्यद्य वत्स्यामो यत्र वै वयम् ।
इति रामवचः श्रुत्वा विश्वामित्रो महामनाः ॥ ४ ॥
[6]निवेशमकरोद्देशे विविक्ते सलिलप्लुते ।
विश्वामित्रमृषिं प्राप्तं श्रुत्वा[7]थ मिथिलेश्वरः ॥ ५ ॥
[8]शतानन्दं पुरस्कृत्य पुरोहितमकल्मषम् ।
ऋत्विग्भिः सहितश्चान्यैरादायार्घ्यं त्वरान्वितः ॥ ६॥
[9]विश्वामित्राय सत्कृत्य ददौ मन्त्रपुरस्कृतम् ।

---

1 B L 1 राम सौमित्रिणा सह 2 B 1 वाटमुपागमत 3 For this Sl B 2 रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मण । साध्वी यज्ञसमृद्धिर्हि जनकस्य etc 4 B 3 ब्राह्मणाना महाभाग वेदाध्ययनशालिना ॥ G 3 समागतानां विप्राणा देशभाषा (a) धिकारिणा ॥ (a) P विचारिणा· 5 Before this Sl of our text G 4 has the line · दृश्यन्ते ब्राह्मणाना च वासा ब्रह्मरथा कृता । For this Sl B 4-5 ऋषिवाटाश्च दृश्यन्ते शकटीशतसकुला । देशो विधीयता ब्रह्मन यत्र वतस्यामहे वय ॥ रामस्य वचन श्रुत्वा विश्वामित्रो महामुनि । 6 For this Sl B 5 6 निवासमकरोद्देशे विविक्ते सलिला(a)न्विते ॥ विश्वामित्रमनुप्राप्त श्रुत्वा नृपवरस्तदा । (a) V· युते 7 P च etc. 8 For this Sl B 6-7 शतानन्द पुरस्कृत्य पुरोहितमनिन्दित. ॥ ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वर । 9 For this Sl B 7 8· प्रत्युज्जगाम सहसा विनयेन समन्वित ॥ विश्वामित्राय धर्मेण

प्रतिगृह्य स तां पूजां जनकान्मुनिसत्तम ॥ ७ ॥
[1]पप्रच्छानामयं चैव यज्ञसामृद्ध्यमेव च ।
तांश्चैवान्यान् मुनीन् सर्वानागतान् सपुरोहितान् ॥८॥
[2]यथा न्यायं यथायोगं पर्यपृच्छदनामयम् ।
अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ ९ ॥
[3]आसने भगवन् क्लृप्ते उपवेष्टुमिहार्हसि ।
जनकेनैवमुक्तोऽथ विश्वामित्रो महामुनिः ॥ १० ॥
निषसाद ततश्चैनं स राजा मन्त्रिभिः सह ।
उपविष्टमुपेत्येदं कृताञ्जलिरभाषत ॥ ११ ॥
[4]अमृतस्येव संप्राप्तिरद्य मे भगवन् मुने ।
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १२ ॥
[5]अद्य यज्ञफलावाप्तिर्ममाभ्यागमनात्तव ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महामुने ॥१३॥
[6]यज्ञस्यावभृथं पुण्यं द्रष्टासि सपदानुगः ।

---

ददौ धर्मपुरस्कृत । प्रतिगृह्य तु ता पूजा जनकस्य महात्मन ॥ 1 For this Sl B 9· पप्रच्छ कुशल राज्ञो यज्ञस्य च निरामय । स ताश्चाथ मुनीन् पृष्ट्वा सोपाध्याय पुरोधस ॥ 2 For this Sl B 10 यथार्हमृषिभि सर्वैं समागच्छत्प्रहृष्टवत । अथ राजा etc 3 For this, and the following Sl B 11. and 12. आसने भगवानास्ता सहैभिर्मुनिपुगवै । जनकस्य वच श्रुत्वा निषसाद महामुनि ॥ पुरोधा ऋत्विजश्चैव राजा च सहमन्त्रिभि । आसनेषु यथान्यायमुपविष्टा समन्तत ॥ 4 For this Sl B 13 दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् । अद्य etc ॥ 5 For this Sl B 14 अद्ययज्ञफल प्राप्त भगवद्दर्शनान्मया । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनि पुगव ॥ 6 For this Sl B 15 यज्ञोप(a)सदने ब्रह्मन् प्राप्तोऽसि मुनिभि सह । द्वादशाह तु ब्रह्मर्षे(b)दीक्षामाहुर्मनीषिण ॥ (a) V and S सदन

द्वादशाहं च शेषं मे यज्ञस्याहुर्द्विजातयः ॥ १४ ॥
[1]ततो भागार्थिनो देवानिह द्रष्टुमुपागतान् ।
उष्यतामिह मत्प्रीत्या सहैभिर्ब्रह्मवादिभिः ॥ १५ ॥
एतान्यहानि सुसुखं ततो यास्यथ सत्कृताः ।
एतौ च मुनिशार्दूल कुमाराविव पावकौ ॥ १६ ॥
[2]काकपक्षधरौ कस्य किमर्थं चाभ्युपागतौ ।
व्यूढोरस्कौ[3]महाबाहू खड्गतूणधनुर्धरौ ॥ १७ ॥
अश्विनोः सदृशौ रूपे[4]कस्येमौ प्रियदर्शनौ ।
किमर्थं सुकुमाराङ्गावध्वानं संश्रितावुभौ ॥ १८ ॥
[5]बालाविवानवद्याङ्गौ श्रोतुं कौतूहलं मम ।
तस्यैतद्वचनं श्रुत्वा जनकस्य महात्मनः ॥ १९ ॥

etc (b) V शेषमाहुर्मनस्विन । S दीक्षामाहुर्मनस्विन 1 For this, and the following Sl B 16 and 17 ततो भागार्थिनो देवान द्रष्टुमहसि कौशिक । इत्युक्त्वा मुनिशार्दूल प्रहृष्टवचनस्तदा ॥ पुनस्तं परिपप्रच्छ प्राञ्जलि प्रयतो नृप । इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ 2 For this, and the following Sl. B 18 and 19. गज(a)तुल्यगती वीरौ शार्दूलवृषभोपमौ । (b) अश्विनाविवरूपेण समुपस्थितयौवनौ ॥ यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ । (c) कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ (a) V सिंहगती etc (b) Before this line V and S. read पद्मपत्त्रविशालाक्षौ खड्गतूणीधनुर्धरौ । (c) Before this line V and S. read पुण्डरीकविशालाक्षौ वरायुधधरावुभौ । बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ 3 G 18 दीर्घभुजौ etc but P has महाबाहू 4 G 18 कस्यातिप्रिय etc. 5 For this, and the following two slokas, B 20—24 वरायुधधरौ वीरौ कस्य पुत्रौ महामुने । भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ॥ परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः । काकपक्षधरौ वीरौ (a) श्रोतुमिच्छामि तत्त्वतः ॥ (b) तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः । न्यवेदयदमेयात्मा पुत्रौ दशरथस्य तौ ॥ सिद्धाश्रमनिवासं च राक्षसानां बधं तथा । (c) तत्रागमनमव्यग्रं विशालायाश्च

न्यवेदयन्महात्मानौ सुतौ दशरथस्य तौ ।
तच्चागमनमव्यग्रं राक्षसानां च तं बधम् ॥ २० ॥
सिद्धाश्रमनिवासं च विशालस्य च दर्शनम् ।
[1]अहल्यादर्शनञ्चैव गौतमस्य च सङ्गमम् ॥ २१
गौतमस्य च [2]शापान्ते अहल्यायाश्च दर्शनम् ।
रामस्य धनुषश्चैव जिज्ञासार्थमुपागमम् ॥ २२ ॥
[3]इति सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विरराामाथ विश्वामित्रो महामुनिः ॥ २३ ॥

॥ आदि काण्डे जनकदर्शनम् ॥

## LII

तस्यतद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा[4] भृशं भूत्वा शतानन्दो महातपाः ॥ १ ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
[5]रामसंदर्शनं प्राप्य विस्मयं परमं ययौ ॥ २ ॥
[6]संनिषण्णावुभौ दृष्ट्वा सदृशौ रामलक्ष्मणौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमभाषत ॥ ३ ॥

---

दर्शन ॥ अहल्यादर्शन चैव गौतमेन समागम । महाधनुषि जिज्ञासा कर्तुमागमन तथा॥ (a) V. कुमाराविवपावकौ. (b) Before this Sl V has रूपौदार्यगुणौ पुसा दृष्टिचित्तापहारकौ । प्रकाश्य कुलमस्माक मामुद्धर्त्तुमिहागतौ ॥ (c) V तच्चा etc. G. 19. देवाविवा etc. but P has बालाविवा etc 1 This line is wanting in G. 2 G 22. शापान्तमहल्या etc , 3. B 25. एतत् सर्वं etc. 4 B LI 1. महातेजाः &c 5 B, 2 रामसदर्शनादेव परं विस्मयमागतः॥ 6. For this Sl B 3. एतौ निषण्णौ सप्रेक्ष्य शतानदो नृपात्मजौ । सुखासीनौ

[1]अपि त्वया मुनिश्रेष्ठ मम माता[2]तपस्विनी ।
दर्शिता राजपुत्रस्य रामस्यास्य महात्मनः ॥ ४ ॥
[3]अपि रामाय मे माता पूजार्हाय महात्मने ।
पूजां कृतवती सम्यगहल्या भृशदुःखिता ॥ ५ ॥
[4]अपि रामाय कथितं यथावृत्तं पुरातनम् ।
मम मातुर्महाबुद्धे दैवेन [5]यदनुष्ठितम् ॥ ६ ॥
[6]अपि कौशिक माता मे संगता गुरुणा पुनः ।
शापाग्निदग्धा पित्रा मे रामदर्शननिर्मला ॥ ७ ॥
[7]अपि प्रीतेन मनसा गुरुर्मे कुशिकात्मज ।
पूतां दीर्घेण तपसा मातरं मेऽभ्यनन्दत ॥ ८ ॥
[8]अपि मे गुरुणा ब्रह्मन् पूजितोऽसि यथार्हतः ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ९ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो[9]महायशाः ।

---

मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत ॥ 1 For this Sl B 4 अपि ते मुनिशार्दूल मम माता यशस्विनी । दर्शिता राजपुत्राय तपोदीर्घमुपागता ॥ 2 G 4 यशस्विनी 3 For this Sl B 5 अपि रामे (a)महातेजा मम माता यशस्विनी । वन्यैरुपाहरत् पूजा पूजार्हे सर्वदेहिना ॥ (a) V. महाभागा &c 4 For this Sl B 6 अपि रामाय कथित यद्वृत्त तत्पुरातनं । मम मातुर्महातेजो(a)दैवेन दुरनुष्ठितं ॥ (a) S दैवेन &c 5 P दुरधिष्ठित. 6 For this Sl B 7 अपि कौशिक भद्र ते गुरुणा मम सगता । मम माता मुनिश्रेष्ठ रामसदर्शनादित ॥ 7 This Sl. is wanting in B 8 For this Sl B 8 and 9. अपि मे गुरुणा रामः पूजित कुशिकात्मज । इहागतो महातेजा पूजा प्राप्य महात्मन ॥ अपि शातेन मनसा गुरुर्मे कुशिकात्मज । इहागतेन रामेण पूजितेनाभिवादित ॥ 9 B 10

प्रत्युवाच शतानन्द[1]वाक्यं वाक्यविशारदः ॥ १० ॥
[2]नातिक्रान्तमिदं ब्रह्मन् यत्कार्यं तत्कृतं मया ।
सङ्गता गुरुणा पत्नी भार्गवेनेव रेणुका ॥ ११ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
[3]शतानन्दस्ततो राममिदं वचनमब्रवीत् ॥ १२ ॥
[4]स्वागतं ते रघुश्रेष्ठ दिष्ट्या प्राप्तोऽसि मे [5]प्रभो ।
विश्वामित्रेण सहित इमं यज्ञं महात्मनः ॥ १३ ॥
[6]अचिन्त्यधर्मकर्मायं ब्रह्मर्षिरमितद्युतिः ।
विश्वामित्रो महातेजा [7]यश्च ते परमो गुरुः ॥ १४ ॥
नास्ति धन्यतरो राम त्वदन्यो भुवि कश्चन ।
[8]यस्य ते हितकामोऽयं विश्वामित्रस्तपोनिधिः ॥ १५ ॥
[9]श्रूयताञ्च पुरावृत्तं कौशिकस्य महात्मनः ।
यद्वीर्यो यत्प्रभावोऽयं यद्योगश्च महायशाः ॥ १६ ॥

---

महामुनि । 1. B 10 वाक्यज्ञो वाक्यकोविद ॥ 2 For this Sl. B 11 नातिक्रात मुनिश्रेष्ठ यत्कर्त्तव्य कृत मया । सगता मुनिना &c ॥ 3. B 12 शतानदो महातेजा रामं वचनमब्रवीत ॥ 4 For this Sl B 13 स्वागत ते नरश्रेष्ठ दिष्ट्या प्राप्तो.सि राघव । विश्वामित्र पुरस्कृत्य महर्षि(a)मपराजित ॥ (a)V मभिपूजित 5 P विभो 6 For this Sl B 14 अचित्यकर्म्मा तपसा ब्रह्मर्षिरमितप्रभ । विश्वामित्रो महातेजा(a)वेत्स्येन परमा गति ॥ (a) v वेत्स्येन &c For the first line of this Sl of our text G I4 has अचिन्त्यो ह्येष धर्म्मात्मा राजर्षिरमितद्युति. ॥ 7 F ऋषीणा परमो &c 8 B 15 गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तप· ॥ 9 For this Sl B 16 श्रूयता चाभिधास्यामि कौशिकस्य महात्मन । यथाबल यथातत्त्व तन्मे निगदत. शृणु ॥

[1]राजाभूदेष धर्मात्मा दीर्घकालमरि[2]न्दम ।
धर्मज्ञश्च क्रियावांश्च प्रजानां पालने रतः ॥ १७ ॥
[3]पितामहसुतस्त्वासीत् कुशनाभः स धार्मिकः ।
कुशनाभसुतस्त्वासीद् गाधिर्नाम महीपतिः ॥ १८ ॥
[4]तस्यपुत्रो महातेजा विश्वामित्रो[5]महातपाः ।
विश्वामित्रस्तु धर्मात्मा पालयन्मेदिनीमिमाम् ॥ १९ ॥
[6]वर्षायुतानि दिव्यानि राजा राज्यमकारयत् ।
धर्मज्ञश्च क्रियावांश्च प्रजानां पालने रतः ॥ २० ॥
[7]एवं पालयतो राम राज्ञस्तस्य महात्मनः ।
अष्टौ संजज्ञिरे पुत्राः ख्यातवीर्यपराक्रमाः ॥ २१ ॥
तान्राज्वंशप्रथितान् प्रतिष्ठाप्य स वीर्यवान् ।

* * * * * * * * ॥

---

1 For this Sl B 17 राजासीदेष धर्मात्मा दीर्घकालमरिंदम । धर्मज्ञः कृतविद्यश्च प्रजाना च हितेचरत ॥ 2 G 17 न्दमः but P has न्दम 3 For this Sl B 18 19 प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभ सुधार्म्मिकः ॥ कुशनाभसुतस्त्वासीद गाधिरित्येव विश्रुत । G 18-19 पितामह सुतस्त्वासीत्कुशो नाम(a)महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभ सुधार्म्मिक ॥ कुशनाभसुतस्त्वासीद गाधिर्नाम(b)महामति ॥ (a) P महायश - (b) P महीपति 4 For this Sl B 19-20 गाधे पुत्रो महातेजा विश्वामित्रो महामुनि ॥ विश्वामित्रो महातेजा पालयामास मेदिनी ॥ 5 G 19 महामुनि 6 For this Sl B 20 बहुवर्षसहस्राणि राजा राज्यमकारयत ॥ G 20 वर्षायुतान्यनेकानि &c, The 2nd line of this Sl of our text is wanting in G 7 This, and the following Sl are wanting in B and

कदाचित् [1]स महातेजा योजयित्वा[2]षडङ्गिनीम् ।
अक्षौहिणीपरिवृतःपरिचक्राम मेदिनीम् ॥ २१ ॥
[3]सरितः पर्वतांश्चैव वनानि नगराणि च ।
विचरन् क्रमशो राजा आजगाम महायशाः ॥ २२ ॥
वसिष्ठस्याश्रमपदं [4]ब्रह्मस्थानमनुत्तमम् ।
नानामृग[5]समाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥
[6]ब्रह्मर्षिगणसंकीर्णं देवर्षिगण[7]पूजितम् ।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २४ ॥
सततं[8]संकुलं श्रीमद्ब्रह्मकल्पै[9]र्महाव्रतैः ।
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥ २५ ॥
[10]फलमूलाशनैर्दान्तैर्जित[11]क्रोधैर्जितेन्द्रियैः ।
[12]संप्रक्षालैरश्मकुट्टैर्दन्तोलूखलिभिस्तथा ॥ २६ ॥
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ।
[13]वसिष्ठस्याश्रमपदं ब्रह्म[14]स्थानमनुत्तमम् ॥ २७ ॥

---

G 1 B 21 तु &c 2 B 21 वरुथिनी 3 For this Sl B 22 नगराणि च राष्ट्राणि सरितश्च महागिरीन । (a)आश्रमान क्रमशो राजा विचरन्ना जगाम ह ॥ (a)V आश्रमात &c 4 B 23 and G. 23 नानापुष्पफलद्रुम V. नानापक्षिलताद्रुम S नानापुष्पलताद्रुम P agrees with our text 5 B and G 23 गणाकीर्णं &c 6 This line is wanting in G, but P has it. 7 B 25 सेवित 8 P कुशल &c 9 B 26 महात्मभि 10 G 25 फलमूलाशिभि &c 11 B 27 दोषै &c 12 G 26 प्रक्षालनै &c, but P has सप्रक्षालै &c, This line is wanting in B 13 Between the two lines of this Sl of out text B 28 has the line अन्यैर्वैखानसैश्चैव समन्तादुपशोभित । 14 B 28 लोकमिवापर.

[1]अपश्यज्जयतांश्रेष्ठो विश्वामित्रो महा [2]मनाः ॥२८॥
आदि काडे बालचरिते शतानन्दवाक्यम् ।

LIII

[3]वसिष्ठन्तु तदा तस्मिन्नाश्रमे मुनिसत्तमम् ।
[4]स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबल. ॥ १ ॥
प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम् ।
[5]स्वागतञ्च तथेत्युक्ता वसिष्ठेन महात्मना ॥ २ ॥
[6]आसनं तस्य विधिवत् प्रदिष्टं जगतीपतेः ।
उपविष्टाय च तदा विश्वामित्राय धीमते ॥ ३ ॥
[7]वृष्यामग्र्यां मुनिवरः फलमूलमुपाहरत् ।
प्रतिगृह्य[8]च तां पूजां वसिष्ठाद्राजसत्तमः ॥ ४ ॥
[9]तमग्निहोत्रे शिष्येषु पप्रच्छ कुशलं ततः ।
विश्वामित्रो महातेजा वनस्पति[10]गणे तथा ॥ ५ ॥
[11]सर्वत्र कुशलञ्चोक्त्वा वसिष्ठो मुनिसत्तमः ॥
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ॥ ६ ॥
[12]अपृच्छ[13]ज्जपतां श्रेष्ठो गाधेयं ब्रह्मणःसुतः

1 B 29 ददर्श &c 2 B 29 बल 3 This line is wanting in both B and G but P, has it 4 B LII 1 त &c 5 B 2 स्वागत तव चेत्युक्तो etc G 2 स्वागत च तबेत्युक्त्वा &c but P agrees with our tsxt 6 B 2 आसन चास्य भगवान वसिष्ठो व्यादिदेश ह ॥ 7 B 3, यथान्याय मुनि &c 8 B 4 and G 4 तु ता &c 9, B 4 तपोग्निहोत्रशिष्येषु कुशलपर्यपृच्छत ॥ 10 B 5 गणे तदा G 5 गणेस्तथा, but P has गणे तथा 11 B 5 सर्वत्र कुशल प्राह वसिष्ठो राजसत्तम ॥ 12 B 6 पप्रच्छ जपता श्रेष्ठो वसिष्ठो ब्रह्मण सुत ॥ 13 G 6 जयता श्रेष्ठ

कच्चित्ते कुशलं राजन् कच्चिद्धर्मेण रञ्जयन् ॥ ७ ॥
प्रजाःपालयसे नित्यं राजवृत्तेन [1]धार्मिक ।
कच्चित्ते [2]सुभृता भृत्याः कच्चित्तिष्ठन्ति शासने ॥ ८ ॥
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ।
[3]कच्चिद्बलेषु कोशेषु मित्रेषु च परन्तप ॥ ९ ॥
कुशलन्ते नरव्याघ्र [4]पुत्रपौत्रे नराधिप ।
सर्वत्र कुशलं राजा वसिष्ठं [5]प्रत्युवाच ह ॥ १० ॥
विश्वामित्रो महातेजा [6]स्तमथो विनयान्वितः ।
[7]कृत्वा तु सुचिरं कालं धर्मिष्ठां तां कथां तदा ॥ ११ ॥
मुदा परमया [8]युक्तावभिनन्द्य परस्परम् ।
ततो वसिष्ठो भगवान् कथान्ते [9]मुनिसत्तमः ॥ १२ ॥
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ।
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ॥ १३ ॥
तव चैवाप्रमेयस्य यथार्हं [10]प्रतिगृह्यताम् ।
सत्क्रियां [11]प्रतिगृह्णातु भवानिह मयोद्यताम् ॥ १४ ॥
राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ।
एवमुक्तो वसिष्ठेन विश्वामित्रो [12]महीपतिः ॥ १५ ॥

---

गाधिज etc but P agrees with our text 1 G 7 धार्मिक, but P has धार्मिक 2 B 8 सभृता &c. 3 P कच्चिद्बले च कोशे च &c 4 G 9 पुत्रपौत्रेषु चानघ, B 9 and P पुत्रपौत्रे तथानघ 5 B 10 प्रत्युदाहरत 6 G 10 स्तमतो &c, but P has स्तमथो &c B 10 वसिष्ट(a)विनयान्वित ॥(a)V विनयान्वित 7 B 11 कृत्वा तौ सुचिर काल धर्मिष्ठौ ता कथास्तदा। 8 B 11 युक्तौ प्रीयेता तौ &e 9 B 12 रघुनन्दन 10 B 13 सप्रतीच्छ मे 11 B 14 हि भवानेता प्रतीच्छतु मया कृता 12 B 15 महामुनि., V. महामति· (a better reading)

कृतमित्यब्रवीद्राजा [1]पूजानेनैव सत्कृता ।
फलमूलेन [2]भगवंस्तव यद्विद्यते प्रभो ॥ १६ ॥
पाद्येनाचमनीयेन भगवद्दर्शनेन च ।
[3]सर्वथैव महातेजः पूजार्हेणास्मि पूजितः ॥ १७ ॥
[4]गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ।
एव[5]ब्रुवन्तं राजानं वसिष्ठः पुनरेव[6]तु ॥ १८ ॥
[7]न्यमन्त्रयदमेयात्मा पुनः पुनरुदारधीः ।
बाढमित्येवगाधेयो वसिष्टं प्रत्युवाच ह ॥ १९ ॥
यथाप्रियं भगवतस्तथास्तु मुनिपुंगव ।
[8]एवमुक्तो महातेजा वसिष्ठो जपतां वरः ॥ २० ॥
आजुहाव ततः प्रीत्या[9]कल्मषां धूतकल्मषः ।
एह्येहि शबले क्षिप्रं शृणु[10]चैव वचो मम ॥ २१ ॥
सबलस्यास्य राजर्षेः कर्तुं व्यवसितो[11]ह्यहम् ।
भोजनेन महार्हेण सत्कारं [12]तद्विधत्स्व मे ॥ २२ ॥
[13]यस्य यस्य यथा कामः षड्रसेष्वभिवाञ्छितः ।

---

1 G 15 पूजा चानेन मे कृता B 15 पूजा वाक्येन मे त्वया 2 B 16 विद्यते यत्तवाश्रमे 3 B 17 सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजित. ॥ 4 B 17 नमस्तेऽस्तु गमिष्यामि &c, but V and S have गमिष्यामि नमस्तेऽस्तु &c 5 S ब्रुवाणं &c 6 B 18 हि 7 B 18 न्यमन्त्रयत धर्मात्मा &c 8 B 20 एवमुक्तस्तथा तेन &c 9 G 20 कामदा धूतकल्मषा, P कल्माषा धूतकल्मष॰, B 20 कल्माषीं धूतकल्मषा 10 B 21 चापि &c 11 B, 21 स्म्यह 12 B 22 सविधत्स्व 13 B 22 यस्य यस्य यथाकाम षड्रसेष्वभिपूजित ॥

तत्सर्वं कामधुग् [1]दिव्यमभिवर्षेह मत्कृते ॥ २३ ॥
[2]रसैरन्नेन पानेन चोष्यलेह्येन सत्वरम् ।
कुरु राज्ञोऽस्य शबले परमातिथ्यसत्क्रियाम् ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते शतानन्द-
वाक्ये विश्वामित्रनिमन्त्रणम् ।

---

LIV

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक् कामान् यस्य [3]यस्य यदीप्सितम् ॥१॥
[4]इक्षून् मधु च लाजांश्च मैरेयञ्च वरासवम् ।
पानानि च महार्हाणि भक्ष्यांश्च विविधांस्तथा ॥२॥
[5]रसाढ्यानोदनस्यापि राशीन् पर्वतसन्निभान् ।
मृष्टान्नानि तथापूपान् दधिकुल्यास्तथैव च ॥ ३ ॥
[6]नाना स्वादुरसानाञ्च षड्रसानामितस्ततः ।
भाजनानि सुपूर्णानि [7]गौडानाञ्च सहस्रशः ॥ ४ ॥

---

1 G 23 दिव्ये अभि(a)वर्षेह &c (a) P वर्षेच &c B 23 दिव्ये अभि वर्ष कृते मम 2 For th s Sl B 23 रसेनान्नेन(a) पानेन लेह्यचोष्येण संयुतं ॥ अन्नानां निचय सर्वं सृजस्व शबले त्वर ॥ (a)V पेयेन &c 3 B LIII 1 यस्येप्सित यथा 4 B 2 इक्षून्मधूंस्तथा लाजान्मैरेयांश्च वरासवान । पानानि-च महार्हाणि भक्ष्यांश्चोच्चावचानपि ॥ 5 G 3 चोष्याढ्यमोदनस्यापि &c P चोष्यढ्यस्यौदनस्यापि &c, B 3 उष्णाढ्यस्यौदनस्यात्र राशय पर्वतोपमा । मृष्टान्यन्नानि(a सूपाश्च दधिकुल्यास्तथैव च ॥ (a) S सूपाश्च &c 6 B 4 नानास्वादुरसाना च खाडवानां तथैव च । (a) भोजनानि सुपूर्णानि गौडानि च सहस्रश ॥ (a)V भाजनानि &c 7 G 4 गौडानि च &c, but P has गौडानाञ्च &c

नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ।
राजन् दास्यामि शबलां राशिभी रजतस्य वा ॥ १३ ॥
न परित्यागमर्हेयं मत्सकाशादरिन्दम ।
शाश्वती [1]शबलेयं मे कीर्तिरात्मवतो यथा ॥ १४ ॥
[2]अत्र हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च [3]बलिहोमस्तथैव च ॥ १५ ॥
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ।
[4]आयत्ता ह्यत्र राजर्षे सर्व एते न संशयः ॥ १६ ॥
सर्वमेतद्धि सत्यं ते ममपुष्टिकरं सदा ।
कारणैर्बहुभी राजन् न दास्ये[5]नन्दिनीं तव ॥ १७ ॥
वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽ[6]ब्रवीद्वचः ।
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १८ ॥
[7]सुवर्णकक्षान् ग्रैवेयान् सुवर्णाङ्कुशभूषणान् ।
ददामि कुञ्जरांस्तेऽहं सहस्राणि चतुर्दश ॥ १९ ॥
हैरण्यानां रथानां च [8]श्वेतानां वै चतुर्युजाम् ।
ददामि ते शतान्यष्टौ [9]किङ्किणीशतघोषिणाम् ॥२०॥

---

1 B. 13 शबला मह्यं &c 2 B 13 अस्या &c 3. B 14. and G 14 बलिहोमस्तथैव च, but P has बलिहोमन्तथैव च 4 For this and the following line B 15 आयत्तमत्र राजर्षे सर्वमेतन्न संशय । सर्वस्वमेतत्सत्येन मम तुष्टिकरी तथा ॥ 5 B 16 शबला &c 6 B 16 ब्रवीत्तदा 7 For this Sl. B 17-18. हैरण्यकक्षग्रैवेयान् सुवर्णाकुशभूषितान ॥ ददामि कुञ्जराणां ते सहस्राणि &c 8 B 18 श्वेताश्वाना &c 9 B 19 किङ्किणीकविभूषितान्

हयानां देशजातानां कुलजानां महौजसाम् ।
सहस्रमेकं दश च ददामि तव सुव्रत ॥ २१ ॥
नानावर्णविभक्तानां वयःस्थानां तथैव च ।
ददाम्येकां गवां कोटिं[1] दीयतां शबला मम ॥ २२ ॥
[2]एवमुक्तः स भगवान् विश्वामित्रेण धीमता ।
नैव दास्यामि शबलामिति राजानमब्रवीत् ॥ २३ ॥
एतदेव हि मे रत्नमेतदेव हि मे धनम् ।
एतदेव हि सर्वस्वमेतदेव [3]च जीवितम् ॥ २४ ॥
दर्शश्च पौर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ।
एतदेव हि मे राजन्[4] क्रियाश्च विविधास्तथा ॥ २५ ॥
[5]एतन्मूलाः क्रियाः सर्वा मम राजन् न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २६ ॥

इत्यार्षे रामायणे बालचरिते शतानन्दोपाख्याने
वसिष्ठविश्वामित्रसंवादः ।

---

LV

[6]कामधेनुं वसिष्ठोऽसौ न तत्याज यदा मुनिः ।
ततोऽस्य शबलां राजा विश्वामित्रस्तदा[7] नयत् ॥ १ ॥

---

1 B 21 शबला दीयता &c Between this, nnd the next Sl of our text B (21 22) यावदिच्छसि रत्नानि हिरण्य वा द्विजोत्तम ॥ तावद्ददामि ते सर्वं दीयता शबला मम । 2 For this Sl B 22-23 एवमुक्तस्तु भगवान् विश्वा मित्रेण(a)धीमत ॥ नदास्यामीति शबला प्राह राजन् कथचन । (a) V and S धीमता 3 B 24 and G 24 हि &c 4• B 25, विविधाश्च क्रियास्तथा 5 B 25 अतो मूला. &c 6 For this Sl B LIV 1 कामधेनु वसिष्ठोऽपि यदा न त्यजते मुनि तदाऽस्य शबला राम विश्वामित्रोन्वकर्षत ॥ 7 G LV 1. हरत्

नीयमाना तु शबला[1] तेन राज्ञा महात्मना ।
[2]ध्यायन्ती चिन्तयामास[3] रुदती शोकविह्वला ॥ २ ॥
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याहं राज[4]भृतैर्दीना[5] ह्रियै परमदुःखिता ॥ ३ ॥
किं मयापकृतं[6] तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं[7] शिष्टां भक्तां त्यजति धार्मिकः ॥ ४ ॥
इतिसंचिन्तयित्वा तु निःश्वस्य च पुनः पुनः ।
[8]प्रययावथ वेगेन वसिष्ठं प्रति राघव ॥ ५ ॥
[9]निर्धूय तान् राज[10]भृतान् शतशोऽथ सहस्रशः ।
जगामानिलवेगा सा पादमूलं महात्मनः ॥ ६ ॥
[11]गत्वा च रुदती शोकादिदं वचनमब्रवीत् ।
वसिष्ठस्याग्रतः स्थित्वा[12] हम्बारवविराविणी ॥ ७ ॥
भगवन् किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ।
[13]यन्मां राजभृता[14] एते नयन्ति त्वत्सकाशतः ॥ ८ ॥

---

1 B 2 राम &c 2 B 2 दु खिता चितयामास(a)रुदतो शोककर्शिता ॥ (a) V रुदती &c 3 G 2 रुदन्ती, but P has रुदती 4, G 3 भटै &c but P has भृतै &c 5 B 3 (a) ह्रियेय भृशदु खिता (a)V and S ह्रियेय &c 6 P कर्म &c 7 G 4 स्विष्टा &c, but P has शिष्टा &c, B 4 दृष्ट्वा &c 8 G 5 प्रययौ साथ &c For this line B 5 जगाम वेगेन तद- वसिष्ठ परमौजसं ॥ 9 B 6 निर्धूय तास्तदा भृत्यान् शतश शत्रुसूदन जगामानिलवेगेन etc ॥ 10 G 6 भृत्यान etc 11 For this Sl B 7 शबला सा रुदती च क्रोशती चेदमब्रवीत्। वसिष्ठस्याग्रत स्थित्वा रुदती मेघनिस्वना ॥ 12 G. 7 हम्भा etc 13 B 8 यस्माद्राजभटा मा हि नयते त्वत्सकाशत ॥ 14 P प्रचैते etc.

पगमेनान्यत्रादृष्टस्यापि द्वित्वादिनाश इव द्रव्य-
विनाशे ऽपि तस्य हेतुत्वात्। न चैवं ज्ञानस्य
नियतक्षणसत्ता न स्यादिति वाच्यम्। घटादिव-
द्वृत्तेरपि द्रव्यत्वाद्यावद्विनाशकारणासमवधान-
मवस्थानस्येष्टत्वात्। ननु वृत्तेः कार्यद्रव्यत्वे कथं
तस्यात्मवृत्तित्वमिति चेदात्मन्यध्यासादिति
ब्रूमः। तस्मात्प्रत्यक्षानुमानसिद्धं वृत्तिरूपं ज्ञेया-
त्मकं ज्ञानमेकमन्यच्चाहङ्कारतद्धर्मतदभावानु-
सन्धानान्यथानुपपत्तिप्रमेयमिति सिद्धम्।

### स चानुभवो ऽनादिः।

ननु वृत्तेर्द्रव्यत्वे समवायिनाशाद्वा तन्नाशः स्यान्नि-
मित्तनाशाद्द्रव्यनाशादर्शनादिति चेन्न। कारणत्रैवि
ध्यानङ्गीकारेणोपादानातिरिक्तकारणमात्रस्य निमित्तत्वा-
त्प्रारब्धकर्मनाशे शरीरनाशदर्शनाच्चेत्यभिप्रेत्याह। न
चेति। कारणत्रैविध्यमङ्गीकृत्यापि गुणनाशवद्द्रव्यना-
शस्याप्यन्यत्रादृष्टनिमित्तविनाशजन्यं क्वचिदगत्याङ्गी-
कर्त्तव्यमित्याह। कारणान्तरेति। एवं तर्हि धारास्थले
यावदिन्द्रियसंयोगमेकस्यैव ज्ञानस्य स्थायित्वापत्ति-
रित्याशङ्क्याह। न चैवमिति। वृत्तेर्द्रव्यत्वे स्पर्शशून्या-
त्मनस्तदाश्रयत्वायोगाद्दृष्टत्वानुपपत्तिरिति चोदयति।
ननु वृत्तेरिति। वास्तवाधारत्वस्यात्मन्यभावादवास्तवस्य
च जगन्मात्राधिष्ठाने तस्मिन्ननुपपत्त्यभावादिति परिह-
रति। आत्मनीति। वृत्तितत्साक्षिरूपज्ञानद्वयनिरूपण-

मुपसंहरति । तस्मादिति । जानामीत्यनुभवः प्रत्यक्षप-दार्थः । इन्द्रियसंयोगे सत्यजायमानेत्यादिप्रयोगो ऽनुमा-नपदार्थः । साक्षिरूपज्ञानस्यात्माभेदसिद्धये कार्यत्वमपा-करोति । स चानुभव इति । कार्यत्वे प्रमाणाभावादिति शेषः ॥

रूपादिविषयप्रकाशानां प्रागभावप्रतियोगित्वादेरनु-भूयमानत्वात्तत्र मानाभावो ऽसिद्ध इति चोदयति । स्यादेतदिति ।

(अनुभवस्यानादित्वे पूर्वपक्षः) **स्यादेतत्, द्रक्ष्यामि श्रोष्यामि चेति प्रागभावप्रतियोगित्वं विज्ञानानामनुभूयते । विद्यमानप्रागभावप्रतियोगित्वस्यैव लृडर्थ-त्वात् । तदेव च कार्यत्वं ज्ञानमुत्पन्नमिति चोत्पत्तिः । न चानुभवोत्पत्तौ कारणाभावः । चक्षुराद्यन्वयव्यतिरेकानुविधानादनुभवस्यैत-स्यैव तत्कारणत्वात् ॥**

लृट मशब्दस्य भविष्यदर्थत्वात्तत्प्रयोगमूलानुभव स्यापि स एवार्थ इत्यभिप्रेत्याह । विद्यमानेति । अनु-भवस्य प्रागभावप्रतियोगित्वे ऽपि कथं कार्यत्वमित्यत आह । तदेव चेति । स्पष्टमेवोत्पत्तिरप्यनुभूयत इत्याह । ज्ञानमुत्पन्नमिति । उत्पादकाभावादुत्पाद्यनुभवो भ्रम इत्याशङ्क्याह । न चानुभवेति ॥

ननु यथा गुरुमते रूपं नेष्टमित्याद्यनुभवस्य तत्सम्ब-न्धविषयत्वमेवमत्रापीत्यत आह । न चैनत्सर्वमिति ।

नचैतत्सर्वं ज्ञानविषययोः सम्बन्धस्येति वाच्यम् । सम्बन्धो हि विषयचैतन्येन तादात्म्यं, संयोगो वा । नाद्यः तस्य तदुत्पत्तिसमकालोत्पत्तिकत्वात् । स्थिते ऽपि विषयज्ञाने कादाचित्कत्वादिप्रतीतेः । न हि कश्चित्तटस्थः संस्तदात्मतां गच्छति, युतसिद्धत्वात् । नापि द्वितीयः घटादेः स्वोत्पत्त्यनन्तरमेवाकाशेनेव चैतन्येनापि संयुक्तत्वात् । चैतन्यघटयोः क्रियापूर्वसंयोगे च निश्चले घटे क्रियावतश्चैतन्यस्य परिच्छिन्नत्वादिप्रसङ्गात् । अस्तु तर्हि वृत्तिविषया कादाचित्कत्वादिप्रतीतिरिति चेन्न । वृत्त्यतिरिक्तस्फुरणेऽपि किञ्चित्कालसम्बन्धित्वादिप्रतीतेः । अन्यथान्धादेरपि रूपादिगोचरकृतिप्रसङ्गात् । न चाविद्यावृतं स्फुरणं न कृतिहेतुरविद्याया एव तत्प्रतिबन्धकत्वादिति वाच्यम् । तथापि सर्वदा व्यवहारप्रसङ्गात् । स्फुरणात्मकाविद्यानिवृत्तेस्तव मते सर्वदा सत्त्वात् । स्फुरणं कार्यं, अनित्यभावत्वात्, ततो नानादिरनुभव इति ॥

ज्ञानज्ञेययोः सम्बन्धस्य तादात्म्यरूपत्वे तस्य सम्बन्धिना सहैवोत्पत्तिनियमादागन्तुकत्वन्न स्यादित्याह । नाद्य इति । तर्हि विषयेण सहैवोत्पद्यतां तत्राह । स्थिते-

ऽपीति। नन्वसंसृष्टसम्बन्धिद्वये स्थित एव पश्चान्निमित्तान्त रात्तादात्म्यं किं न स्यादित्यत आह । न हि कश्चिदिति। युतसिद्धसम्बन्धस्य संयोगत्वपक्षे किं संयोगजः संयोग उत कर्मजः । आद्ये घटादेः स्वावयवचैतन्यसंयोगात्स्वचैतन्यसंयोगस्य स्वस्थितिक्षण एव सिद्धत्वात्तदर्थं चक्षुराद्यपेक्षा न स्यादित्याह ।नापि द्वितीय इति । द्वितीये तु चैतन्यकर्माधीनः संयोगो निश्चले विषये वक्तव्यस्तथा च प्रत्यक्षचैतन्यस्य मध्यमपर्णामित्वकार्यत्वादिप्रसङ्ग इत्यभिप्रेत्याह । चैतन्यघटयोरिति । ननु स्फुरणव्यतिरिक्तवृत्तेः साधितत्वात्तद्विषयमेतत्सर्वमिति चोदयति । अस्तु तर्हीति । इदानीं न स्फुरतीति प्रतीतेः स्फुरणस्याप्यनियतत्वमित्याह । न वृत्त्यतिरिक्तेति। स्फुरणनित्यत्वे बाधकमाह । अन्यथेति। अन्धादेः प्रतिबन्धकसत्त्वान्न कृतिरित्याह । न चाविद्येति । तव मते आरोपिताभावस्याधिष्ठानमात्रत्वादन्धादेः प्रतिबन्धकाभावस्य सत्त्वाद्रूपाद्युपादानं स्यादित्याह। तथापीति। अनित्यत्वे प्रत्यक्षमुक्त्वा कार्यत्वे ऽनुमानमाह । स्फुरणमिति ॥

स्फुरणोत्पादकानिरूपणान्न तस्यानित्यत्वादेकं प्रामाणिकमिति दूषयति । न तद्धेतोरिति ।

(तदुत्तरम्) **न तद्धेतोरनिरूपणात् । न तावच्चक्षुरादिस्फुरणहेतुः । बाह्यमात्रगोचरचक्षुरादेरहमर्थसाधारणस्फुरणहेतुत्वात् । ज्ञानधाराकालीनस्फुरणस्य युगपदनेकज्ञानाजनकचक्षुराद्यजन्यत्वाच्च । अत एव चक्षुराद्यन्वयव्यतिरेक-**

योर्वृत्तिविषयत्वम् । नापि मनः । असाधारण-
प्रमाकरणसहकृतस्यैव मनसो ज्ञानहेतुत्वात् ॥

किं तत्र वाह्येन्द्रियं हेतुरुत मनः किं वोभयम् ? आद्ये त्रिपुटीप्रत्यक्षत्वस्य निरासेनाहमर्थस्फुरणं न स्यादित्याह। न तावदिति। धाराविषयकस्य स्फुरणस्याभावापत्तेस्तत्तद्-नुसन्धानं च न स्यादित्याह। ज्ञानधारेति। क तर्हि वाह्येन्द्रि-योपयोग इत्यत आह। अत एवेति। द्वितीयं दूषयति। नापीति। मनसोऽकरणत्वादन्यदसाधारणं कारणं वक्तव्यं तदान्तरज्ञाने न सम्भवतीत्याह। असाधारणेति ॥

तृतीयं शङ्कते नन्विति।

मानस स्फुरणमपि (वाह्यसाधकम् ।)

ननु वाह्यविषयेतथा, आन्तरज्ञानं
मन एव जनयिष्यतीति चेन्न। घटादिस्फुरण-
स्याप्यहमर्थस्फुरणाभिन्नस्य वाह्यगोचरत्वात्।
स्फुरणाभेदश्च धर्मिग्राहकमानसिद्धो घटाद्य-
परोक्ष्यान्यथानुपपत्तिसिद्धश्च । वक्ष्यते च
विस्तरेण। किञ्च स्फुरणस्यापि मनो जन्यत्वे
ऽनुसन्धेयज्ञानसमानकालीनत्वानुपपत्तिर्ज्ञानद्व-
यायौगपद्यायोगात्। ततश्च ज्ञानकादाचित्क-
त्वाद्यनुभवो वृत्तिविषयो न तु तत्साक्षिस्फुर-
णविषयः। जन्यज्ञाने ऽनुव्यवसायस्य विषय-
त्वयोः स्वप्रकाशत्वस्य च निरासेनादिज्ञानं

विना ज्ञानमुत्पन्नं कादाचित्कमित्यादिप्रतीत्यनुपपत्तेश्च । न च स्फुरणस्य कादाचित्कत्वानभ्युपगमे ऽन्धस्यापि रूपादिप्रवृत्तिप्रसङ्ग इति वाच्यम् । किं स्फुरणाविरहो वृत्त्या गृह्यते स्फुरणेन वा । नाद्यः केवलवृत्तेर्जडतया तदभावाव्यवस्थापकत्वात् । न द्वितीयः । स्फुरणैक्यस्योक्तत्वाद्वक्ष्यमाणत्वाच्च ॥

वाह्यविषयज्ञाने मनःसहकृतं चक्षुरादिहेतुरहमर्थादिस्फुरणे मन एव हेतुरित्यर्थः । वाह्यान्तरविषयस्फुरणाभेदे सत्येवं स्यान्न च सोऽस्ति प्रमाणाभावादिति दूषयति । न घटादीनि । अभेदश्च लाघवानुगृहीतानुसन्धानाद्यनुपपत्त्यादिप्रमाणसिद्ध इत्याह । स्फुरणाभेदश्चेति । अनुभवैकत्ववादे चेदं निरूपयिष्यते इत्याह । वक्ष्यत इति । मनसः करणत्वमङ्गीकृत्यापि स्फुरणस्य तज्जन्यत्वं न सम्भवतीत्याह । किञ्चेति । स्फुरणोत्पत्त्यसम्भवादनित्यत्वाद्यनुभवस्तदविविक्तवृत्तिविषय इत्याह । ततश्चेति । नित्यानुभवानङ्गीकारे ज्ञानोत्पत्त्यादिरेव न सिध्येदनुव्यवसायादेर्निरसनत्वादित्याह । जन्यज्ञान इति । स्फुरणनित्यत्वे चोक्तं वाधकमपवदति । न च स्फुरणस्येति । किमन्धादेः प्रवृत्त्यापादनेन स्फुरणाभावः सिसाधयिषित उत प्रवृत्त्यभावस्य गतिः पृच्छते । आद्ये तद्ग्राहकं विकल्पयति । किमिति । वृत्तेश्चक्षुरादितुल्यतया तन्मात्रेण नाभावसिद्धिरित्याह । नाद्य इति । स्फुरणभेदाभावान्न द्वितीयोपीत्याह । न द्वितीय इति ॥

स्फुरणभेदमङ्गीकृत्यापि किं स्फुरणकादाचित्का-भावः प्रतियोगिनैव गृह्यते उतान्येनेति विकल्प्याद्ये अभा-वप्रतियोगिनोर्यौगपद्यासम्भवान्न तेन तद्ग्रह इत्याह । तद्भेदेपीति ।

(स्फुरणभेदेऽपि न स्वार्थसिद्धिः ।) **तद्भेदेऽपि न तावत्प्रतियोगिस्फुरणेन तदभावग्रहः । तस्य स्वाभावकालेऽसत्त्वात् । स्वसत्ताकाले च स्वाभावस्य विरहात् । नाप्य-न्येन । स्वयम्प्रकाशस्फुरणस्य स्फुरणान्तरागोच-रत्वात् । घटस्फुरणकालीनतदितरस्फुरणाभा-वानुभवस्य कादाचित्कत्वे स्फुरणद्वययौगपद्य-प्रसङ्गाच्च । तदानीं तदितरस्फुरणाभावानुभव एव नेति वाच्यम् । अग्रे तत्प्रतिसन्धानदर्श-नात् । तस्माद्वृत्तिविरह एव भेदाग्रहात्स्फुर-णविरहत्वेनानुभूयते । अबाध एव वान्ध्यादेः । सत्यपि नित्यस्फुरणे तदावरणस्यैव प्रतिबन्ध-कत्वान्न प्रवृत्तिः । आत्मैवाविद्यानिवृत्तिरिति मते तस्याः सदा सत्त्वे ऽप्यारोपिताविद्याया अपि सत्त्वेन व्यवहारानुदयात्प्रतिबन्धासहकृ-ततदभाव एव हि कार्यानुकूलः । अन्यथा मण्याद्यन्योन्याभावे ऽपि कार्यं स्यात् । न**

चात्मारोपितविद्याविरोधी तस्मिन्सत्यपि तदनुभवात् । अभावस्य स्वसमानसत्ताकप्रतियोगिविरोधित्वाच्च ॥

द्वितीये प्रतियोगिग्रहाभावेऽभावग्रहायोगात्तस्यापि ग्रहो वाच्यः, स च नोपपद्यते स्वप्रकाशस्फुरणस्य स्फुरणान्तरागोचरत्वादित्याह। नाप्यन्येनेति । न च विशिष्टं तत्स्फुरणविषय इति वाच्यम् । तस्य वृत्तिविषयत्वे ऽपि स्फुरणाविषयत्वादिति भावः। किञ्च घटस्फुरणकाले तदितरस्फुरणाभावो ऽनुभूयते न वा । आद्ये स्फुरणद्वये यौगपद्यमसम्भवीत्याह। घटस्फुरणेति। द्वितीये तदभावानुसन्धानानुपपत्तिरित्याह। न च तदानोमिति। कस्तर्ह्येतावन्तं कालं नास्फुरदित्यनुभवविषय इत्याशङ्क्यैतावन्तं कालमहमिह नासमिति ज्ञानस्य देहाभाव इव स्फुरणतादात्म्यापन्नवृत्त्यभाव एव विषय इत्याह । तस्माद्वृत्तिविरह इति। अविद्यायाः स्फुरणाभावत्वात्सैव वा विषय इत्याह । अबोध एव वेति । गतिःपृच्छत इति कल्पस्योत्तरमाह। अन्धादेः सत्यपीति । तर्ह्यात्मरूपाविद्यानिवृत्तेरपि सत्त्वाद्व्यवहारः स्यादित्यत आह। आत्मैवेति। तत्रापपत्तिमाह। प्रतिबन्धेति । प्रतिबन्धकालान्यकालीन एव तदभावः प्रतिबन्धकार्यानुकूल इत्यर्थः । प्रतिबन्धकालीनस्य तदभावस्यानुकूलत्वे बाधकमाह । अन्यथेति। न च संसर्गाभाव एवानुकूल इति वाच्यम् । प्रागभावाद्यनुगतसंसर्गाभावत्वस्यैकस्याभावात् । प्रतियोगिविरहात्मन एव प्रतिबन्धकाभावस्य कार्यानुकूलत्वोत्पत्ति-

प्रतिबन्धकदशायां तदभावाच्चेति भावः । नन्वात्मनोऽविद्यानिवृत्तिरूपत्वेऽविद्यायास्तत्समानकालत्वं तदाश्रितत्वं च विरुद्धमित्याशङ्क्य समानसत्ताकत्वाभावान्न विरोध इत्याह । न चात्मेति ॥

नास्फुरदित्यनुभवस्य वृत्त्यभावविषयत्वोक्तेरनित्यत्वमसिद्धमित्याह । तदसदिति ।

(अनित्यभावत्वादित्यनुमानमसत् ।) यच्चानुमानमनित्यभावत्वादिति तदसत् । विशेषणासिद्धेः । साक्षिज्ञानस्य च पक्षत्वे बाधः । तद्धेतुत्वनिरूपणस्योक्तत्वात् । वृत्तेः पक्षत्वे सिद्धसाधनम् । एतेन हेतुव्यावृत्तौ ज्ञानमपि व्यावर्तते, अकारणककार्यानुत्पत्तेः । ज्ञानं सहेतुकमेवेति नियमविरोधाच्चेति परास्तम् । कारणव्यावृत्त्या हि कार्य्यमेव व्यावर्तते न त्वकार्यमतिप्रसङ्गात् । नापि ज्ञानस्य सहेतुकत्वनियमः अप्रयोजकत्वात् । उक्तप्रतिकूलतर्कपराहतत्वात् । तस्माच्चक्षुराद्यन्वयव्यतिरेकाभ्यां कादाचित्कत्वानुभवाच्च रूपादिविषयान्तःकरणवृत्तिर्जायते, चक्षुरादिकं च तत्रैव कारणं, तत्साक्ष्यनुभवस्तु न कादाचित्कत्वानुभवगोचरो, न वा चक्षुराद्यन्वयव्यतिरेकानुविधायीति नित्योऽयम-

नुभवः, अनादिभावत्वादात्मवत्, व्यतिरेकेण, घटवद्वा । न चाविद्यायां व्यभिचारः । भावविलक्षणायां तस्यां हेतोरभावात् ॥

किं साक्षिज्ञानं पक्षः, वृत्तिज्ञानं वा । उभयथाप्यनुपपत्तिरित्याह । साक्षीति । स्फुरणस्य नित्यत्वादकारणककार्योत्पत्तिदोषो ऽपि परास्त इत्याह । एतेनेति । स्फुरणं सहेतुकं जैवज्ञानत्वाद्वृत्तिज्ञानवदित्याशङ्क्याह । नापीति । जैवज्ञानत्वं जीवसमवेतज्ञानत्वं चेदसिद्धिः, जीवव्यवहारहेतुभूतज्ञानत्वं चेज्जीवस्वरूपज्ञानस्यापि तदुपपत्तेरप्रयोजकत्वमीश्वरज्ञाने व्यभिचारश्चेत्यर्थः । कारणस्यासम्भवादप्ययुक्तमिदमित्याह । उक्तेति । प्रसाधितस्फुरणानादित्वमुपसंहरति । तस्मादिति । अनादेरप्यनुभवस्याविद्यावदनित्यत्वाशङ्कायामाह । नित्योऽयमिति । परमतानुसारेणान्वयदृष्टान्तः व्यतिरेकदृष्टान्तःस्वमतेनेति दृष्टव्यम् । सत्यत्वस्य भावत्वस्याविद्यायामभावान्न तत्र व्यभिचार इत्याह । न चाविद्यायामिति ॥

उक्तानुमानस्य प्रतिकूलतर्कपराहतिं शङ्कते । स्यादेतदिति ।

(अनुकूलतर्कपराहतमनित्यभावत्वादित्यनुमानम् ।) स्यादेतत्, स्फुरणस्य नित्यत्वे कथमहङ्कारादावनुसन्धानं संस्कारस्यानित्यज्ञानजन्यत्वनियमात् । न चाहमाकारवृत्तिविनाशात्तत्संस्कार इति वाच्यम् । तस्या घटज्ञानधारा-

कालेऽनुदयात् । तथा सति ज्ञानद्वययौगपद्यप्रसङ्गात् । न चान्यकालीनात्मविषयवृत्त्यान्यकालीनात्मानुसन्धानं भवति । न चान्यविषयवृत्त्या तत्कालीनात्मसंस्कारो युज्यते तस्याः स्वविषय एव संस्कारजनकत्वादिति चेत् ।

दुःख्यहमासमित्यादिप्रत्ययस्य संस्कारजन्यत्व वाच्यम्, संस्कारश्चाहमर्थज्ञानस्य नित्यत्वे ऽनुपपन्नस्तत्सूक्ष्मरूपस्यैव संस्कारत्वादित्यर्थः । चैतन्यस्य नित्यत्वे ऽप्यहमिति वृत्तिविनाशात्संस्कार इत्याशङ्क्य घटधाराकालीनाहमर्थे सापि न सम्भवतीत्याह । न चाहमाकारेति । अस्तु तर्हि धारोपरमानन्तरमहमाकारवृत्तिनाशात्तत्संस्कार इत्याशङ्क्य तेनापि धाराकालीनात्मस्मरणानुपपत्तिरित्याह । न चान्येति । तर्हि घटधारयैव तत्कालीनाहमर्थसंस्कार उत्पद्यतामित्यत आह । न चान्यविषयेति ।

घटविषयवृत्त्यैवाहमर्थविषयः संस्कारो जायत इति वक्तुं संस्कारविषयत्वे ऽनतिप्रसक्तं प्रयोजकमाह । न यद्वृत्तीति ।

(अनतिप्रसक्त संस्कार साधकम् ।) न, यद्वृत्त्यवच्छिन्नचैतन्ये यत्प्रकाशते तद्गोचर एव वृत्त्या संस्कारो जन्यते न तु वृत्तिगोचर एवं स्वजनकानुभवे प्रकाशमानत्वप्रयुक्तत्वात्संस्कारगोचरत्वस्य । अन्यथा वृत्तिगोचरसंस्कारस्यापि ततो ऽनुदयप्रसङ्गात् । वृत्तेर्दृ-

त्ययगोचरत्वात् । वृत्त्यन्तरस्याप्यनुव्यवसायनिरासेन निरस्तत्वात् । तथा च वृत्तिरूपेण विकसितान्तःकरणाभिव्यक्तचैतन्यप्रतिभास्यत्वादहमर्थवृत्तितद्विषयाणां तदुत्पन्नसंस्कारस्यापि तन्निश्चयगोचरत्वं युज्यते । न चान्तःकरणमात्राभिव्यक्तचैतन्यादेवाहमर्थप्रतिभासम्भवान्न वृत्तिमदन्तःकरणाभिव्यक्तचैतन्यं तत्साधकमिति वाच्यम् । अन्यप्रतिभास्यस्याप्यन्यप्रतिभास्यत्वाविरोधात्पूर्वज्ञानप्रतिभासस्याप्यन्यज्ञानेन विषयीकरणात् ॥

यद्वृत्त्यवच्छिन्नचैतन्यप्रयुक्तसंशयाद्यगोचरत्वं यावतां तद्वृत्तिनाशजसंस्कारस्तावतामित्यर्थः । एवकारार्थमयोगव्यवच्छेदमाह । न त्विति । वृत्तेर्जडतया स्वतःसंस्कारानाधायकत्वात्तदवच्छिन्नप्रकाशप्रयुक्तः संस्कारस्तत्र प्रकाशमानमात्रविषयो न तु विषयतयैव प्रकाशमानविषय इत्याह । स्वजनकेति । स्वयूथ्यान्प्रति विपक्षे बाधकमाह । अन्यथेति । अस्तु तर्हि वृत्तावपि स्वविषयवृत्त्यन्तरेण संस्कार इत्याशङ्क्यानवस्थाप्रसङ्गान्मैवमित्याह । वृत्त्यन्तरेति । तथापि कथं घटज्ञानादहमर्थस्य वृत्त्यभिव्यक्तचैतन्यभास्यत्वमेवासिद्धं स्वजन्ये तदभावे संस्कार इत्यत आह । तथा चेति । चैतन्यप्रतिभास्यत्वादिति । तत्प्रयुक्तसंशयाद्ययोग्यताकत्वादित्यर्थः । अहमर्थस्य वृत्त्यभिव्यक्तचैतन्यभास्यत्वमेवासिद्धं स्वजन्ये तदभावे ऽपि तत्प्रतिभासादि-

त्याशङ्क्य त्वग्ग्राह्यस्य चक्षुर्ग्राह्यत्ववदविरोध इत्याह । न चान्तःकरणेति ॥

एवमप्यहंत्वप्रकारकस्मृतित्वेनुपपत्तिः, संस्कारमूलवृत्तावहंत्वस्याप्रकारत्वादित्याशङ्कामपवदति । न चेति ।

न च तत्प्रकारकस्मृतौ तत्प्रकारकानुभवः कारणं, घटादिवृत्तिश्च नाहंत्वप्रकारिकेति ततो नाहमर्थस्मृतिः स्यादिति वाच्यम् । फलबलात् क्वचिदन्याकारानुभवादन्याकारस्मृतिकल्पने बाधकाभावात् । अननुभूततत्त्वगोचरस्मृतिवत् गुरुमते ज्ञानगोचरस्मृतिवत्, अस्मन्मते वृत्तिगोचरस्मृतिवच्च वृत्तिमदन्तःकरणावच्छिन्नस्फुरणस्याप्यहमर्थतद्गतवृत्तिसंशयविरोधित्वेन तद्गोचरस्मृतिजनकत्वे तद्गोचरसंशयविरोधिज्ञानत्वस्यैवतन्त्रत्वात्। न तु तद्विषयज्ञानत्वं तत्प्रकारकज्ञानत्वं वा तन्त्रम्। संशयादपि स्मृतिप्रसंगात्। केचित्त्वहमाकारा वृत्तिरस्तु तया चाहमर्थगोचरस्मृतिः । न च ज्ञानयौगपद्याऽनुपपत्तिः । शिरःपादाद्यवच्छेदेनापर्यायोत्पन्नसुखदुःखदर्शनं न समवायिप्रदेशभेदेन युगपद्वृत्तिद्वयस्याविरुद्धत्वात् । न चैवं घटज्ञानधारा-

कालेऽप्यहंशब्दोल्लेखप्रसङ्गः । ज्ञाने शब्दोल्लेखस्यानियतत्वात् । अनुसन्धानस्य तदानीमपि तत्कल्पकस्य सत्त्वात् ॥

यद्यपि वृत्तिं प्रत्यप्रकारत्वेऽप्यहंत्वस्य तदभिव्यक्तसाक्षिणं प्रति प्रकारत्वात्तन्मूला स्मृतिस्तत्प्रकारिका युक्ता तथापि स्मृत्यनुभवयोः समानप्रकारकत्वनियमोऽपि नास्तीत्याह। फलबलादिति। तत्तेदन्तयोरखण्डधर्मत्वमते नाननुभूततत्तेत्युक्तम्। किञ्च स्मृतिजनकज्ञाने तत्समानप्रकारकत्वं कुत्रापि नापेक्षितं किं तु तद्विषयसंशयादिविरोधिज्ञानत्वमेवेत्याह । वृत्तिमदिति । एवकारव्यावर्त्यमाह। न तु तद्विषयेति। तत्र हेतुमाह। संशयादिति। ननु निश्चय एव स्वसमानप्रकारकस्मृतिहेतुरिति चेत्। किं निश्चयत्वं जातिरुत संशयविरोधिज्ञानस्वरूपत्वम् । नाद्यः साक्षात्त्वेन साङ्कर्यात् । द्वितीये स्मृतिसमानप्रकारकत्वं व्यर्थम्, तद्गोचरसंशयविरोधिज्ञाने सति तत्प्रकारकत्वाभावेन स्मृत्यभावादर्शनादित्यभिप्रायः । इदानीं घटज्ञानधाराकाले ऽप्यहमाकारवृत्त्यङ्गीकारे बाधकाभावात्तत एव तत्संस्कारोद्वृत्तेर्वृत्त्यन्तरविषयत्वे ऽनवस्थापातात्स्वाभिव्यक्तचैतन्ये भासमानत्वमात्रेण स्वजन्यसंस्कारविषयत्वमिति वृद्धानां मतं दर्शयति। केचित्त्विति। समवायिप्रदेशेति। चक्षुराद्यवच्छिन्नाहङ्कारदेशे घटाकारवृत्तिः हृदयावच्छिन्ने चाहमाकारवृत्तिरित्यर्थः। ननु घटधाराकाले ऽहंशब्दोल्लेखाभावान्न तदाकारवृत्तिरित्यत आह। न चैवमिति। वृत्तिसाधकस्याहमिति व्यवहारस्य

तदानीमभावात्कथं तत्सिद्धिरित्याशङ्क्याह । अनुसन्धानस्येति ॥

अहमाकारवृत्त्यङ्गीकारे ऽहमर्थस्य कर्तृतया तन्निर्वर्तकत्वाद्गुणत्वं तज्जन्यफलशालित्वेन कार्यत्वात् प्राधान्यं चेति विरुद्धरूपद्वयापत्तिरित्याशङ्क्याह । न चेति ।

**न च कर्तृकर्मविरोधः । अन्तःकरणस्य वृत्त्यधीनफलभागित्वाभावेन वृत्तिं प्रत्यकर्मत्वात् ।**

(अहमाकारावृत्तिर्न ज्ञानम् ।)

**वस्तुतस्त्वहमाकारा वृत्तिर्न ज्ञानम् । स्मृत्यतत्कारणजन्यत्वात्कारणान्तरकल्पने च गौरवात् । ननु मनस्तत्करणमिति चेन्न । मनसस्तदाश्रयस्य तदुपादानतयाऽन्तःकरणत्वात् । अपरोक्षव्यवहारस्तस्या लिङ्गाद्यजन्यत्वात् । लिङ्गादिप्रतिसन्धानशून्यस्याप्यहमित्यनुसन्धानदर्शनात्केवलसंस्कारस्य स्मृतिमात्रहेतुत्वात् । अनुसन्धानहेतुवृत्तिकालीनात्मनःपूर्वमननुभूतत्वात् । अहमर्थगोचरप्रत्यभिज्ञायाश्च तत्रांशे संस्कारजन्यतया ज्ञानत्वात् । अभेदावच्छेदेन ज्ञाने परोक्षत्वापरोक्षत्ववत्प्रमात्वाप्रमात्ववच्च ज्ञानत्वाज्ञानत्वयोरप्यविरोधात् ॥**

अहमर्थस्यानावृतत्वेन वृत्तिफलाविद्यानिवृत्तिशालित्वाभावान्न कर्मत्वमित्याह । अन्तःकरणस्येति । अहमर्थस्याकर्मत्वे ऽन्यस्यापि कर्मणोऽभावादहमाकारवृत्तेर्ज्ञानत्वमेव न स्यादकर्मकज्ञानायोगा दित्याशङ्क्येष्टापत्तिरित्याह । वस्तुतस्त्विति । किञ्च ज्ञानत्वे प्रत्यक्षाद्यन्यतमेन भवितव्यम् । न च तदुपपद्यते । प्रमाणषट्काजन्यत्वादित्याह । कृप्तेति । तर्ह्यन्यदेव किञ्चित्प्रमाणमस्तीत्यत आह । करणान्तरेति । मनोजन्यत्वात्प्रत्यक्षमेवेति शङ्कते । ननु मन इति । मनसो वृत्तिमात्रं प्रत्युपादानत्वान्न क्वापि करणत्वमित्याह । न मनस इति । यद्वोचाम मनसो ऽकारणत्वादिति तदितर एव सिद्धमिति द्रष्टव्यम् । अस्तु तर्हि लिङ्गादिजन्यत्वमित्याशङ्क्य तथात्वे ऽपरोक्षव्यवहारहेतुत्वं न स्यादित्यभिप्रेत्याह । अपरोक्षेति । लिङ्गादिज्ञानाभावेप्यहमिति प्रतीतेर्न तर्ह्यन्यत्वमित्याह । लिङ्गादीति । तर्हि संस्कार एव तत्र करणमित्याशङ्क्य तथात्वे ऽनुभवत्वं न स्यादित्याह । केवलेति । पूर्वानुभवाभावादहमर्थसंस्कारो ऽपि न सम्भवतीत्याह । अनुसन्धानेति । कथं तर्हि सोहमिति प्रत्यभिज्ञाया ज्ञानत्वमित्याशङ्क्य तस्या अपि तत्तांश एव ज्ञानत्वं न त्वहमर्थांश इत्याह । अहमर्थेति । एकत्र ज्ञानत्वाज्ञानत्वे विरुद्धे इत्याशङ्क्य गुरुमते प्रत्यभिज्ञायां परोक्षत्वापरोक्षत्ववद्वैशेषिकादिमते तद्भ्रमे प्रमात्वाप्रमात्ववदंशभेदेन तयोर्न विरोध इत्याह । अंशभेदेति ॥

अहमाकारवृत्तेरज्ञानत्वे ततोर्थप्रकाशो न स्यादिति चोदयति । कथन्तर्हीति ।

also, for the same reason, be regarded as being for the benefit of others' "

To the the above we make the following reply What we mean is, not that the expression being 'for the benefit of others,' the Inference also is so, but that the 'five-membered' sentence is for the benefit of others, and in as much as that sentence, through the cognition that it affords of the 'inferential indicative,' becomes the cause or basis of Inference, it is *inferential* in its character

*Obj* Thus too, the inferential character will have to be attributed to that sensuous perception which affords cognition of the 'inferential indicative' "

*Reply* It will not have to be thus attributed, as in the case of sensuous perception we do not find any known word employed

---

Note—(1) '*Anvitabhidhāna vāda* —The sense of this theory which was propounded by Prabhākara may be thus summarised The first recognition of the conventional denotation of a word is obtained only from *usage* This usage can be only in form of the younger man carrying out the instructions of the elder This instruction is conveyed by means of a sentence, and never by means of a single word The denotations of the words composing a sentence are necessarily related to one another Hence it must be admitted that the recognition of the conventional meaning of a word appears only with regard to certain objects, such as are related to certain other objects Thus then, this relationship being cognised by direct denotation, there can be no need of admitting of a distinct verbal process in the form of *Tātparya* or Import, as representing the meaning of a sentence as apart from the parts composing it

(2) *Abhihitānvayavāda* This theory is held by Kumarila Bhatta and others The sense of this view is that each word of a sentence denotes its own specfie meaning and then on account of the threefold cause—of (1) *Ākānkshā*, 'Requirement,' (2) *Yogyatā*, 'Capability, and (3) *Sannidhi*, 'Proximity,'—there follows a recognition of the relationship among these words And thus this recognition of the *relationship*, which would constitute the 'meaning of the sentence, cannot be regarded as denoted directly by the words themselves which can be accepted only to bring about the cognition of the meaning of the sentence, through processes other than that of Direct Denotation, and to this may be given the name of 'Tātparya,' 'Import'

The author next proceeds to describe the five 'members' of the sentence spoken of above—

*Text* (113) *These members are—(1) Pratijnā, 'Declaration' Proposition to be proved (2) Apadeça, Statement of the inferential indicative or 'middle term,' (3) Nidarçana 'Statement of the Major Premiss,' (4) Anusandhāna, 'Statement of the Minor Premiss,' and (5) Pratyāmnāya, 'Reiteration of the Conclusion'*

*Of these (1) the Conclusion is the statement of what is to be proved by means of the Inference, and which is not incompatible with facts That is to say, it consists in the mere statement of the 'subject' endowed with the property sought to be proved, with a view to point out the substratum of the 'indicative' As an example of this we have the proposition 'Wind is a substance'* (IX—ii—1),

*The qualification 'not incompatible, &c' serves the purpose of excluding such propositions as may be contrary to (1) Sense-cognition, (2) Inference, (3) Scriptures regarded as trustworthy by the speaker, (4) that which would involve a self-contradiction,, e g the proposition 'Fire is not hot,' would be contrary, to sense cognition (1), (2) that 'ākāça is dense would be contrary to Inference, (3) that 'the Brāhmana ought to drink wine' would be 'contrary to scriptures', and that 'the effect is ever existing' would, for the Vaiçēshika, be contrary to his own theory, and (4) that 'word is not expressive' would involve a self-contradiction* (III—i—15)

## Commentary.

The word '*punah*' is put in simply by way of ornamentation of speech Having named the 'members' he states the

definition of the 'conclusion,' and then proceeds to explain that definition The object which is qualified by the property sought to be proved, is the 'object to be inferred,' also called the '*paksha,*' 'subject' or 'Minor term,' and the mere statement of this, without the mention of any reasoning, is what is called '*Pratijnā,*' 'Conclusion' As has been declared by the learned—'the statement constitutes the *pratijnā,* and its subject is the 'paksha'

*Obj* "If mere statement of the proposition, without any reasonings, were the *pratijnā,* then as it would not in any way contribute towards the proving of what is to be proved, it should not deserve being mentioned in the statement of an inferential argument, as say the *Bauddhas* 'The *hētu* or the inferential indicative, is that which indicates what is capable (of being indicated), and the assertion of the minor term, being incapable (of proving anything), is not capable of proving what is to be proved, even indirectly by the mere mention of what is sought to be proved"

In view of this objection the author has added—'*apadēçavishayam &c*' the '*apadēça*' is the *hētu,* the inferential indicative, the 'middle' term, and the conclusion is stated for the purpose of making the 'minor' term the subject, the substratum of the 'middle' term, as wherever that middle term may be used for the purpose of proving what is to be proved, it is always known to exist in the 'subject' of the conclusion Further, as the 'inferential indicative' is invariably found to inhere in a certain 'subject,' until this subjeet is mentioned, the 'indicative,' being without substratum, would not be operative, and the indicative being inoperative, what is sought to be proved could not be proved, hence in as much as the *Pratijñā* serves the purpose of pointing out the 'subject,' it helps by bringing up that which is the substratum of the 'indicative,' and thus by supplying the substratum for the 'indicative,' it makes this latter operative, and thus becomes a necessary accessory towards the proving of what is sought to be proved. To this

effect, the *Nyāyabhāshya* says 'If there were no *pratijñā*, the indicative &c being without substiatum would not be operative'

[Page 235] *Obj* "The substratum of the 'indicative' is learnt from the *Upanaya* (and hence the statement of the *Pratijñā* cannot be a necessary factor)"

*Reply* —This is not right, as until there is a statement of the *Pratijñā*, the *Upanaya* also is inoperative What the *Upanaya* does is to point out the capability of the 'indicative' to qualify the 'subject,' and the person seeking knowledge does not, in the very first instance, require the 'indicative' (or the means of proof), but in as much as it is the most important factor in what is to be proved, when this latter is sought after, the 'indicative' also is sought after for the purpose of proving it, and the capability of this indicative is sought after at the end of all, and hence it becomes necessary first of all to put forward the statement of what is to be proved, and the capability of the indicative does not come to be mentioned first, as at that time it is not wanted.

*Obj* —"The assertion *of the 'subject' being qualified by the property sought to be proved* is self-contradictory, as that which is not yet known (and is sought to be learnt by means of the Inference) cannot serve as a qualification"

*Reply* —True, that which is not known cannot be a qualification, but the 'property to be proved' is already known as existing in (qualifying) the *Sapaksha* (the *arrow* in the case in question), and it is put forward in the *Pratijñā* with a view to point out the fact of its qualifying the 'subject,' to the person who denies such qualification It is for this reason that this 'subject' has the real character of the '*paksha*,' the 'minor' term, specially as even though by itself it is already well known, yet as it is not so well known as qualified by the property sought to be proved, it becomes capable of being pointed out in that character (i e as qualified by that

property) Thus too have we the fact of the 'indicative' being a property of the 'subject' For instance, (in the case of the argument 'Word is evanescent because it is *caused*)' if it were mere *evanescence* by itself (and not as qualifying, *word*) that was sought to be proved, then the 'causedness' qualifying the word could not be a property of the 'subject', while this discrepancy ceases when the 'evanescence' *of the word* is made the object of to be proved This has been thus stated by the great teachers 'This consists in both—the *indicative* and the *indicated*, without either of the two, it would be the *indicated*, and not the *indicative*'

An instance of ***Prātijñā*** is next cited · '*Wind is* ***a*** *substance*',—in this we have the statement of the conclusion in the above form, wherein *wind* is spoken of as qualified by the character of 'substance,' which is sought to be proved for the benefit of one who, while knowing the wind, does not know that it is a substance

He proceeds to explain the sense of the qualification '*avirodhi*,' '*not incompatible*' *&c* That which the debater wishes to prove is the '*sādhya*', and it often happens that by mistake he may often wish to prove something that may be contrary to well-recognised facts of sense-perception, and hence if the *Prātijñā* were defined only 'as the particular statement of what is to be proved,' then the character of '*Pratijñā*' would apply even to such statements as would be contrary to well-recognised facts of sense-perception &c, as a matter of fact however no such statement can ever be a *Pratijñā*, because such a statement would be impossible to prove, and it is with a view to preclude such statements that the author has added the qualification in question And thus the definition of *Pratijñā* comes to be that it is *the statement of such object to be proved by inference as is not incompatible with well-recognised facts of sense-preception &c*, and when any object to be thus proved is not found to be so compatible then its statement is not *Pratijñā*

The sense of all this is that the character of the real *sādhya* does not depend upon the mere whim of the debater, it belongs only to that which *deserves* proof, and that alone is the '*paksha*' the "subject' or the 'minor term,' and others are only *false pakshas*

Examples of incompatibility with facts of sense-perception &c —(1)'*Fire is not hot*'—'not hot' means a negation of heat, and what is negatived is that which is known, and not what is absolutely unknown, as a matter of fact however *heat* can not be found anywhere else except in fire, and the cognition of heat in fire is not *inferential*, as when there is no sensuous cognition, Inference is not operative And if what is known by sensuous cognition is sought to be negatived by an inference which can be based only upon a fact of sense-perception, then such an inference, being opposed to the fact of Sense-perception, would be set aside by it, because of the objective having been taken up by the sensuous cognition

*Question* —"What do you mean by the objective being *taken up*"

*Answer* —What is meant by the objective of Inference having been taken up by the sensuous cognition is that this latter indicates the object in a manner contrary to that indicated by the former

*Question* —"What happens to the Inference when its objective has been thus taken up ?"

*Answer* —It cannot appear at all That is to say, when the sensuous cognition, which appears before any inference on the subject, being of a character that does not make it negatived or mistaken,—has pointed out the *heat* of the fire,—and this heat being thus taken up by this Sensuous Cognition, there can be no correct cognition of the *absence of heat* in it Any 'reason' that may be brought forward in support of such a 'conclusion' will be set aside by the very fact of its being brought forward to support such an absurd conclusion,

being incapable of bringing about any rightful cognition thereof, on account of its incompatibility with sensuous cognition; As has been declared—'In a case of opposition between sensuous and inferential cognitions, there can be no room for the latter, as before the very foundation of the latter came into existence, the objective is taken up by the former'

*Obj*—"As there is mutual contradiction between the said *Negativing* (of Inference) on the one hand, and the invariable concomitance (on which the Inference is based) on the other—that which is invariably concomitant cannot have any negation (cannot be negatived)"

*Reply*—If by 'invariable concomitance' here you mean the tripartite character of the argument, then it is not impossible for it to be negatived, as for instance, we find in the argument—'fire is not hot, because it is caused' If however you mean 'invariable concomitance' to consist in that tripartite argument whose objective is not negatived, and to hold that invariable concomitance is not negatived,—then we quite agree with you But it is for the purpose of indicating the fact of the objective not being negatived that the author has added the qualification of *compatibility with facts of sense-cognition &c*

*Question*—"To what does incompatibility with sense-cogntion &c pertain? Does it pertain to the 'subject' or to the 'reason'? It cannot pertain to the 'subject,' as this always retains its character, nor can it pertain to the 'reason,' as the 'reason' is always capable of proving its own objective; and as for other objectives, all things would be equally incompetent So the incongruousness must pertain to the propounder of the argument, as it is he who brings forward the Reason for proving something that does not form its objective"

*Answer*—If the 'incongruity' be meant to consist in—(1) the absence of the *capability of being cognised* of the fact put forward in the conclusion to be proved, (2) in the pro-

pounding of the argument in support thereof, and (3) the absence of capability (to prove),—then it would apply to the objective (i e the 'subject'—to which the first form of the incongruity would apply) and to the instrument (i e the 'Reason' to which the third form would apply) (as well as to the propounder who would be amenable to the second form)

*That 'Ākāça is dense' would be contrary to Inference* that very means of knowledge whereby *Ākāça* is cognised always proves its *eternality* and *nonpartite character*, hence to assert that it has its constituents densely packed would be contrary to the Inference pertaining to the very form of the 'subject'

*That the Brāhmana should drink wine would be contrary to scriptures* The meaning of this proposition would be that wine-drinking by the Brāhmana is not sinful In support of this conclusion 'milk' would be brought forward as the corroborative 'instance' And the non-sinful character of *milk-drinking* is cognisable by means of the scriptures consisting of Çrutis and Smrtis, and hence the same scriptures that would prove the *non-sinful* character of *milk-drinking* would also prove the *sinful* character of *wine-drinking*, and thus the declaration of the propriety of wine drinking for the Brāhmana would be contrary to the means of knowledge pertaining to the instance brought forward in its support

If the *Vaiçeshika* were to make the declaration that the effect exists before it is produced by the cause, he would be contradicting his own philosophical tenets The *Vaiçēshika* engages in all discussions, resting upon the authority of the *Vaiçēshika* philosophy And if he were to make the above declaration, it would be contrary to the *Vaiçēshika* theory that prior to its production by the cause the effect has no existence

*That the word is not expressive would involve a self-contradiction* If the word is not expressive of meaning,

then it would be impossible to make use of any *words* to express the idea that *words* are not expressive If such words are used to this effect, then by this very use would the expressiveness of words become admitted, and hence the said declaration would be self-contradictory

*Objection* "The 'scripture' being nothing more than the statement of truths cognised by means of sensuous and inferential cognitions, a contradiction of it would only be a contradiction of sensuous and inferential cognitions, and the expressiveness of words being only an inference based upon concomitance (of the word and the meaning expressed by it), a negation of this expressiveness would only be a contradiction of Inference, and such being the case, why should the author have made separate mention of the contradiction of 'scriptures' and 'self-assertion'?"

*Reply* Scriptures are often found to be based upon mere semblance of truth, as we find in the case of the scriptures of the Buddha and others And if the Buddha were to declare that all things are not momentary, what he would be contradicting would be his own scriptures, and not any truth (of perception or inference) As for one's own assertion that too may some times be based upon an untruth, and hence its contradiction need not necessarily involve a contradiction of, truths (of perception or inference)

*Text (114) The 'Apadēça' consists in the statement of the 'inferential indicative' That which is concomitant with the 'subject' of inference, being known to be so concomitant at all times, and with all individuals of the class to which the 'subject' belongs,—and which, at all times, is never concomitant with the contradictory of that subject,—has been spoken of as the 'inferential indicative', and it is the statement or putting forward of this that constitutes 'apadēça' As for instance,*

*(in the same argument) the assertion—'because wind has an action and is endowed with certain qualities' Here we find that 'action' and 'quality' exist in the 'subject' (the wind), and the latter in all individuals of the class to which it belongs, and the former not in all of them, and both of these are never found in anything that is 'not substance' Hence the statement as to the presence of these in wind constitutes the 'apadēça' (in the argument cited) (IX ii I)*

## Commentary

Of the declaration that 'wind is a substance,' the *apadēça* consists in the assertion 'because it has action,' which puts forward the 'inferential indicative', and so also is the mention of 'presence of qualities,' which is another 'inferential indicative' The author has cited these two instances, in order to show that the character of 'hētu,' 'reason' or 'inferential indicative' belongs to such a thing as exists only in a part of the *sapaksha* (*i e* in the case in question the '*sapaksha*' consists of all such substances as are known to be active, and 'action' is found only in a certain part of this class, *i e* all substances are not always active, but action can never exist apart from a substance), as well as to that which pervades over the whole of it (*i e* one quality or another is *always* present *in all* substances)

The author shows that the aforesaid definition of the 'inferential indicative' applies to the instances cited 'Presence of qualities' belongs to the 'subject,' as also to all members of the class 'substance' to which that subject belongs, and which is the '*sapaksha*', and 'presence of action' while belonging to the subject, belongs only to some members of the class 'substance', *i e* to those substances alone that have material bodies, and yet both of these—'action' and 'quality'—are never found in anything that is *not a substance*, which 'non-

substance' would be the '*vipaksha*' (that wherein the inferential indicative is universally acknowledged to be non-existent) And the putting forward of both of these by means of the assertion—'because it has action,' or 'because it has qualities'—constitutes what is known as '*apadēça*,' or the Reason for the Declaration, being as it is free from all discrepancies of reasoning

*Text (115) By this it is implied that such statements as are either (1) 'asiddha' (unknown, unproved), or (2) 'viruddha' (contrary), or (3) 'sandigdha' (doubtful), or (4) 'anadhyavasita' (unascertained), have not the character of the true 'reason' (or 'indicative')*

*(1) Of these the 'unknown' is of four kinds—(a) 'unknown to both,' (b) 'unknown to one of the two,' (c) unknown in the form wanted, and (d) 'the unknown—subject of-inference' (a) The 'unknown to both' is that which is not known to both the arguer and the person to whom the argument is presented, e g, the argument—'sound is evanescent, because it is made up of parts' (b) As an example of the 'unknown to one of the two,' we have—'sound is evanescent because it is an effect' (c) We have the 'unknown in the form wanted' when what is meant to be indicated is fire by the presence of smoke, but what is put forward as the 'reason' is steam, which is not known in the form of smoke (d) We have the 'unknown—subject-of inference' in the argument—'Darkness in an earthy substance, because it is black in colour'*

*(2) That which, while not subsisting in the subject of inference, does not subsist in any individual of the same class, and subsists in its contradictories,—is what is known as the 'viruddha,'*

*'contrary' reason, as it proves something quite contrary to the desired conclusion, as an example of this we have the reasoning—'This animal is a horse, because it has horns'*

(3) *That which, while subsisting in the object of inference, subsists in things of the same kind as that as well as in those of other kinds, is what is known as 'sandigdha,' 'Doubtful,' as it creates a doubt in the mind, e g, 'this animal is a cow, because it has horns' Some people hold that when in any subject there is a collision of two 'contrary' indicatives explained above there arises a doubt, and this is another kind of the 'Doubtful' reason, as for example in regard to the mind we find that the two reasons—(1) 'because it has motion' and (2) 'because it cannot be felt by touch'—are put forward as indicative of its corporeal and non-corporeal character respectively*

Objection "*This would be a case of the 'asādhārana' reason, because the two reasons cannot reside together either in the 'subject' or in its contradictory,—just like 'non-visibility' and 'perceptibility'*"

Reply *We shall explain later on that for this very reason the reasoning in question is what is known as the 'anadhyavasita,' 'unascertained'*

Objection "*In the scriptures (the Sūtras) we find it mentioned in many places that two contrary cognitions constitute the cause of doubt*"

Reply *Not so, as doubts always arise from the dual perception of objects That is to say, a Doubt is always produced by the perception of the dual character of an object, and when both factors of the duality would be of equal authority, they would*

*contradict each other, and as such would not give rise to any definite cognition, but they could not be the cause of any doubt, as a matter of fact, in the instance cited, there is no equality of authority in the two factors of the duality, as one of the two conclusions of the inference would always be such as is denied by the scriptures, and hence this (that has been put forward as an instance of another kind of the 'doubtful' reason) would be only another kind of the 'contrary' reason*

(4) *That which subsists in the 'subject' of the inference, but not in any other object either of the same kind or any other, is one that is not recognised by either party, and as such, giving rise to uncertainty, it comes to be known as the 'unascertained' reason, as for instance—'the effect is an entity, because it is produced This is implied in the sūtra—'aprasiddhónapadēçaḥ'*

Objection "*This distinctive feature has been spoken of in the scriptures as the cause of doubt, and the reason for this is that the distinctive feature of a thing serves to distinguish it from like as well as unlike objects (and hence the 'unascertained,' comes within the sūtra that speaks of the 'sandigdha,' and not within that which speaks of the 'aprasiddha' ('unknown')*"

Reply *Not so, because of the meaning (of the sutra) being different That is to say, (the author of the sūtra having made the declaration that there arises a doubt as to whether the audible object, sound, is a substance, or a quality or an action)'—the opponent has retorted that, in as much as the distinctive feature (of audibility) is found*

*in sound alone, there can be no doubt, and to this the author of the sūtra has replied by pointing out that the distinctive feature of 'audibility' does not belong specifically to either the Substance alone, or to the Quality alone, or to Action alone, in fact, it is common among all these, as in each of these three (substance, quality and action) we find distinctive features that distinguish them from like as well as unlike objects, (and for this same reason, 'audibility' also would be a feature that would belong in common to substance, quality and action, and hence it would not give rise to a doubt), and thus what the sūtra has done is to point out (that in the said manner, 'audibility' might very well be regarded as leading to an uncertainty or doubt) and not that a distinctive feature becomes a cause or source of doubt For, if it were not, then, there would be doubts with regard to all the six categories For these reasons we conclude that Doubts always arise from the cognition of features common to more than one thing*

## Commentary

The above definition of *apadēça* serves to set aside such false "reasons" as the '*asiddha*' etc The qualification 'concomitant with the subject of inference' shows that the *unknown* reason is not a true 'reason,' the qualification 'known to exist in an object of the same kind as the subject' shows that the '*contrary*,' and the '*unascertained*' are not true 'reasons', and the qualification 'that which never exists in that which is the contradictory of the subject' sets aside the 'Doubtful' from the category of true 'reason'

(1) Of the four false reasons, the author proceeds to describe the 'unknown' The 'unknown' or '*asiddha*' is of

four kinds—(1) 'Unknown to both' etc (1) The 'unknown' to both' or '*ubhayāsiddha*' is that which is not known either to the propounder of the argument or to one for whose benefit the argument is put forward, as an example of this we have the reasoning—'sound is evanescent *because it is made up of parts*', as the fact of sound being made up of parts is not known either to the person putting forward the argument, or to his opponent

(2) As an example of that which is 'unknown to one of the two' or '*Anyatarāsiddha*,' we have the reasoning—'Sound is evanescent, *because it is an effect*,' where though in reality (according to us) Sound has the character of an effect, yet this fact is not known or recognised by the *Mīmānsaka*, who denies the evanescent character of sound, and against whom the argument is brought forward, such a reason cannot establish any conclusion, until it has itself been proved (by some other reasoning),

(3) The 'unknown in the form wanted' or '*Tadbhāvāsidhha*' we have in the argument where the presence of *steam* is put forward as the reason for proving the *existence of fire*, which was really meant to be proved by the mention of the presence *of smoke*, as 'steam' is not known in the form or character of 'smoke'

(4) The 'unknown subject of Inference' or '*anumēyāsiddha*' we have in the argument—'Darkness is an earthy substance, *because it is black in colour*,' where as a matter of fact there is no such substance as 'Darkness,' as what is perceived is mere blackness impressed upon some substance or other, consequently the reasoning that 'Darkness is an earthy substance because it is black in colour' affords an instance of the 'unknown-subject,' the '*anumeyāsiddha*' or '*āçrayāsiddha*,' the compound '*anumēyāsiddha*' is to be explained as *Bahuvrīhi*' 'that (reasoning) of which the subject (*anumēya*) is not known,, and as such though the proper form would have been '*asiddhānumēya*,' yet, in as much as the compound belongs to the

same class as '*āhitāgni*,' the precedence of the participial factor becomes a matter option (*vide* Pānini II ii 37) Just as the Reason is 'unknown to any one of the two' or 'unknown to both,' so in the same manner the 'unknown subject' also may be of two kinds—*i e*, unknown to one or both of the disputants Secondly, just as the 'Reason is unknown' by one or both disputants either not knowing it, or having a doubtful knowledge of it, or having a mistaken idea of it,—so in the same three ways would the 'subject' also be 'unknown' Thirdly, in the case of the 'Reason' we find that—(1) it is 'unknown to one disputant who is not uncertain about it, simply because he has no conception of it, while to the other disputant it is unknown' because of his having only a doubtful knowledge of it,—(2) or that to the former it is 'unknown' simply because he has no knowledge of it, while to the latter it may be 'unknown' on account of his having no right conception of it,—(3) or that to the former it is 'unknown' as he has no certain knowledge of it, while to the latter it is 'unknown' because of his having no knowledge of it,—(4) or that to the former it may be 'unknown' because of his having a mistaken knowledge of it, while to the latter it is 'unknown' because of his knowledge of it being uncertain, and all these diversities would be found in the case of the 'unknown subject' also

As for the 'unknown' qualification' &c, these are included in the 'unknown to one or to both', and hence our author does not mention them separately

(2) The author proceeds to describe the 'contrary' false Reason '*Contrary*, &c, &c' Sometimes it may so happen that a man seeing a certain animal in the forest would infer thus 'this animal is a horse because it has horns,' and in this case, we know that horns are, in reality, found to belong, not to any horse, but to animals other than the horse, *viz*, the cow, the buffalo and the like, and by reason of this concomitance the *presence of horns* would prove something totally different from the 'horse', hence proving something quite contrary

यो ब्राह्मणेन शूद्रकन्यायां समुत्पन्नस्स यदि यथोक्तजातकर्मादिभिः संस्कारैस्संस्कृतस्तदा तस्मादेव संस्कारादापित इत्युच्यते संस्काराभावे पुनर्दास इति ।

गोपाललक्षणमाह ।

**क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः ॥**
**स गोपाल इति ख्यातो भोज्यो विप्रैर्न संशयः॥२३॥**

क्षत्रियाच्छूद्रकन्यायामुत्पन्नः पुनः स गोपाल इति लोके ख्यातो नाम्ना वृत्त्या च प्रसिद्ध एवेति न संशयः स विप्रैर्भोज्यान्नो भवति । यद्यप्येतदनन्तरं कुलमित्रलक्षणं वक्तुमुचितं तथापि तस्यावयवसामर्थ्यादेव पितृपितामहादिमित्रस्य प्रतीयमानत्वादवचनेऽपि न न्यूनतेति । आचार्यस्तु वैश्याच्छूद्रकन्यायामुत्पन्नः कुलमित्र तथैव च प्रक्रमादित्याह ॥

अर्द्धसीरिलक्षणमाह ॥

**वैश्यकन्यासमुद्भूतो ब्राह्मणेन तु संस्कृतः ॥**
**सोत्यर्द्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः॥२४॥**

यो ब्राह्मणेन वैश्यकन्यायामुत्पन्नः स यथोक्तसंस्कारसंस्कृत एवार्द्धिक इतिज्ञेयः स विप्रैर्भोज्यान्न इत्यत्र संशय एव नास्ति । अर्द्धसीरिण एव संज्ञांतरप्रदर्शनाय शब्दान्तरेण निर्देशः । एतदनन्तरमात्मनिवेदकलक्षणं वक्तव्यं तदप्यवयवार्थस्य स्पष्टतया वाङ्मनःकर्मभिस्तवाहमिति वादिनमेवाचष्ट इति नोक्तम् । अत्राप्याचार्योऽर्द्धिकसाहचर्यात् क्षत्रियायां ब्राह्मणादुत्पन्नमात्मनिवेदकमाह । न चैषा शूद्रत्वोक्तिर्न युक्ता द्विजापत्यतया शूद्रादुत्कृष्टत्वात् । अस्तु वात्र कथंचिद्वैश्यायां ब्राह्मणादुत्पन्नस्य आर्द्धिकस्य तु द्विजत्वादत्यन्तायुक्तैव तदुक्तिरितिचेत् । उच्यते । विजातीयकन्याविवाहस्य कलौ निषेधेनाऊढात्वादिविशेषानुपादानादनूढास्वेव तासु व्यवहारो व्यभिचारोत्पन्नतया तदुक्तिः ।

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इतिस्मरणात् । कुण्डासुतासूत्पन्नाना योगिना निषादादिसंज्ञान्तराभिधानाच्च । नचैवं कुण्डगोलकयोरब्राह्मण्यापत्तिरिष्टापत्तेः तत्कन्यास्वप्यनुढासु द्विजात्युत्पन्नानामपि शूद्रसधर्मत्वमेव । नच कलावस वर्णकन्यानामृतुव्यापनेऽपि गमननिषेधान्नापितादनुत्पत्तेरेव भोज्यान्नता विवेको न सम्भवतीति वाच्यम् । पूर्वपूर्वयुगोत्पन्नानामप्यत्रानुवृत्त्यातिक्रान्तनिषेधेभ्योऽप्युत्पत्त्या वा विचारसम्भवादिति ॥

यदन्नभोजने प्रायश्चित्तमुक्तं तेषां जलादिपानेऽपि तदाह ॥

**भाण्डस्थितमभोज्यानां जलं दधि घृतं पयः ॥**
**अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥२५॥**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति ।**
**ब्रह्मकूर्चोपवासेन याज्या वर्णस्य निष्कृतिः ॥२६॥**

ये पूर्वमभोज्यान्ना. कदर्यादयो गणितास्तेषां भाण्डस्थजलदधिघृतपयसामन्यतममकामतो यो भुङ्क्ते तस्य प्रायश्चित्तं कथं स्यादित्याकाङ्क्षायां ब्राह्मणादीनामन्यतम एवंविधो यः पर्षदमुपसर्पति तस्य च पर्षदा ब्रह्मकूर्चोपवासेन ब्रह्मकूर्चार्थमुपवासो ब्रह्मकूर्चोपवासस्तेन पूर्वेद्युरुपोष्य परेद्युराहारान्तरं परित्यज्य ब्रह्मकूर्चपानेन निष्कृतिः शुद्धिर्योज्या । तत्र कालविशेषमाह जाबालिः ।

चतुर्दश्यामुपोष्याथ पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमिति स्मृतम् ॥

इति । देशमप्याह शातातपः ।

नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च ।
तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेद् इति ॥

शूद्रस्य विशेषमाह ॥

**शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति ॥**
**ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत् ॥ २७ ॥**

मूत्र गोः पलं चतुःसौवर्णिकं पल सुवर्णाश्चत्वार इति स्मरणात् पर्वद्वयात्मकस्याङ्गुष्ठस्यैक पूर्वार्द्धमुच्यते तन्मात्र गोमयम् । शेष स्पष्टार्थम्। एतत्सर्वं यथोक्तपरिमाण पलाशाद्यन्यतमपात्रे दद्यात्समानयेत् । तदाह प्रजापतिः ।

पलाश पद्मपत्र वा ताम्रं वाथ हिरण्मयम् ।
पात्र गृहीत्वा तस्मिंस्तु पञ्चगव्य समानयेत् ॥

इति । अशक्त प्रति परिमाणान्तरमाह वृद्धपराशरः ।

गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ।
गोमूत्रवद्घृते ज्ञेयास्तदर्द्धञ्च कुशोदकम् ॥ इति ॥

गोमूत्रादिग्रहणे मन्त्रानाह ॥

**गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥**
**आप्यायस्वेति च क्षीरं दधिक्रावूण्यस्तथा दधि॥३२॥**
**तेजोऽसिशुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥**
**पञ्चगव्यमृचापूतं स्थापयेदग्निसन्निधौ ॥ ३३ ॥**

गायत्र्यादिऋचा ग्रहणेन पूत पवित्र पञ्चगव्यमेकीकृत्याग्निसन्निधौ स्थापयेत् । यद्यपि तेजोसि देवस्यत्वेत्यनयोर्यजुष्ट्वादृचेति साधारण-व्यपदेशो नोपपद्यते तथापि सृष्टीरुपदधातीतिवद् भूम्ना तत्सिद्धिरिति न दोषः । अनन्तरकर्तव्यमाह ।

**आपोहिष्ठेति चालोड्य मानस्तोकेति मन्थयेत् ।**

आपोहिष्ठेत्येकैव ऋक् ऋचेत्युपक्रमात् । तृचः इत्याचार्या प्रायेण तथा विनियोगात् ॥

होमसाधनमाह ॥

**सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥**
**एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥ ३४ ॥**

सप्तप्रवरा येभ्यस्तेऽष्टादयोऽच्छिन्नाग्राः शुक्लास्त्विषो हरितवर्णा दर्भास्तैरुद्धृत्य यथाविधि वक्ष्यमाणमन्त्रैस्तत्पञ्चगव्यं जुहुयात् । यत्तु

स्थापयित्वा तु दर्भेषु पलाशैः पत्रकैरथ ।
तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम् ॥

इतिप्राजापत्यवचनबलात्पलाशपत्रेण होम इति व्याख्यातम् तत्पालाशो हरितो हरिदिति कोशादर्शननिबन्धनमिति मन्तव्यम् । तथात्वे बहुवचनासंगतिः । तस्मात्पलाशैर्हरितैरित्यर्थोऽवगन्तव्य इति ॥

होममंत्रानाह ॥

**इरावती इदंविष्णुर्मानस्तोके च शंवती ॥**
**एताभिश्चैव होतव्यं हुतशेषं पिबेद् द्विजः ॥ ३५ ॥**

इरावती धेनुमती, इदं विष्णुर्विचक्रमे, मानस्तोकेतनये, शंवती शशब्दोपलक्षिता शचोदेवीरभिष्ट इत्येषा शंवतीः पारयते त च चिप्तिवचो यथा । अद्यावत यमावत ययेवेनमिशुवत इति वात्तचोक्षेप एताभिभिश्चकारादग्नये सोमायेति नाममन्त्रेण सावित्र्या प्रणवेनाग्नये स्विष्टकृते चेत्येतैरपि तन्त्रैर्हुत्वा हुतशेषं द्विजः पिबेत् । द्विजग्रहणं वक्ष्यमाणमन्त्रविषयनियमाय । स्त्रीशूद्रयोस्तूष्णीमेव भवति तथा च प्रजापतिः ।

अग्नये चैव सोमाय सावित्र्या च तथैवच ॥
प्रणवेन तथा हुत्वा स्विष्टकृता तथैवच ॥

इति ।

पानेतिकर्तव्यतामाह ॥

**आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥**
**उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु ॥ ३६ ॥**

हस्तेनालोड्य यज्ञियकाष्ठेन निमथ्योभयाभ्यां हस्ताभ्यामुद्धृत्याशब्दं पिबेत् प्रतिक्रियं प्रणवावृत्तिः ।

ननु गोवधाद्युत्पन्नादृष्टरूपप्रत्यवायनिवृत्तिरस्तु प्रायश्चित्तेन अभो-

क्ष्यभोजनादिषु त्वाहारपरिणामेनावयवोपचयरूपस्य दृष्टस्य कथं तेन निवृत्तिरित्यत आह ।

**यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ॥**
**ब्रह्मकूर्चं दहेत्सर्वं प्रदीप्तोऽग्निरिवेन्धनम् ॥ ३७ ॥**

भक्षितमभक्ष्यं यथा त्वगस्थ्यादिरूपेण परिणम्य देहिनां देहे पापमशुचिभूत्वा तिष्ठति तथा ब्रह्मकूर्चमपि पीतं तेन तेन रूपेण परिणतं सत्तंतमवयवोपचयं दहतीति दृष्टद्वारैवास्य शोधकत्वं तत्र दृष्टान्तो यथाग्नेरिन्धनदहने नादृष्टमवान्तरव्यापारः किन्तु तत्संयोग एव तथा प्रकृतेपीति । अनेनाभक्ष्यभक्षणे ब्रह्मकूर्चपानमावश्यकमित्युक्तं भवति ।

नन्वेवं दशमूलीकषायपानवदस्यादृष्टरूपप्रत्यवायनिवर्तकत्वं स्यादित्यत आह ॥

**पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम् ॥**

वरुणादिदेवताधिष्ठितत्वेन त्रिष्वपि लोकेषु प्रकारेषु दृष्टरूपदुष्टावयवनाशनादृष्टरूपप्रत्यवायनाशनापूर्वादृष्टजननरूपेषु पवित्रं सामर्थ्यमिति ।

ता देवता आह ॥

**वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ॥ ३८ ॥**
**दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ॥**

गोमूत्रादीनां पञ्चानां वरुणादिपञ्च देवता अधिष्ठात्र्यो भवन्ति कुशोदकस्य तु कुशाधिष्ठातारो ब्रह्मविष्णुमहेशा एवाधिष्ठातारः अत एव ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्द्दनः ।
कुशाग्रे शङ्करप्रोक्त इत्यभिधाय ।

शरीरेष्वथ तिष्ठन्ति कुशोत्थजलबिन्दवः ।
तस्य नश्यन्ति पापानि गरुडेनेव पन्नगाः ॥

इत्यभिहित विष्णुधर्मोत्तरे।
स्वोच्छिष्टजलपाने प्रायश्चित्तमाह॥

पिवतः पतितं तोयं भाजने मुखनिःसृतम्॥
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रयणं चरेत्॥३६॥

मुखसयोजिते भाजनेपिबतः पुरुषस्य मुखान्निःसृत तोय यदि पतित तर्हि तदपेय विजानीयाद्भुक्त्वा चान्द्रायण चरेत्। पीतावशिष्टजलपाने तु त्रिरात्रम् तदाह शखः।

पीतावशेषित पीत्वा पानीयं ब्राह्मणः क्वचित्।
त्रिरात्र तु व्रत कुर्याद्वामहस्तेन वा पुनः॥

इति। ब्राह्मणाद्युच्छिष्टजलपानेतूशनाः। ब्राह्मणोच्छिष्टानामपः पाने षोडश प्राणायामान् धारयेत्क्षत्रिये त्रिशद्वैश्ये चत्वारिंशच्छूद्राणा कुशवारिपाने त्र्यह बुद्धिपूर्वचेद् त्र्यह चतुरह पञ्चरात्र सप्तरात्र पञ्चगव्य पान क्रमेणेति।

शवाद्युपहतकूपादिजलपाने प्रतिवर्णं प्रायश्चित्तमाह।॥

कूपे च पतितं दृष्ट्वा श्वशृगालं च मर्कटम्॥
अस्थिचर्मादि पतितं पीत्वाऽमेध्या अपो द्विजः॥४०॥
नारं कुकूणकं काकं विड्वराहं खरोष्ट्रकम्॥
गवयं सौप्रतीकं च मायूरं खाड्गकं तथा॥४१॥
वैय्याघ्रमार्क्षसैंहं वा कूपेयदि निमज्जति॥
कूपपंक्तस्यपि दुष्टस्य पीतं स्यादुदकं यदि॥४२॥
प्रायश्चित्तं भवेत्पुंसः क्रमेणैतेन सर्वशः॥४३॥

यस्मिन् कूपे श्वशृगाल श्वा कुक्कुरः शृगालः क्रोष्टा तयोः समाहारः श्वशृगाल मर्कट वानर पतित दृष्ट्वा अस्थिचर्मआदिशब्दान्मूत्रपुरीषादि वा पतित दृष्ट्वा अमेध्या अपो यो द्विजः पिबति तस्य वक्ष्यमाण प्रायश्चित भवेदिति सवधः। तथा नारं मानुष काक वायसोय विड्वराहखरोष्ट्रशद्वेषु

तद्धितलोप आर्षः।गवय शवरःसुप्रतीकश्चित्रमृगः मयूरः केकी खड्गो गराडको व्याघ्रो द्वीपी ऋक्षो भल्लूकः सिंहः पञ्चास्यः कपिरपि मर्कटावान्तरजातिः एतत्सम्बन्धि कुणपं यस्मिन् तडागे निमज्जति तस्य दुष्टस्य तडागस्य दकं यदि पीतं स्यात्तदा तस्य सर्वशः सर्ववर्णस्य पुंसो वक्ष्यमाणं प्रायश्चित्तं क्रमेण भवति ॥

तदेव प्रायश्चित्तमाह ।

**विप्रः शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ।**
**एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति ॥ ४४ ॥**

पूर्वोक्तशवाद्युपहतकूपादेर्जलपाने विप्रादयः क्रमात्त्रिद्व्येकरात्रनक्तैः शुध्यन्ति तु शब्दादन्ते पञ्चगव्यप्राशनमपि भवति तदाह विष्णुः ।

मृतपञ्चनखात्कूपादत्यन्तोपहतमुदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेद्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वे चान्ते पञ्चगव्यं पिबेयुरिति यदि तत्रैव शवं शीर्यति तदा विशेषमाह देवलः ।

क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतम् ॥

इति । इदं च सकृत्पाने अभ्यासेत्वाह हारीतः ।

क्लिन्ने भिन्ने शवे तोये तत्रस्थं यदि तत्पिबेत् ।
शुद्धौ चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा
यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः ।
जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यति ॥

इति ।कामाकामाभ्यां चान्द्रतप्तकृच्छ्रयोर्व्यवस्था। चण्डालकूपादिजलपाने त्वापस्तम्बः ।

चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत् ।
चरेत्सांतपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः शूद्रे पादं विनिर्दिशेत् ॥

इति । अकामतस्तु देवलः ।

यस्तु चण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति ॥

इति । म्लेच्छादिपुष्करिण्यादिजलपानेऽप्यापस्तम्बः ॥

म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ।
तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा ।
अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः ॥

इति ।

इदानीमभोज्यान्नविशेषेण तदन्नभोजने प्रायश्चित्तविशेषमाह ॥

**परपाकनिवृत्तस्य परपाकरतस्य च ॥**
**अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् ॥ ४५ ॥**

परपाकनिवृत्तादयस्त्रयोऽपि वक्ष्यमाणलक्षणाश्चकाराद्वृथापाकोऽप्येषामन्नं भुक्त्वा द्विजश्चान्द्रायणं कुर्यात् । इदं चात्यन्ताभ्यासविषयमवगन्तव्यम् । सकृद्भोजने तु भरद्वाज आह ।

निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्यादिनमेकमभोजनम् ॥

इति । निराचारो विहितपञ्चमहायज्ञानुष्ठानरहितः पाकनिवृत्तो निषिद्धाचरणः सर्वदा परान्नभोजनशीलः इदमपचस्याप्युपलक्षणं वृथापाकान्नभक्षणे त्वाह शातातपः ।

वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणायामांस्त्रिरभ्यस्य घृतं प्राश्य विशुध्यति ॥

इति ।

न केवलमपचान्नभोजने प्रत्यवायोऽपि तु तस्यान्नदानेऽपीत्याह ॥

**अपचस्य च यद्दानं दातुरस्य कुतः फलम् ॥**

**दाता प्रतिगृहीता च द्वौ तौ निरयगामिनौ ॥४६॥**

अपचस्यापचाय यद्दान चतुर्थ्यर्थे षष्ठी बहुलानुशासनात् अस्य दातु फल कुतः यतस्तावुभावपि दातृप्रतिगृहीतारौ निरयगामिनौ इति ।

परपाकनिवृत्तस्य लक्षणमाह ॥

**गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ॥**
**परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥ ४७ ॥**

दारकाले दायाद्यकाले गृहपतौ वा प्रेते योऽग्निमाधायात्मनि तमग्निसमारोप्य तस्मिन्नग्नौ पञ्चमहायज्ञान्न निर्वपेदसौ परपाकनिवृत्त. पर उत्कृष्टो वैश्वदेवाद्यर्थं गृह्या नौ क्रियमाणः पाकः परपाकस्तस्मान्नि वृत्तः परपाकनिवृत्त इति मुनिभिरुच्यते । अग्नेः सर्वदात्मसमारोपणेन पञ्च-महायज्ञादिसाधनत्वाभावात् ।

परपाकरतस्य लक्षणमाह ॥

**पञ्चयज्ञान्स्वयं कृत्वा परान्नेनोपजीवति ॥**
**सततं प्रातरुत्थाय परपाकरतस्तु स ॥ ४८ ॥**

यस्सतत प्रत्यह प्रातरुत्थाय पञ्चमहायज्ञान्स्वय कृत्वा परान्ने नैवोपजीवति स परपाकरत इत्युच्यते ।

परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृते ॥

इतिनिषेधातिक्रमात् ।

अपचस्य लक्षणमाह ॥

**गृहस्थधर्मा यो विप्रो ददाति न विवर्जितः ॥**
**ऋषिभिर्धर्मतत्वज्ञैरपचः परिकीर्तितः ॥ ४९ ॥**

यो गार्हस्थ्यमास्थितोऽप्यन्नदानादिवर्जितः केवलमुदरम्भरिरेव सोऽ-पच इति मुनिभि. परिकीर्तितः । तथा श्रूयते "केवलाघोभवतिकेवलादी" ति ननु इक्श्तिपौधातुनिर्देश इति वार्त्तिकाद्ददातिशब्दो धातुनिर्देशमेव

चरति न तु धात्वर्थनिर्देशमितिचेत् सत्य। यजतिषु येयजामहं करोतीत्यादिष्वर्थनिर्देशोयमितिप्रत्ययदर्शनात् । वृथापाकलक्षणमाह वृहस्पतिः ।

यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते ।

अन्न तस्य न भोक्तव्य वृथापाको हि स स्मृतः ॥ इति ।

नन्वेवं कलौ कस्यापि भोज्यान्नता न स्यादेवप्रायत्वात् सर्वेषामित्यत आह ॥

**युगे युगे तु ये धर्मास्तेषु तेषु च ये द्विजाः ॥**
**तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः॥५०॥**

अयमभिसन्धिः । युगस्वभावप्रयुक्ताया अधर्मप्रवृत्तेरपरिहार्यत्वह्निमादालस्यादिपुरुषप्रयुक्तायास्त्ववश्यपरिहार्यत्वेन प्रायश्चित्ताभिधानस्यार्थवत्त्वान्नातिप्रसङ्गः इति । पदार्थस्तूपवर्णित एव प्राक् ।

एव केषु चिदुपपातकेषु प्रायश्चित्तमभिधाय जातिभ्रंशकरेषु ब्राह्मणतिरस्कारप्रायश्चित्तमाह ॥

**हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः ॥**
**स्नात्वा तिष्ठन्नहः शेषमभिवाद्य प्रसादयेत् ॥५१॥**

यो ब्राह्मणस्य भर्त्सनाय हुङ्कार प्रयुङ्क्ते यो अभिवाद्ययोर्विद्यादिगरिष्ठस्य त्वमित्येकवचन प्रयुङ्क्ते स तत्कालमेव स्नात्वा यावदस्तमय निराहारि स्थित्वासन्ध्याया तमभिवाद्य प्रसादयेत् । तथा च मनुः

हुङ्कार ब्राह्मणस्योक्त्व त्वङ्कार तु गरीयसः ।

स्नात्वा नाश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥

इति । यद्यपि ब्राह्मणस्य रुज. कृत्यमिति मनुना ब्राह्मणताडनमेव जातिभ्रंशकरेषु अभिवाद्यप्रसादयेदितिपरिगणित न हुङ्काराद्यपि तथा मानसदुःखोत्पादकत्वात्तस्यापि जातिभ्रंशकरत्वमविरुद्धमिति ।

ब्राह्मणताडनादौ प्रायश्चित्तमाह ॥

**ताडयित्वा तृणेनापि कण्ठे बध्वापि वाससा ।**

**विवादे वापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥५२॥**

तृणताडनादीनां शरीरानुपघातकत्वेपि मानसोपघातकत्वेपि प्रायश्चित्तनिमित्तत्वमित्यपिशब्दार्थः । गर्वातिशयेनैतत्करणे तूपवासोऽपि । तदाह बृहस्पतिः ।

गुरुं त्वङ्कृत्य गर्वेण विप्रं निर्जित्य वादतः ।
ताडयित्वा तृणेनापि प्रसाद्योपवसेद्दिनम् ॥

इति । अभ्यासे तु बौधायनः ।

वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥

इति । पादस्पर्शावाच्यवचनयोः प्रायश्चित्तमाह स एव ।

पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया ।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ।
अवाच्यं ब्राह्मणस्योक्त्वा प्रायश्चित्तं विधीयते ।
कृच्छ्रातिकृच्छ्रं जित्वा तु प्रणिपत्य प्रसादयेत् ।
आक्रोशमनिशं कृत्वा कृच्छ्रं कुर्वीत मानवः ॥

इति ।

विप्रावगूर्णादौ प्राश्चित्तमाह ॥

**अवगूर्य त्वहोरात्रं त्रिरात्रं क्षितिपातने ।**
**अतिकृच्छ्रं च रुधिरे कृच्छ्रोऽभ्यंतरशोणिते ॥ ५३ ॥**

क्रोधावेशेन ब्राह्मणताडनाय दण्डाद्युपघाताभ्यामहोरात्रमुपवसेत् । ब्राह्मणं भूमौ निपात्य त्रिरात्रमुपवसेत् । प्रहारेण रुधिरोत्पत्तावतिकृच्छ्रमभ्यन्तरशोणिते प्रवाहमन्तरेण घनीभूतरुधिरे प्रहारे कृच्छ्रं च चरेत् । त्वग्भेदादौ प्रायश्चित्तमाह बृहस्पतिः ।

काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।
अस्थिभेदेऽतिकृच्छ्रस्तु पराकस्त्वगकर्तने ॥

इति । तदेतत्समानजातीयस्यविजातीयस्य तु विशेषमाह प्रजापतिः ।

द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा ।
क्षत्रविट्शूद्रजातीनां ब्राह्मणस्य वधे व्रतम् ॥

इति देवाद्याक्रोशने तु सुमन्तुः । देवर्षिगोब्राह्मणाचार्यमातापितृनरेन्द्राणां प्रतिषेधने आक्रोशने जिह्वां दहेद्धिरण्यं दद्यादिति । प्रतिषेधनं निन्दनमाक्रोशो गालिदानम् ।

इदानीं चाभिमतमतिकृच्छ्रलक्षणमाह ॥

**नवाहमतिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ।**
**त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते ॥५४॥**

यो नवाहोरात्रं पाणिः पूर्यते यावतान्नावदन्नेन तद्भोजनमस्मिन्निति पाणिपूरान्नभोजनः स्यात्प्रसृतिपरिमितान्नभोजन इति यावत् ।

यस्मिंश्च त्रिरात्रमुपवासः स्यात्स दशाहसाध्योऽतिकृच्छ्र इत्युच्यते । अतिकृच्छ्रशब्दस्यानुगतार्थतां स्पष्टयितुं पुनस्तेनैव विशेषेण ॥

नन्वन्यान्यपि जातिभ्रंशकराण्यघ्रेयघ्राणादीनि सन्ति तत्र किं प्रायश्चित्तमित्यत आह ॥

**सर्वेषामेव पापानां संकरे समुपस्थिते ।**
**दशसाहस्रमभ्यस्ता गायत्री शोधनं परम् ॥ ५५ ॥**

सर्वत्वमाधिवारिकमितिन्यायेन पूर्वाधिकृतानां जातिभ्रंशकराणामघ्रेयघ्राणादीनां पापानां संकरे संपर्के समुपस्थिते दशसहस्रवारमभ्यस्ता गायत्र्येव परं शोधनं नान्यदिति । यत्त्वनुक्तनिष्कृतिषु सर्वेष्वपि निमित्तेष्विदं सामान्यप्रायश्चित्तं तज्जातिभ्रंशकरेष्वेवेति । तदयुक्तम् । शास्त्रान्तरे सामान्यप्रायश्चित्तान्तराभिधानेन पौनरुक्त्यात् । तस्माद्यथोक्तैव व्याख्या साधीयसीति ।

**तपस्तप्त्वा तीव्रं यमलभत सार्द्धं सुरगणैः**
**सुतं साकन्देव्या विहितनियमः कश्यपमुनिः ॥**

स्वयं स्रष्टुः स्रष्टा गतिरपि महेन्द्रस्त्रिजगता
मुपेन्द्रत्वं सोऽपि त्रिदशपतिभक्त्या प्रथयति ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन ॥
एकादशोऽपि विवृतोऽत्र पराशरस्याध्यायः कृतोवननीयविभुक्तिभुक्त्यै ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायामेकादशोऽध्यायः॥

शुभमस्तु ॥



श्रीगणेशाय नमः ।

समाने शब्दार्थे तदनुगतवर्णेऽपि च समे
स्वरूपे सामर्थ्ये सकलपुरुषाघौघहरणे ।
हरेर्यत्प्राथम्यं हरिहर "यदेवं" द्विजनता-
मुखाब्जेष्वासीत्तत्सकलमपि लक्ष्मीविलसितम् ॥ १॥
धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
तद्वादशे विवरणं क्रियतेऽधुनात्राध्याये
महाघचयशुद्धिनिवारणाय ॥ २ ॥

एवमध्यायचतुष्टयेनोपपातकप्रायश्चित्तमभिधाय महापातकप्रायश्चित्तविधानाय द्वादशाध्यायमारभते ।

तत्रसङ्करकाण्डे प्रक्रान्तप्रकीर्णकप्रायश्चित्तशेषं समापयितुं तावदाह ।

दुःस्वप्नं यदि पश्येत्तु वान्ते च क्षुरकर्मणि ।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥ १ ॥

दुःस्वप्नमरिष्टसूचकस्वप्नमात्मनः चौरतैलाभ्यङ्गादिदर्शनं स्वप्नाध्यायप्रतिपादितं यदि पश्येत्प्रातः स्मरेत्तदा वान्ते भुक्तोद्गिरणे क्षुरकर्मणि चौरे मैथुने ऋतुकालीने स्त्रीसम्भोगे प्रेतधूमस्पर्शे चकारादजीर्णोद्गारे दुर्जनस्पर्शनचितिपूयश्मशानस्पर्शेषु च स्नानमाचरेत् । तदाहुर्मनुवृद्धपराशरशातातपाः ।

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ॥
दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि ।
चितिपूयश्मशानानां स्पर्शने स्नानमाचरेत् ॥

ऋतौ तु गर्भे शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु यदा गच्छेच्छौच मूत्रपुरीषवत् ॥ इति ॥ १ ॥

इदानीं पुनः संस्कारनिमित्तान्याह ।

**अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २ ॥**

अज्ञानतो विण्मूत्रप्राशने सुरासंस्पृष्टान्नप्राशने च त्रयो वर्णाः ब्राह्मणक्षत्रियवैश्याः तप्तकृच्छ्रचरणानन्तरं पुनः संस्कारं पुनरुपनयनमर्हन्ति विण्मूत्रमिति समाहारद्वन्द्वः कुणपयोरपि ग्रहणं तथा च गौतमो मत्या मद्यपाने तप्तकृच्छ्रस्ततोऽस्य संस्कारो मूत्रपुरीषकुणपरेतसां प्राशने चेति । सुरान्नपैष्टिवेतरस्याः क्षत्रियवैश्ययोरनिषेधात् । तत्संसर्गोऽप्यनुपलक्ष्य गोरसोविवक्षितः । रसोपलब्धौ द्रव्यान्तरसंसर्गेऽपि सुरात्वानपायात् । आज्यत्वस्येव पृषदाज्ये । अत एवाज्यपा इति निगदाः कार्या न पृषदाज्यपा इत्युक्तम् । तथा च मुख्यमेव प्रायश्चित्तं तत्रापद्येत । अज्ञानादिति चात्राप्यनुषज्यते ।

अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः ॥

इति मनुस्मरणात् । एतेनाज्ञानतः सुरापाने पुनः संस्कारः कैमुतिकन्यायेन सिद्धः । तथा च बौधायनः । अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनमिति कामतः सुरापानेन मरणान्तिकस्यैवोक्तत्वात् । किं पुनः संस्कारेण । ब्राह्मणस्य तु कामाकामाभ्यां मद्यपानेऽपि पुनः संस्कारः अमत्या मद्यपानं इति गौतमवाक्यात् । मत्या मद्यपाने त्वसुरायाश्चज्ञाने कृच्छ्रो घृतप्राशनं पुनः संस्कारश्चेति वसिष्ठस्मरणात् । चकारादुक्तानां चण्डालान्नभोजनादीनामनुक्तानामङ्गादिदेशगमनानाञ्चोपसंग्रहः । तथा च वसिष्ठः । एतदेव चण्डालपतितान्नभोजनेषु ततः पुनरुपनयनमिति । वल्लुरपि । विड्वराहग्रामकुक्कुटगोमांसभक्षणे

कामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयन्ते त एवं क्षिप्यन्ते ॥ भिक्षामाणवः। भिक्षां लप्स्येऽहमिति माणवः। भयब्राह्मणः। भयेन ब्राह्मण संपद्यते। गोत्रादिषु किम्। दासीश्रोत्रियः। क्षेपे किम्। परमब्राह्मणः ॥

### अङ्गानि मैरेये। ६। २। ७०॥

मद्यविशेषो मैरेय। मधुमैरेयः। मधुविकारस्य तस्य मध्वङ्गम्। अङ्गानि किम्। परममैरेयः। मैरेये किम्। पुष्पासवः ॥

### भक्ताख्यास्तदर्थेषु। ६। २। ७१॥

भक्तमन्नम्। भिक्षाकंसः। भाजीकंसः। भिक्षादयोऽन्नविशेषाः ॥ भक्ताख्याः किम्। समाशशालयः। समशन समाश इति क्रियामात्रमुच्यते। तदर्थेषु किम्। भिक्षाप्रियः। बहुव्रीहिरयम्। अत्र पूर्वपदमन्तोदात्तम् ॥

### गोबिडालसिंहसैन्धवेषूपमाने। ६। २। ७२॥

धान्यगवः। गोबिडाल। तृणसिंह। सक्तुसैन्धव। धान्य गौरिवेति विग्रह.। व्याघ्रादि.। गवाकृत्या सन्निवेशितं धान्य धान्यगवशब्देनोच्यते। उपमाने किम्। परमसिंहः ॥

### अके जीविकार्थे। ६। २। ७३॥

दन्तलेखकः। यस्य दन्तलेखनेन जीविका। नित्यं क्रीडेति समासः। अके किम्। रमणीयकर्ता। जीविकार्थे किम्। इक्षुभक्षिकां मे धारयसि ॥

### प्राचां क्रीडायाम्। ६। २। ७४॥

प्राग्देशवर्तिना या क्रीडा तद्वाचिनि समासे ऽकप्रत्ययान्ते

परे पूर्वमाद्युदात्तं स्यात् ॥ उद्दालकपुष्पभञ्जिका । सञ्ज्ञायामिति ण्वुल् । प्राचां किम् । जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । क्रीडायां किम् । तव पुष्पप्रचायिका । पर्यायेति ण्वुच् ॥

**अणि नियुक्ते । ६ । २ । ७५ ॥**

अणन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम् । छत्रधारः । नियुक्ते किम् । काण्डलावः ॥

**शिल्पिनि चाकृञः । ६ । २ । ७६ ॥**

शिल्पिवाचिनि समासे ऽणन्ते परे पूर्वमाद्युदात्तं स चेदण् कृञो न भवति । तन्तुवायः । तुन्नवायः । शिल्पिनि किम् । काण्डलावः । अकृञः किम् । कुम्भकारः ।

**संज्ञायां च । ६ । २ । ७७ ॥**

अणन्ते परे ॥ तन्तुवायो नाम कीटः । अकृञ इत्येव । रथकारो नाम ब्राह्मणः ॥

**गोतन्तियवं पाले । ६ । २ । ७८ ॥**

गोपालः । तन्तिपालः । यवपालः । अनियुक्तार्थो योगः । गो इति किम् । वत्सपालः । पाले किम् । गोरक्षः ॥

**णिनि । ६ । २ । ७९ ॥**

पुष्पहारी ॥

**उपमानं शब्दार्थप्रकृतावेव । ६ । २ । ८० ॥**

उपमानवाचि पूर्वं णिन्यन्ते परे आद्युदात्तम् । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । उपमानग्रहणमस्य पूर्वयोगस्य च विषयविभागार्थम् । शब्दार्थप्रकृतौ किम् । वृकवञ्ची । प्रकृतिग्रहणं किम् । प्रकृतिरेव

यत्रोपसर्गनिरपेक्षा शब्दार्थो तत्रैव यथा स्यात्। इह मा भूत्। गर्दभोच्चारी ॥

## युक्तारोह्यादयश्च। ६। २। ८१॥

आद्युदात्ताः। युक्तारोही। आगतयोधी। आगतप्रहारी। णिन्यन्ताः पूर्वोत्तरपदनियमार्थं पठ्यन्त इति केचित्। इह मा भूत्। वृक्षारोही। युक्ताध्यायीति। क्षीरहोता। भगिनीभर्ता। याजकादित्वात् षष्ठीसमासावेतौ। एकशितिपात्। एकः शिति पादो यस्येति त्रपदो बहुव्रीहिः। तत्र एकशितिशब्दस्तद्धितार्थोत्तरपद इति तत्पुरुषस्तत्र निमित्तस्वरबलीयस्त्वादन्तोदात्तत्वं प्राप्तमित्याद्युदात्तत्वं विधीयते। अन्यथैकशब्दस्य कन्नन्तत्वेनाद्युदात्तत्वात् बहुव्रीहिनिमित्तपूर्वपदप्रकृतिस्वरेणैव सिद्धे तत् व्यर्थं स्यात्। एवमपि नार्थ एतेन इगन्ते द्विगाविति सिद्धत्वात्। एवं तर्हि ज्ञापनार्थमेतत् ज्ञापयति शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति। तेन द्विशितिपादित्यत्र द्विशितिशब्दोऽन्तोदात्तो भवति। निमित्तस्वरबलीयस्त्वस्यापि एकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति। फलं द्विशितिपादित्येव। पाठे समितादयश्च युक्तारोह्यादयस्ततस्तेऽप्याद्युदात्ता भवन्ति ॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे। ६। २। ८२॥

कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः॥

## अन्त्यात् पूर्वं बह्वचः। ६। २। ८३॥

बह्वच पूर्वपदस्यान्त्यात् पूर्वमुदात्तं जे उत्तरपदे। उपसरजः। आमलकीजः। बह्वच किम्। दग्धजानि तृणानि॥

**ग्रामे ऽनिवसन्तः । ६ । २ । ८४ ।**

ग्रामे परे पूर्वमाद्युदात्तं तच्चेत् निवसद्वाचि न । मल्लग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः । देवस्वामिकः । अनिवसन्तः किम् । दाक्षिग्रामः । दाक्षिनिवासः ॥

**घोषादिषु च । ६ । २ । ८५ ॥**

दाक्षिघोषः । दाक्षिकट । दाक्षिहृदः ॥

**छात्र्यादयः शालायाम् । ६ । २ । ८६ ॥**

छात्रिशाला । व्याडिशाला । यदापि शालान्तः समासो नपुंसकलिङ्गो भवति तदापि तत्पुरुषे शालायां नपुंसके इत्येतस्मात् पूर्वविप्रतिषेधेनायमेव स्वर । छात्रिशालम् ॥

**प्रस्थे ऽवृद्धमकर्क्यादीनाम् । ६ २ । ८७ ॥**

प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् ॥ इन्द्रप्रस्थः । अवृद्धं किम् । दाक्षिप्रस्थः । अकेति किम् । कर्कीप्रस्थः । मकरीप्रस्थः ॥

**मालादीनां च । ६ । २ । ८८ ॥**

वृद्धार्थमिदम् । मालाप्रस्थः । शोणाप्रस्थः ॥

**अमहन्नवं नगरेऽनुदीचाम् । ६ । २ । ८९ ॥**

नगरे परे महन्नववर्जित पूर्वमाद्युदात्त स्यात् तच्चेदुदीचां न । ब्रह्मनगरम् । अमेति किम् । महानगरम् । नवनगरम् । अनुदीचां किम् । नान्दीनगरम् ॥

**अर्मे चावर्णं द्व्यच् त्र्यच् । ६ । २ । ९० ॥**

अर्मे परे ह्रच् त्र्यच् पूर्वमवर्णान्तमाद्युदात्तम् । गुप्तार्मम् । कुक्कुटार्मम् । अवर्णं किम् । बृहदर्मम् । ह्रच् त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् ॥

## न भूताधिकसंजीवमद्राश्मकज्जलम् । ६ । २ । ६१ ॥

अर्मे परे नैतान्याद्युदात्तानि ॥ भूतार्मम् । अधिकार्मम् । संजीवार्मम् । मद्राश्मग्रहणं सघातविगृहीतार्थम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् ॥ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ॥ * ॥ दिवोदासाय दाशुषे वध्र्यश्वाय दाशुषे ॥

## अन्तः । ६ । २ । ९२ ॥

अधिकारोऽयं प्रागुत्तरपदादिग्रहणात् ।

## सर्वं गुणकार्त्स्न्ये । ६ । २ । ९३ ॥

सर्वशब्दः पूर्वपदमन्तोदात्तम् । सर्वश्वेत. । सर्वमहान् । सर्वं किम् । परमश्वेतः । आश्रयव्याप्त्या परमत्व श्वेतस्येति गुणकार्त्स्न्यं वर्तते । गुणेति किम् । सर्वसौवर्णः । कार्त्स्न्ये किम् । सर्वेषां श्वेततर. सर्वश्वेत. । गुणान्तरेण समासस्तरलोपश्च वक्तव्य इत्यनेनात्र समासस्तरलोपश्च ॥

## संज्ञायां गिरिनिकाययोः । ६ । २ । ९४ ॥

एतयोः परतः पूर्वमन्तोदात्तम् । अञ्जनागिरिः । मौण्डिनिकायः । संज्ञायां किम् । परमगिरिः । ब्राह्मणनिकायः ॥

## कुमार्यां वयसि । ६ । २ । ९५ ॥

पूर्वपदमन्तोदात्तम् । वृद्धकुमारी । कुमारीशब्दः पुंसा सहासंप्रयोगमात्रप्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समाना-

धिकरण । तच्च वय इह गृह्यते न कुमारत्वमेव । वयसि किम् । परमकुमारी ॥

**उदकेऽकेवले । ६ । २ । ९६ ॥**

अकेवल मिश्र तद्वाचिनि समासे उदके परे पूर्वमन्तोदात्तम् ॥ गुडोदकम् । स्वरे कृतेऽच एकादेश । स्वरितो वाऽनुदात्ते पदादाविति पक्षे स्वरित । अकेवले किम् । शीतोदकम् ॥

**द्विगौ क्रतौ । ६ । २ । ९७ ॥**

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वमन्तोदात्तम् ॥ गर्गत्रिरात्रम् । द्विगौ किम् । अतिरात्र । क्रतौ किम् । बिल्वहोमस्य सप्तरात्रम् । बिल्वसप्तरात्रम् ॥

**सभायां नपुंसके । ६ । २ । ९८ ॥**

सभायां परतो नपुंसकलिङ्गे समासे पूर्वमन्तोदात्तम् । गोपालसभम् । स्त्रीसभम् । सभायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । राजसभा । प्रतिपदोक्तनपुंसकग्रहणान्नेह । रमणीयसभम् । ब्राह्मणकुलम् ॥

**पुरे प्राचाम् । ६ । २ । ९९ ॥**

शिवदत्तपुरम् । नान्दीपुरम् । प्राचां किम् । शिवपुरम् ॥

**अरिष्टगौडपूर्वे च । ६ । २ । १०० ॥**

पुरे परेऽरिष्टगौडपूर्वे समासे पूर्वमन्तोदात्तम् । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणं किम् । इहापि यथा स्यात् । अरिष्टश्रितपुरम् । गौडभृत्यपुरम् ॥

**न हास्तिनफलकमार्देयाः । ६ । २ । १०१ ॥**

पुरे परे नैतान्यन्तोदात्तानि । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदेरपत्यमिति शुभ्रादित्वाड्ढक् ॥

**कुसूलकूपकुम्भशालं बिले । ६ । २ । १०२ ॥**

एतान्यन्तोदात्तानि बिले परे । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालबिलम् । कुसूलादि किम् । सर्वबिलम् । बिले किम् । कूसूलस्वामी ॥

**दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु । ६ । २ । १०३ ॥**

दिक्शब्दा अन्तोदात्ता भवन्त्येषु । पूर्वेषुकामशमी । अपरकृष्णामृत्तिका । जनपद । पूर्वपञ्चालाः । आख्यान । पूर्वयायातम् । ययातिमधिकृत्य कृतमाख्यानमित्यर्थः । पूर्वचानराटम् । शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ॥

**आचार्योपसर्जनश्चान्तेवासिनि । ६ । २ । १०४ ॥**

सप्तम्यर्थे प्रथमा । आचार्योपसर्जनान्तेवासिनि परे दिक्शब्दा अन्तोदात्ता भवन्ति ॥ पूर्वपाणिनीयाः । आचेति किम् । पूर्वान्तेवासी । अन्तेवासिनि किम् । पूर्वपाणिनीयं शास्त्रम् ॥

**उत्तरपदवृद्धौ सर्वं च । ६ । २ । १०५ ॥**

उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति ॥ सर्वपाञ्चालकः ॥ अपरपाञ्चालकः । अधिकारग्रहणं किम् । सर्वभासः । सर्वकारकः ॥

**बहुव्रीहौ विश्वं संज्ञायाम् । ६ । २ । १०६ ॥**

बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः सञ्ज्ञायामन्तोदात्तः स्यात् ॥ पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः । विश्वकर्मा । विश्व-

देवः । आविश्वदेव सत्पतिम् । बहुव्रीहौ किम् । विश्वे च ते देवाश्च विश्वदेवा । सञ्ज्ञाया किम् । विश्वदेवः । विश्वमित्रो विश्वाजिन इत्यत्र सञ्ज्ञाया मित्राजिनयोरित्येतद्भवति परत्वात् । प्रागव्ययीभावात् बहुव्रीह्यधिकार ॥ अन्तोदान्तप्रकरणे मरुद्वृधादीना छन्दस्युपसङ्ख्यानम् ॥ * ॥ मरुद्वृध. सुवया उपस्थे ॥

## उदराश्वेषुषु । ६ । २ । १०७ ॥

वृकोदरः । हर्यश्व । सुवर्णपुङ्खेषु ॥

## क्षेपे । ६ । २ । १०८ ॥

उदराश्वेषुषु पूर्वमन्तोदात्त बहुव्रीहौ निन्दायाम् ॥ घटोदरः कटुकाश्वः । अनिघातेषुः । अनुदर इत्यत्र नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥

## नदी बन्धुनि । ६ । २ । १०९ ॥

बन्धुशब्दे परे नद्यन्तं पूर्वमुदात्त बहुव्रीहौ । गार्गी बन्धुः । नदी किम् । ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनि किम् । गार्गीप्रियः ॥

## निष्ठोपसर्गपूर्वमन्यतरस्याम् । ६ । २ । ११० ॥

निष्ठान्त पूर्वपदमन्तोदात्तं वा । प्रधौतपादः २ । निष्ठा किम् । प्रसेवकमुख । उपसर्गपूर्वं किम् । शुष्कमुखः ॥

## उत्तरपदाऽदिः । ६ । २ । १११ ॥

उत्तरपदाधिकार आपादान्त आद्यधिकारस्तु प्रकृत्या भगालमित्यवधिकः ॥

**कर्णो वर्णलक्षणात् । ६ । २ । ११२ ॥**

वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । शङ्कुकर्णः । कर्ण. किम् । श्वेतपादः । वर्णलक्षणात् किम् । शोभनकर्णः ॥

**संज्ञौपम्ययोश्च । ६ । २ । ११३ ॥**

मणिकर्णः । गोकर्णः ॥

**कण्ठपृष्ठग्रीवाजङ्घं च । ६ । २ । ११४ ॥**

संज्ञौपम्ययोर्बहुव्रीहौ ॥ शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । औपम्ये । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः ॥

**शृङ्गमवस्थायां च । ६ । २ । ११५ ॥**

शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ ॥ उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था । संज्ञायाम् । ऋष्यशृङ्गः । उपमायाम् । मेषशृङ्गः । अवस्थेति किम् । स्थूलशृङ्गः ॥

**नञो जरमरमित्रमृताः । ६ । २ । ११६ ॥**

नञः पर एते आद्युदात्ता बहुव्रीहौ । ता मे जराय्वजरम् । अमरम् । अमित्रमर्दय भवो देवेष्वमृतम् । नञः किम् । ब्राह्मणमित्रः । जेति किम् । अशत्रुः ॥

**सोर्मनसी अलोमोषसी । ६ । २ । ११७ ॥**

सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तं स्यात् ॥ नञ्सुभ्यामित्यस्यापवादाविमौ । सुकर्माणः । सुयुजः । स नो वक्षदनिमानः सुब्रह्मा । शिवा पशुभ्यः सुमनाः । सुवर्चाः । सुपेशसस्क-

रति । सो किम् । कृतकर्मा । मनसो किम् । सुराजा । अलोमो- षसो किम् । सुलोमा । सूषाः । कपि तु परत्वात् कपि पूर्वमिति भवति । सुकर्मकः । सुस्रोतस्कः ॥

## क्रत्वादयश्च ॥ ६ । २ । ११८ ॥

सोः परे आद्युदात्ताः स्युः ॥ साम्राज्याय सुक्रतुः । सुप्र- तीकः । सुहव्यः । सुप्रतूर्तिमनेहसम् ।

## आद्युदात्तं द्व्यच् छन्दसि । २ । ११९ ॥

यदाद्युदात्तं द्व्यच् तत् सोरुत्तरं बहुव्रीहावाद्युदात्तम् ॥ अधा स्वश्वाः सुरथा आतिथिग्वे । नित्स्वरेणाश्वरथावाद्युदात्तौ । आद्यु- दात्त किम् । या सुबाहुः । द्व्यच् किम् । सुगुरसत्सु हिरण्यः । हिर- ण्यशब्दस्त्र्यच् ॥

## वीरवीर्यौ च । ६ । २ । १२० ॥

सो परौ बहुव्रीहौ छन्दस्याद्युदात्तौ । सुवीरेण रयिणा सुवी- र्यस्य गोमतः । वीर्यशब्दो यत्प्रत्ययान्तः । तत्र यतो नाव इत्याद्युदा- त्तत्व नेति वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे । ६ । २ । १२१ ॥

उपकूलम् । परितीरम् । उपतूलम् । उपमूलम् । उपशा- लम् । उपाक्षम् । सुषमम् । निःषमम् । तिष्ठद्गुप्रभृतिष्वेते । कूला- दिग्रहणं किम् । उपकुम्भम् । अव्ययीभावे किम् । परमकूलम् ॥

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ । ६ । २ । १२२ ॥

द्विकंसः । द्विमन्थः । द्विशूर्पः । द्विपाय्यम् । द्विकाण्डम् । द्विगौ किम् । परमकंसः ॥

## तत्पुरुषे शालायां नपुंसके । ६ । २ । १२३ ॥

शालान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् ॥ ब्राह्मणशालम् । तत्पुरुषे किम् । दृढशालम् । ब्राह्मणकुलम् । शालायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । ब्राह्मणशाला ॥

## कन्या च । ६ । २ । १२४ ॥

तत्पुरुषे नपुंसकलिङ्गे कन्याशब्द उत्तरपदमाद्युदात्तम् ॥ सौशमिकन्थम् । आह्वरकन्थम् । नपुंसके किम् । दाक्षिकन्था ॥

## आदिश्चिहणादीनाम् । ६ । २ । १२५ ॥

कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः ॥ चिहणकन्थम् । मण्डरकन्थम् । आदिरिति वर्त्तमाने पुनर्ग्रहणं पूर्वपदस्याद्युदात्तार्थम् ॥

## चेलखेटकटुककाण्डं गर्हायाम् । ६ । २ । १२६ ॥

चेलादीन्युत्तरपदान्याद्युदात्तानि ॥ पुत्रचेलम् । नगरखेटम् । दधिकटुकम् । प्रजाकाण्ड । चेलादिसादृश्येन पुत्रादीनां गर्हा । व्याघ्रादित्वात् समासः । गर्हायां किम् । परमचेलम् ॥

## चीरमुपमानम् । ६ । २ । १२७ ॥

वस्त्रं चीरमिव वस्त्रचीरम् । कम्बलचीरम् । उपमानं किम् । परमचीरम् ॥

## पललसूपशाकं मिश्रे । ६ । २ । १२८ ॥

घृतपललम् । घृतसूपः । घृतशाकम् । भक्ष्येण मिश्रीकरणमिति समासः । मिश्रे किम् । परमपललम् ॥

## कूलसूदस्थलकर्षाः संज्ञायाम् । ६ । २ । १२९ ॥

आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । शाण्डिसूदम् । दाण्डायनस्थलम् । लिङ्गविशिष्टपरिभाषया दाण्डायनस्थली । दाक्षिकर्षः । ग्रामसंज्ञा एताः । सञ्ज्ञायां किम् । परमकूलम् ॥

**अकर्मधारये राज्यम् । ६ । २ । १३० ॥**

कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकेति किम् । परमराज्यम् ॥ चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन ॥ * ॥ कुचेलम् । कुराज्यम् ॥

**वर्ग्यादयश्च । ६ । २ । १३१ ॥**

अर्जुनवर्ग्यः । वासुदेवपक्ष्यः । अकर्मधारये इत्येव । परमवर्ग्यः । वर्ग्यादिर्दिगाद्यन्तर्गणः ॥

**पुत्रः पुंभ्यः । ६ । २ । १३२ ॥**

पुंशब्देभ्यः परः पुत्रशब्द आद्युदात्तस्तत्पुरुषे । दाशकिपुत्रः । माहिषपुत्रः । पुत्रः किम् । कौनटिमातुलः । पुंभ्यः किम् । दाक्षीपुत्रः ।

**नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः । ६ । २ । १३३ ॥**

एभ्यः पुत्रो नाद्युदात्तः । आख्याग्रहणात् पर्यायाणां तद्विशेषाणां च ग्रहणम् । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । ऋतो विद्येत्यलुक् । संयुक्ताः सम्बन्धिनः । श्यालपुत्रः । ज्ञातयो मातापितृसम्बन्धेन बान्धवाः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः । पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वमेव भवति ॥

**चूर्णादीन्यप्राणिषष्ठ्याः । ६ । २ । १३४ ॥**

एतानि प्राणिभिन्नषष्ठ्यन्तात् पराणि आद्युदात्तानि तत्पुरुषे ॥ मुद्गचूर्णम् । अप्रेति किम् । मत्स्यचूर्णम् ॥

**षट् च काण्डादीनि । ६ । २ । १३५ ॥**

अप्राणिषष्ठ्या आद्युदात्तानि ॥ दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलशाकम् । नदीकूलम् । काण्डादीनि पूर्वसूत्रनिर्दिष्टानि गृह्यन्ते । तेषां सिद्धे स्वरे पुनर्वचनं गर्हाद्युपाधिनिरासार्थम् । षट् किम् । राजसूद । अप्रेति किम् । दत्तकाण्डम् ॥

**कुण्डं वनम् । ६ । २ । १३६ ॥**

कुण्डमाद्युदात्तं वनवाचितत्पुरुषे ॥ दर्भकुण्डम् । कुण्डशब्दोऽत्र सादृश्येन वने वर्तते । वनं किम् । मृत्कुण्डम् ॥

**प्रकृत्या भगालम् । ६ । २ । १३७ ॥**

भगालवाच्युत्तरपद तत्पुरुषे प्रकृत्या ॥ कुम्भीभगालम् । कुम्भीनदालम् । कुम्भीकपालम् । मध्योदात्ता एते प्रकृत्येत्यधिकृतमन्त इति यावत् ॥

**शितेर्नित्याबह्वज् बहुव्रीहावभसत् । ६ । २ । १३८ ॥**

शितेः पर नित्याबह्वच्क प्रकृत्या ॥ शितिपादः । शित्यंसः । पादशब्दो वृषादित्वादाद्युदात्त । अंस शब्दः प्रत्ययस्य नित्वात् । शिते. किम् । दर्शनीयपादः । नित्याबह्वच् किम् । शितिललाटः । नित्येति किम् । शितिककुत् । ककुदस्यावस्थायां लोपोऽन्यत्र शितिककुद इत्यवेति । नायं नित्याबह्वचकः । बहुव्रीहौ किम् । शितेः पाद शितिपादः । अभसत्किम् । शितिभसत् । शतिराद्युदात्तः । पूर्वपदप्रकृतिस्वरापवादो योगः ॥

**गतिकारकोपपदात् कृत् । ६ । २ । १३९ ॥**

एभ्यः कृदन्त प्रकृतिस्वरं स्यात् तत्पुरुषे । प्रकारकः ।

प्रहरणम् । शोणा धृष्णूनृवाहसा । इध्मप्रव्रश्चनः । उपपदात् । उच्चैःकारम् । ईषत्करः । गेति किम् । देवस्य कारक देवकारकः । शेषे षष्ठी । कृद्ग्रहणं स्पष्टार्थम् । प्रपचतितरामित्यत्र तरबाद्यन्तेन समासे कृते आम् । तत्र सति शिष्टत्वादाम्स्वरो भवतीत्येके । प्रपचतिदेश्यार्थं तु कृद्ग्रहणमित्यन्ये ॥

## उभे वनस्पत्यादिषु युगपत् । ६ । २ । १४० ॥

एषु पूर्वोत्तरपदे युगपत् प्रकृत्या । वनस्पति वन आ । बृहस्पति यः । बृहच्छब्दोऽत्राद्युदात्तो निपात्यते । हर्षया शचीपतिम् । शार्ङ्गरवादित्वादाद्युदात्तः शचीशब्दः । शचीभिर्न इति दर्शनात् ॥ तनूनपात् । न राशंस वाजिनम् । निपातनात् दीर्घः । शुन शेपम् ।

## देवताद्वन्द्वे च । ६ । २ । १४१ ॥

उभे युगपत् प्रकृत्या स्त । आय इन्द्रावरुणौ इन्द्राबृहस्पती वयम् । देवता किम् । प्लक्षन्यग्रोधौ । द्वन्द्वे किम् । अग्निष्टोम ॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु । ६ । २ । १४२ ॥

पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कवृषणा । अपृथिव्यादौ किम् । द्यावापृथिवी जनयन् । आद्युदात्तो द्यावा निपात्यते । पृथिवीत्यन्तोदात्त । सोमारुद्रौ । रोदेर्णिलुक् चेति रगन्तो रुद्रः । इन्द्रापूषणौ । श्वन्नुक्षन्पूषन्निति पूषा अन्तोदात्तो निपात्यते । शुक्रामन्थिनौ । शुक्रो रगन्तत्वात् मन्थिन् मत्वर्थीयेनिनान्तोदात्तौ । उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्यात् । द्वन्द्वविशेषणं मा भूत् । अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम् ॥

अन्तः । ६ । २ । १४३ ॥

अधिकारोऽयम् ॥

थाथघञ्क्ताजबित्रकाणाम् । ६ । २ । १४४ ॥

थ अथ घञ् क्त अच् अप् इत्र क एतदन्तानां गतिकारकोपपदात् परेषामन्तोदात्तः । प्रभृथस्यायोः । आवसथः । घञ् । प्रभेदः । क्त । धर्ता वज्री पुरुष्टुतः । पुरुषु बहुप्रदेशेषु स्तुत इति विग्रहः । अच् । प्रचयः । अप् । प्रलवः । इत्र । प्रलवित्रम् । क । गोवृषम् । मूलविभुजादित्वात् कः । गतिकारकोपपदादित्येव । सुस्तुत भवता ॥

सूपमानात् क्तः । ६ । २ । १४५ ॥

सोरुपमानाच्च परं गतिकारकोपपदात् क्तान्तमन्तोदात्तम् ऋतस्य योनौ सुकृतस्य । शशप्लुतः ॥

संज्ञायामनाचितादीनाम् । ६ । २ । १४६ ॥

गतिकारकोपपदात् क्तान्तमन्तोदात्तमाचितादीन् वर्जयित्वा ॥ उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । सम्भूतो रामायणः । प्राप्त्यर्थाद्ब्रवतेः कर्मणि क्तः । गतिरनन्तर इत्यत्र हि कर्मणीति वर्तते । तद्बाधनार्थं चेदम् । धनुःखाता नदी । कुद्दालखातं नगरम् । हस्तिमृदिता भूमि । तृतीया कर्मणीति प्राप्तिरिह बाध्यते । अनेति किम् । आचितम् । आस्थापितम् ॥

प्रवृद्धादीनां च । ६ । २ । १४७ ॥

एषां क्तान्तमुत्तरपदमन्तोदात्तम् ॥ प्रवृद्धः । प्रयुक्त । असंज्ञार्थोऽयमारम्भः । आकृतिगणोऽयम् ॥

कारकाद्दत्तश्रुतयोरेवाशिषि । ६ । २ । १४८ ॥

सञ्ज्ञायामन्तोदात्तः । देवा एनं देयासुर्देवदत्तः । विष्णु-रेनं श्रूयात् विष्णुश्रुतः । कारकात् किम् । अकारकान्नियमो मा भूत् । सम्भूयात् सम्भूतो रामायणः । दत्तश्रुतयोः किम् । देवपालितः । अस्मान्नियमादत्र संज्ञायामनेति न । तृतीया कर्मणीति तु भवति । एव किम् । कारकावधारणं यथा स्यात् । दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्तोदात्तो भवति । सम्श्रुतः । आशिषि किम् । देवै खाता देवखाता । आशिष्येवेत्येवमत्रेष्टो नियमः । तेनानाहतो नदति देवदत्त इत्यत्र न । शङ्खविशेषस्य सञ्ज्ञेयम् । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति ॥

## इत्थम्भूतेन कृतमिति च । ६ । २ । १४९ ॥

इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्त स्यात् । सुप्तप्रलपितम् । प्रमत्तगीतम् । कृतमिति क्रियासामान्ये करोतिर्नाभूतप्रादुर्भावे एव । तेन प्रलपितादपि कृत भवति । तृतीया कर्मणीत्यस्यापवादः । भावे प्रलपितादीनां थाथादिस्वरेणैव सिद्धमन्तोदात्तत्वम् ॥

## अनो भावकर्मवचनः । ६ । २ । १५० ॥

कारकात् परमनप्रत्ययान्त भाववचनं कर्मवचनञ्चान्तोदात्तम् ॥ पयःपानं सुखम् । राजभोजनाः शालयः । अनः किम् । हस्तदायः । भेति किम् । दन्तधावनम् । करणे ल्युट् । कारकात् किम् । निदर्शनम् ॥

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । ६ । २ । १५१ ॥

कारकात् पराण्येतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे । कृत्स्वरापवादाविमौ । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् ।

(अहमर्थप्रकाशावभासकत्वम् ।) कथं तर्हि ततोऽहमर्थप्रकाश इति चेन्न । वृत्तिकृतप्रकाशो ह्यविद्यानिवृत्तरूपचैतन्याभिव्यक्तिरपरोक्षे न चाहङ्कारावच्छिन्नचैतन्यावरकमज्ञानमस्ति तस्यानावृत्तसाक्षिण्यध्यासात् । किन्तु स्वप्रतिबिम्बितचैतन्येन वृत्तिरिवाहङ्कारोप्यवभास्यते । न चावभासकसाक्ष्यवच्छेदकत्वमात्रेण तज्ज्ञानत्वं इच्छादिवृत्तेरुपासनावृत्तेश्च तदभावात् ॥

इष्टापत्त्या परिहरति । नेति । न कथमपीत्यर्थः । तदेवोपपादयितुमपरोक्षवृत्त्यधीनप्रकाशशब्दार्थमाह । वृत्तिकृतेति । प्रकृते तदवच्छिन्नचैतन्यावरकाज्ञानाभावान्न तन्निवृत्तिलक्षणप्रकाशः सम्भवतीत्याह । न चाहङ्कारेति । वृत्तिकृतप्रकाशाभावे कथमहमर्थस्फुरणमित्यत आह । किं तु स्वप्रतिबिम्बितेति । अहमाकारावृत्तिर्ज्ञानं, अर्थावभासिकचैतन्यावच्छेदकत्वात्, घटवृत्तिवदित्यनुमानमिच्छादौ व्यभिचारेण दूषयति । न चावभासकेति । उपासनावृत्तेश्चेति । वाचं धेनुमुपासीतेति विहितायाः उपासनाया मानसक्रियारूपायाः स्वावच्छिन्नचैतन्यप्रतिभास्याया ज्ञानत्वाभावादित्यर्थः ॥

अहमाकारान्तःकरणवृत्त्यभावेऽपि तादृशाविद्यावृत्तिनाशादेव तत्संस्कार इति मतान्तरमाह । अस्तु वेति ।

( अन्तःकरणवृत्त्यभावेऽपिवृत्ति-नाशात्संस्कारसाधनम् । ) अस्तु वा अविद्यावृत्तिरेव सन्तन्यमानाहङ्कारादिगोचरसंस्कारहेतुः । तस्या अपि सुषुप्तौ संस्कारजनकत्वकल्पनात् । सर्वथाप्यहङ्कारादिगोचरा स्मृतिर्नित्यसाक्षिण्युपपद्यते।

संस्कारस्यान्तःकरणवृत्तिजन्यत्वनियमात्तदभावे कथं स इत्याशङ्क्य नायमस्ति नियमः सुखमहमस्वाप्समिति परामर्शहेतुसंस्कारस्य स्वापकालीनान्तःकरणवृत्त्यभावेन तदानीन्तनाविद्यावृत्तिजन्यत्वस्यावश्यकत्वादित्यभिप्रेत्याह । तस्या अपीति । पक्षत्रये ऽप्यहमर्थतद्धर्मसाक्षिनित्यत्वे ऽपि तत्स्मृतिरुपपद्यत इत्युपसंहरति । सर्वथेति ॥

अनुभवनित्यत्वानुमाने बाधकं परिहृत्यानुकूलतर्कमाह । अनुभवेति ।

( तत्रानुकूलतर्कप्रदर्शनम् । ) अनुभवविनाशहेत्वनिरूपणं चानुकूलस्तर्कः । तथा हि वृत्तिविनाश इव स्फुरणविनाशे ऽपि कारणविनाशो न हेतुः स्फुरणस्यानादित्वात् । नन्वविद्याविनाशवत्तद्विनाशोऽस्त्विति चेन्न । तद्वदत्रान्वयव्यतिरेकसिद्धस्य शास्त्रसिद्धस्य वा तद्विनाशहेतोरदर्शनात् ॥

किमनुभवविनाशो वृत्तिवत्कारणनाशो हेतुरुताविद्यावद्विरोधिसंसर्गः । नाद्य इत्याह । वृत्तिविनाश इति । द्वितीयं शङ्कते । नन्विति । अन्वयव्यतिरेकाभ्यां तरत्य-

विद्यां वितताभित्यादिशास्त्राच्चाविद्याया ज्ञाननिवृत्तत्ववद्वृत्त्यतिरिक्तानुभवस्य न केनापि प्रमाणेन विरोधिसंसर्गः सिद्ध इत्याह । न तद्वदिति ॥

अनुभवस्य विरोध्यभावो असिद्धः, इच्छादेरेव तद्विरोधित्वादित्याशङ्क्य हेत्वसिद्ध्या दूषयति । न च परेति ।

(अनुभवविरोध्यभावासिद्धिः ।) **न च पराभ्युपगतज्ञानस्येव विरोधिगुणान्तरादेव तन्नाशः । तस्याहमर्थासमवेतस्य तत्समवेतगुणेनाविरुद्धत्वात् । किञ्च नित्यानुभवानङ्गीकारे ज्ञानाभावो ऽपि नानुभूयेत । वेद्यज्ञानवादे ज्ञानस्यावश्यवेद्यत्वाभावेन सत्यपि तस्मिंस्तदनुपलम्भसम्भवात् । अनुपलब्धेरधिकरणनिष्ठप्रतियोगिसत्त्वाप्रतिकूलत्वात् । अन्धकारस्थघटानुपलम्भवज्ज्ञानानुपलम्भस्याप्यभावाग्राहकत्वात् । न चान्धकारे घटानुपलम्भो घटोपलम्भसहकारिविरहात्सति घटेऽपि संगच्छते, इह तु ज्ञानग्राहकसामग्र्या मनःसन्निकर्षादेः सत्त्वात्तदनुपलम्भोऽधिकरणेतत्सत्त्वविरोधीति चेत् ।**

विपक्षे बाधकमप्याह । किं चेति । नित्यानुभवानङ्गीकारे जन्यज्ञानानामवश्यवेद्यत्वनियमाभावेनानित्यज्ञानसत्त्वे

ऽपि तदनुपलम्भसम्भवाज्ज्ञानानुपलब्धेर्ज्ञानसत्त्वविरोधित्वलक्षणयोग्यताया गृहीतुमशक्यत्वादन्धकारस्थघटानुपलब्ध्या घटाभाववज्ज्ञानानुपलब्ध्या ज्ञानाभावो ऽपि गृहीतुं न शक्यत इत्याह । वेद्यज्ञानेत्यादिना । नन्वन्धकारे घटसत्त्वे ऽप्यालोकाभावेन तदुपलम्भकसामग्र्यभावादप्यनुपलम्भोपपद्यते, आत्मनि ज्ञानसत्त्वे तु संयुक्तसमवायस्यावश्यम्भावात्तदुपलम्भकसामग्र्याः सत्त्वेनानुपलम्भायोगादिति तत्सत्त्वविरोधो तदनुपलम्भ इति चोदयति । नन्वन्धकार इति ॥

नित्यानुभवानङ्गीकारे ज्ञानग्राहकसामग्रीदुर्निरूपेत्यभिप्रेत्य विकल्पयति । किं मनसेति ।

( नित्यानुभवानङ्गीकारे विकल्पः । ) किं मननसंयुक्तःसमवाय एव ज्ञानग्राहकसामग्री किं वा संयोगविशेषघटिततत्समवायः । अथवा ज्ञानान्तरसामग्रीसहकृतः संयुक्तसमवाय उत बुभुत्सासहकृतः स एव । नाद्यः ज्ञानप्रवाहाविच्छेदप्रसङ्गात् । न हि सत्यां सामग्र्यां किञ्चिज्ज्ञानं जायते किञ्चिन्नेति युक्तम् । न द्वितीयः । संयोगे विशेषस्य निरस्तत्वात् । नापि तृतीयः । सत्यामपि ज्ञानान्तरसामग्र्यां ज्ञानग्रहदर्शनात् । अन्यथा ज्ञानमेव न गृह्येत । ज्ञानान्तरसामग्र्या आवश्यकत्वात् ॥

व्यवसायानुव्यवसाये ऽपि संयुक्तसमवायसत्त्वात्त-द्विषयज्ञानान्तरं स्यात्, एवं तद्विषयज्ञानान्तरमिति बाह्य-विषयज्ञानविलोपः स्यादित्याह । नाद्य इति । द्वितीये संयोगे विशेषो जातिरुपाधिर्वा स्यात् । उभयथाप्यनुपप-त्तेरित्युक्तमित्याह । न द्वितीय इति । तृतीयस्त्वसम्भवी-त्याह । नापि तृतीय इति । असम्भमेव व्यतिरेकमुखेनो-पपादयति । अन्यथेति । ज्ञानग्रहसामग्रीदशायामात्मग्रह-सामग्र्या आवश्यकत्वादित्याह । ज्ञानान्तरेति ।

किञ्चास्मिन्पक्षे ज्ञानाभावग्रहाय ज्ञानान्तरसामग्र्य-भावो ऽपि ग्राह्यः, सामग्र्यभावश्च ज्ञानान्तराभावकल्प्यः, ज्ञानान्तराभावग्रहश्च तदितरज्ञानसामग्र्यभावं विनाने-त्यनवस्थापात इत्यपि द्रष्टव्यम् । दुःखतत्साधनज्ञानस्याबु-भुत्सितस्यापि ग्रहणाद्बुभुत्सा न ज्ञानग्रहे हेतुरित्याह । नापीति ।

( बुभुत्सा न ज्ञानहेतुः । ) नापि तुरीयः । अबुभुत्सितज्ञानस्यापि ग्रहणेन बुभुत्साया ज्ञानग्रहाहेतुत्वादित्युक्तम् । तस्माज्ज्ञानस्य मानसत्वायोगाज्ज्ञानानुपलम्भो नाधिकरणे तत्सत्ताविरोधीति न तदभावः प्रत्य-क्षः स्यात् । अनुपलब्धेरन्यथा सिद्धत्वादेव नानुपलब्धिलिङ्गको ऽपि । नापि व्यवहाराभा-वेनानुमीयते । तस्य तेनानियतत्वात् । नापि शब्दात् । परस्य तद्ग्राहकाभावेन तद्वाचकशब्द-

**प्रयोगायोगात्स्वप्रयोगस्य च स्वधीपूर्वकत्वात् । स्वप्रकाशवादिमते ऽपि समवायस्यानित्यतया पाकरक्ते श्यामसमवायाभावेनैव सत्यपि तस्मिंस्तदनुपलम्भोपपत्तेः ॥**

ज्ञानस्य संयुक्तसमवायमात्रेण मनोग्राह्यत्वायोगात्तदनुपलम्भस्य तत्सत्त्वे ऽप्युपपत्तेस्तत्सहकृतप्रत्यक्षेण नाभावग्रह इत्युपसंहरति । तस्मादिति । ननु ज्ञानमात्मनिष्ठाभावप्रतियोगी तत्रानुपलभ्यमानत्वादित्यनुमानात्तदभाव निश्चय इत्याशङ्क्यानुपलभ्यमानत्वमात्रस्यातीन्द्रिये व्यभिचारादधिकरणेप्रतियोगिसत्ताविरोधित्वलक्षणयोग्यताया ज्ञानानुपलम्भेप्यभावादित्यभिप्रेत्याह । अनुपलब्धेरिति । अहं ज्ञानरहितः व्यवहाररहितत्वात् घटवदित्यनुमानात्तद् भावसिद्धिरित्याशङ्क्य मौनिषु व्यभिचारान्मैवमित्याह । नापि व्यवहारेति । तर्हि शब्दाज्ज्ञानाभावधीरित्याशङ्क्य किं परप्रयुक्तशब्दादुतस्वप्रयुक्तशब्दादुभयथापि प्रयोगहेत्वभावप्रत्ययाभावात्प्रयोग एवानुपपन्न इत्याह । नापि शब्दादिति । एवं वेद्यज्ञानवादे ऽनुभवविरोधमप्रयोजकत्वं च निरस्य स्वप्रकाशज्ञानवादे ऽपि योग्यानुपलब्ध्यभावेन ज्ञानाभावग्रहायोगान्नाशाद्यनुभवस्य तत्समवायविषयत्वसम्भवान्न तस्यानुभवनित्यतानुमानबाधकत्वमित्याह । स्वप्रकाशेति । यथा गुरुमते श्यामताया नित्यतया तत्समवायनाशादेव पाकरक्तघटे तदनुपलम्भः, यथा वा पुरुषान्तरे घटज्ञानसत्त्वे ऽपि स्वस्मिंस्तत्समवायाभावात्तद-

नुपलम्भ एवं स्वस्मिन्ननुभूतघटज्ञानस्य नित्यत्वे ऽपि कालान्तरे स्वसमवायाभावेनैवानुपलम्भोपपत्तेर्न तदभावसिद्धिरित्यर्थः ॥

नवीनमते ज्ञानस्वप्रकाशत्वसमवायनित्यत्वयोरङ्गीकारादनुपलब्धेः प्रतियोगिसत्त्वविरोधित्वादनुभवाभावो निश्चेतुं शक्यत इत्याशङ्क्य तन्मतेऽप्यनुपलब्धिरन्यथापि सम्भवतीत्याह । यदि चेति ।

( नवीनमतेऽप्यनुपलब्धेरन्यथासम्भवः । )

**यदि चार्वाचीनः कश्चित्स्वप्रकाशं ज्ञानं समवायो नित्य इति ब्रूयात्तन्मते ऽपि न ज्ञानाभावः शक्यते ग्रहीतुं प्रतियोगिसत्ताविरोध्यनुपलम्भस्याभावात् ।**

ननु स्वप्रकाशज्ञानग्रहे तत्तत्सम्बन्धातिरिक्तापेक्षाभावात्पटज्ञानकाले घटज्ञानानुपलम्भस्तत्सत्ताविरोध्यस्तीति चेन्न। तन्मते पटज्ञानकालीनस्य घटज्ञानसमवायानुपलम्भस्य तन्निरूपकतज्ज्ञानविरहादिव घटज्ञानानुपलम्भस्यापि तन्निरूपकघटसम्बन्धविरहादप्युपपत्तेः । पटज्ञानकाले ज्ञाने तदीयत्वानुभवाभावे ऽपि ज्ञानमात्रानुभवस्य सत्त्वात् । ज्ञानज्ञेययोः स्वरूपमेव सम्बन्ध इति मते ऽपि यथा च त्वदी-

यद्घटाभावभूतलयोः स्वरूपमपि सम्बन्धः कालभेदेन न तु सर्वदा, अन्यथा पटवति घटाभावभ्रमस्य विद्यमानाभावभूतलवैशिष्ट्यविषयत्वेन प्रमात्वापातात् । एवं ज्ञानज्ञेययोरपि कालभेदेन सम्बन्धस्वभावं स्वरूपमिति सम्बन्धिनोः सतोरपि सम्बधाभावोपपत्तेः ।

तन्मते ज्ञानसत्त्वे तदुपलम्भे ऽपेक्षणीयान्तराभावादनुपलम्भो भावमन्तरेण न सम्भवतीति चोदयति । ननु स्वप्रकाशेति । पटज्ञानसमये ज्ञानमात्रानुपलम्भो ऽसिद्ध एव, घटज्ञानत्वेनानुपलम्भस्तु तत्काले घटसम्बन्धाभावेनैव नित्यस्याप्युपपद्यते । यथा तन्मते तत्काले घटज्ञानसमवायानुपलम्भः, समवायस्य नित्यत्वे ऽपि घटज्ञानेन स्वरूपसम्बन्धाभावादेव तद्वदिति परिहरति । न तन्मत इति । ननु समवायस्यैकत्वात्तस्य पटज्ञानकाले ऽप्यनुभूयमानत्वान्नानुपलम्भ इत्याशङ्क्य तुल्यमित्याह । पटज्ञानेति । ननु पटज्ञानसमये घटस्याप्यसत्त्वाभावाज्ज्ञानस्यापि सत्त्वे स्वरूपद्वयात्मकसम्बन्धस्यापि सत्त्वेन घटीयत्वेनानुपलम्भो न स्यादित्याशङ्क्य ज्ञानज्ञेययोः स्वरूपसम्बन्धनियमाभावात्तदङ्गीकारे ऽपि पटज्ञानकाले विद्यमानस्यापि घटस्य सम्बन्धरूपत्वाभावात्कालविशेष एव स्वरूपस्य सम्बन्धरूपत्वात्तदा ज्ञाने घटीयत्वं नास्तीत्याह । ज्ञानज्ञेययोरिति । ननु सिद्धान्ते ऽपि कथं वृत्त्यभावानुभवः । विद्यमानाया अपि तस्याः कालभेदेन स्वरूपसम्बन्धाभावेनानुपलम्भोपपत्तेरिति चेन्मैवम् । प्रत्यक्षवृत्तेर्मुख्यसम्बन्धेन यावत्स्व

वेनानयनमशक्यमपि तथाऽपि योगेऽधिमासगुणे तादृशगुणाधिमासयोगो भवति। अयं कल्पसौरभक्तः फलमधिमासाः शेषं चान्द्रदिनगुणितकल्पाधिमासरूपम्। इदं दिनाद्यधिशेषज्ञानार्थं कल्पसौरभक्तम्। तत्राचार्यैरहर्गणानयनेऽधिशेषस्य प्रयोजनाभावेन हरभक्तं न कृतं यथास्थितमेवोपयोगेन स्थापितम्। सम्पूर्णचान्द्रसंख्याया केवलाधिमाससंख्यान्यूनस्य प्रतिपादनादत एवाधिशेषं दिनादिकं न ग्राह्यमित्युक्तमतस्ते केवलाधिमासास्तद्योगस्य योज्या इति योज्ययोजकयोरेकजातित्वेन योगसम्भवादधिमासाना दिवसाः कार्याः। न च लाघवादधिदिनान्येवानुपातेनानीय योज्यानि अधिमासद्वारा तद्दिनानयनं गौरवमिति वाच्यम्। अधिशेषदिनयोजनापत्तेः। सम्पूर्णाधिदिनानामनुपातेन सिद्धत्वात् न ह्यधिमासान्ते सौरदिनसंख्याज्ञानं येन तदानीताधिदिनेषु अधिशेषाभावान्नाधिशेषमधिकमिति लाघवं स्यात्। एतानि केवलाधिमासदिनानि तद्योगे योज्यानि। कल्पादिष्टतिथिपर्यन्तं सम्पूर्णतिथ्यात्मकचान्द्राहर्गणः। अत उक्तं पृथगित्यादि विधोरित्यन्तं युक्तमित्युपपन्नम्। सावनज्ञानार्थं स्वानीतदिनचया हीनाः कार्याः। तत्र कल्पचान्द्रदिनैः कल्पावमानि तदेष्टचान्द्रदिनैः कानीत्यनुपातेनानीतसावयवावमैर्हीनश्चान्द्राहर्गणस्तिथ्यन्ते सावयवसावनाहर्गणो भवति। तत्रापि तिथ्यन्तकालस्यानियमेनाज्ञानात् सावयवाहर्गणेन गुणनादौ गौरवाच्च सूर्योदयकालस्य षष्टिसावनघट्यन्तरेण नियतत्वात् सूर्योदयावधित्वेन निरवयवसावनसिद्धेः सूर्योदयकालीनकरणार्थं तिथ्यन्तसूर्योदयमध्यवर्त्तिसावनावयवो योज्यः। तत्सावनावयवस्यावमशेषत्वेन तिथ्यन्तरूपचान्द्रसूर्योदयरूपसावनयोरन्तरकालस्यावमशेषत्वात् पूर्वानुपातानीतावमाधोऽवयवतुल्यत्वात् सावयवावमैर्हीनो न कृतश्चान्द्रोऽहर्गणः। अत एवावमशेषाद्घट्यादिकं न ग्राह्यम्। सूर्योदयकालेऽहर्गणस्य साधनादित्युक्तम्। अथ सावनाहर्गणश्चान्द्रावमान्तरेणोत्पन्न इति सूर्यस्य अन्यग्रहसावनेन चान्द्रदिनान्तरस्य पूर्वैरवमसंज्ञाऽभिधानात् स्वाभाविकानुपातेन स्वस्वकाले उपचयापचययोरग्रहान्मध्यमत्वम्।

ग्रहाणां सप्तसंख्यया तदधीश्वरदिनानामपि तत्संख्यात्वाद्वारज्ञानार्थमहर्गणः सप्ततष्टः शेष कल्पादौ रविवारस्य सत्त्वात् तदादिगणनया गतवार. । अहर्गणस्य गतसंख्यात्वात् वारगणनाक्रमे युक्तिस्तु

"होरेशाः सूर्यतनयादधोऽधः परिकीर्त्तिताः"* ।

इति सूर्यसिद्धान्तानुसारेण सूर्यवारे स्वादितो गणनया "होरा सार्धद्विनाडिका" ।

इत्युक्तप्रमाणेनाहोरात्रस्य चतुर्विंशतिहोरासंख्यातः सूर्यात् अधः कक्षाक्रमेण होरेशा गताश्चतुर्थो होरेशश्चन्द्रो द्वितीयदिनारम्भे । एव क्रमेण सूर्योदये तस्यैव तत्कालादिद्वितीयसूर्योदयान्तररूपसावनदिनेशत्वम् । एवमनया रीत्या चन्द्राद्भौमो भौमाद्बुध इत्यादि । एतत्क्रमे सूर्योक्तमेवागम. प्रमाणम् ।

"अथ तेषां क्रमं वक्ष्ये ग्रहकक्षावशाद्ग्रहम् ।
सूर्यचन्द्रौ द्युरात्रीशौ तस्मात् प्रथममादृतौ ॥
तदुपर्युपरिस्थाना ग्रहाणामग्रतः स्थितिः ॥"

इत्यपि केचित् । अत उपपन्न पृथगित्यादि न ग्रह्यत इत्यन्तमुक्तम् । बहवस्तु द्वादशगुणितसौरवर्षाणि सौरवर्षादौ सौरमासास्तेषां तदादिसौरगतमासादीनामज्ञानेन चैत्रादिचान्द्रा योजितास्तेषु सौरमासाना सत्त्वात् । तस्मादिष्टसौरमासाः सौरचान्द्रान्तररूपाधिशेषाधिकाः सन्ति ते त्रिंशद्गुणा गततिथियुक्ता इष्टकाले फलात् सौरदिनान्यधिशेषेषु तान्यधिकानि अत एभ्योऽधिमासात् कल्पसौरैः कल्पाधिमासास्तदा कल्पितेष्टसौरदिनैः के इत्यनुपातेनानीय केवला योज्याः । नन्वधिशेषदिनादिकमपि सौरवर्षादिगतसौरदिनानामज्ञानेन चैत्रादिगतचान्द्रदिनयोजने पूर्वकल्पितेष्टसौरदिनेऽधिशेषस्य दिनात्मकस्याधिकत्वेन सत्त्वात् । अन्यथाऽधिशेषस्याधिक्यं चान्द्रे स्यात् । न चाधिमासानयने कल्पसौरेऽधिशेषस्याधिकत्वेनाधिशेषगुणिताधिमासेभ्यः कल्प-

* नेदं पद्यार्धं प्रचरितसूर्यसिद्धान्ते उपलभ्यते ।

सौरदिनभागेन फलस्याधिमासावयवदिनाद्यधिशेषेऽधिकत्वात् कथ तत्त्याग इति वाच्यम् । अधिकस्याशुद्धत्वेनापि त्यागसंभवात् । तस्माच्चान्द्राहर्गणस्य वास्तवत्व युक्तमित्याहुस्तन्न विजात्योर्योगे पृथक् स्थितिरिति मूलकारेण बीजे उक्तस्य जलाञ्जलिदानापत्तेः । वास्तवसौराणामभावेनानुपातासंभवात् । अहर्गणस्य शुद्धत्वेऽप्यधिकत्वेनाधिशेषस्याशुद्धत्वापत्त्या तत्साधितसूर्यचन्द्रप्रकारादौ बहून्तरत्वेनानर्थक्यापत्तेश्च ॥ ३ ॥

इदानीं ग्रहानयनमाह ।

द्युचरचक्रहतो दिनसंचयः
कहहृतो भगणादि फलं ग्रहः ।
दशशिरःपुरि मध्यमभास्करे
क्षितिजसंनिधिगे सति मध्यमः ॥४॥

**वा. भा.**–अहर्गणो भगणगुणो कहहृते मध्यमो ग्रहो भवति । स च लङ्कायां मध्यमे रवौ क्षितिजासन्ने कदाचिदूर्ध्वस्थे कदाचिदधःस्थिते भवतीति ज्ञेयम् । तत्कारण गोले कथितं व्याख्यात च ॥ ४ ॥

**वा वा**–इदानीं ग्रहानयनमाह । द्युचरचक्रहत इति । कल्पकुदिनैः कल्पग्रहभगणा लभ्यन्ते तदेष्टकुदिनैः किमिति ग्रहो भवति । के चिल्लङ्काया मध्याह्नमध्यरात्रास्तमनकालेषु ग्रहगतिप्रारम्भमिच्छन्ति तन्मतनिवारणाय पूर्वक्षितिजस्य इति । अग्रे चोदयान्तरकर्म वक्ष्यति तस्मात् संनिधिगे इत्युक्तम् । देशान्तरचरसंस्कारयोर्वक्ष्यमाणत्वाल्लङ्कापूर्वक्षितिजसंनिधिगे इति । भास्वत्फलसंस्कारस्य वक्ष्यमाणत्वान्मध्यमभास्कर इत्युक्तम् ॥ ४ ॥

**मरीचिः**–अथ यदर्थमेतावान् प्रयासस्तद्ग्रहसाधन द्रुतविलम्बितेनाह द्युचरचक्रहत इति । द्युचरपदस्योपलक्षणेन कल्पे येषां भगणा उक्तास्तद्भगणैर्गुणितोऽहर्गणः कल्परविकुदिनभक्तः फलं यद्गुणाद्यं विकलापर्यन्त ग्रहो भवति । यद्गणा गुणनार्थं गृहीतास्तद्भवतीत्यर्थः । तथा

चाहर्गणः कल्पभगणगुणः कल्पसूर्यसावनभक्तः फलं कल्पाद्गतभगणाः । शेषं द्वादशगुणं हरभक्तं भगणपूरणकालाद्राशयः । पुनः शेषं त्रिंशद्गुणं हरभक्तं राशिभोगादंशाः । पुनः षष्टिगुणं हरभक्तं कलाः । पुनः षष्टिगुणं हरभक्तं विकला इत्यादिरीत्या भगणाद्यात्मको ग्रहः । देशानामनन्तत्वेनाय क्व इत्याह दशशिर.पुरीति लङ्काभूगर्भदेशे । कालोपाधीनामनन्तत्वेन कालनियममाह मध्यमभास्कर इति । मध्यमसूर्ये क्षितिजनिकटे सति । आकाशलग्नभूवृत्तं क्षितिजम् । मध्यमसूर्योदयप्रागपरकाले तत्काले चेत्यर्थः । अस्याकाशे गोलवेधानीतस्पष्टप्रत्यक्षग्रहेण विसंवादान्मध्यम इति । आकाशेऽस्यादर्शनात् स्वतः सिद्धो विसंवादः । अत एव स्पष्टाधिकारोक्तफलसंस्कारेणास्य मध्यमस्य स्पष्टत्वमुक्तम् ।

अत्रोपपत्तिः । कल्परविसावनैः कल्पभगणतुल्यो भोगस्तदा कल्पादिगतेष्टसावनदिनैः क इति फलं कल्पादिष्टकालपर्यन्तं गतभोगस्तस्येति लक्षणया भोगे ग्रहपदं प्रयुक्तमाचार्यैः । स्वस्वकाले उपचयापचययोः सत्त्वाद् तत्स्वाभाविकानुपातेनानीतग्रहस्याकाशे विसंवादान्मध्यमत्वं लङ्काप्रथमसूर्योदयकालाद्ग्रहचारप्रवृत्तेस्तत्कालाहर्गणादीनां मध्यममानेन सत्त्वान्मध्यमसूर्योदये लङ्काभूगर्भे इत्युक्तम् । अग्रे भूगर्भगणितस्य किञ्चित्संस्कारेण भूपृष्ठगणितत्वस्य प्रतिपादनात् । अथ तत्रापि मध्यमसावनषष्टिघटिकामितमत्र नाक्षत्रघटीज्ञानं घटिकादिकमार्क्षमानादित्युक्तत्वात् तत्रैकदिने नक्षत्रोदयद्वयान्तरकाले तदन्तर्गते नाक्षत्रषष्टिघटिका एता गतितुल्यभचक्रावयवप्रवहवायुक्तभोगकालासुयुताः । यद्येकराशिकलाभिरुदयासवो लभ्यन्ते तदा सूर्यमध्यकलाभिः के इत्यनुपातेन प्रतिराशीनामुदयासुवैलक्षण्यात् मध्यमसावने नाक्षत्रघटीमानवैलक्षण्यम् । अस्याप्येकरूपत्वाभावादनुपातानीताहर्गणस्य मध्यमसावनमानेनाप्तत्वात् । कुन्दरराशिकलास्वोः समत्वदर्शनेन सूर्यगतितुल्यासुयुतनाक्षत्रघटिकात्मकमध्यमानासन्नस्यसावनस्यैकरूपत्वादङ्गीकारेणाहर्गणस्यैतत्-

कालीनत्वात् तदुत्पन्नग्रहस्यापि एतत्कालस्य मध्यमानीतात् प्रागपरकाले नियमेन सम्भवात् । मध्यमभास्करे क्षितिजसंनिधिगे सतीत्युक्तम् ॥ ४ ॥

इदानीं ज्ञातेऽर्केऽवमशेषाच्चन्द्रमाह ।

कोट्याहतैरङ्ककृतेन्दुविश्वै-
न्यूनाहशेषे विहृते लवाद्यम् ।
रविघ्नतिथ्याढ्यमनेन युक्तो
रविर्विधुः स्याद्विधुरूनितोऽर्कः ॥५॥

**वा. भा.**—अस्योपपत्तिः। चन्द्रार्कयोरन्तरभागैर्द्वादशभिरेकैका तिथिर्भवति अतस्तिथयो द्वादशगुणास्तयोरन्तरभागा भवन्ति । ते यदि रवौ क्षिप्यन्ते तदा शशी स्यात् । यदि शशिनः शोध्यन्ते तदाऽर्कः स्यादिति युक्तमुक्तम् । किन्त्वेवं तिथ्यन्ते भवति । अथ चन्द्र औदयिकः साध्यः। तत्र तिथ्यन्तार्कोदययोर्मध्येऽवमशेषं वर्त्तते । तच्च सावनम् । तस्य सावनत्वं गोले प्रतिपादितम् । तच्चानुपातेन चान्द्रं कार्यम् । यदि कल्पकुदिनैः कल्पचान्द्रदिनानि लभ्यन्ते तदाऽवमशेषान्तःपातिभिः कुदिनैः किमिति । पूर्वमवमशेषस्य चान्द्रदिनानि भागहारः इदानीं तानि गुणकारः। तुल्यत्वात् तयोर्गुणकभाजकयोर्नाशे कृते कुदिनानि भागहारः । फलं चन्द्रदिनात्मकं भवति । तद्द्वादशगुणितमंशात्मकं भवति । अतो द्वादशभिः कुदिनानामपवर्त्ते कृते खाभ्रबाणगिरिरामखत्रिगोशक्रविश्वमितो भागहार उत्पन्नः । तत्र लाघवार्थमाद्येषु सप्तसु स्थानेषु शून्यान्येव कृत्वा भागहारः पठितः । यतस्तथाकृते एकाऽपि विकला नान्तरं भवति । अतस्तैश्च भागैर्युतोऽर्कः शशी स्यादित्युपपन्नम् ॥ ५ ॥

**वा. वा.**—अथावमशेषज्ञाने रविचन्द्रयोरन्यतरज्ञाने च तदन्यज्ञानमाह । कोट्याहतैरिति । रव्युदयकालिकरवौ रविचन्द्रान्तरयोगेन विधुर्भवति। तत्र रविचन्द्रान्तरज्ञानम् । तद्यथा । पूर्वानीतदर्शान्ताद्यस्यां तिथौ रव्युदयकालिकोऽर्को ज्ञातोऽस्ति तत्तिथ्यवधिका या गततिथयस्ता द्वादशगुणा रविचन्द्रान्तरांशा भवन्ति । यतो विरविचन्द्रलवा द्वादशहृता गततिथय

इति। परन्तु तद्रविचन्द्रान्तरं गततिथ्यन्तावधि जातम्। अपेक्षितं च वर्त्त-मानतिथ्युदयावधि। तिथ्यन्तकालिकोदयकालिकयोरहर्गणयोरन्तरमिति तदवमशेष सावनम्। अवमशेषतो रविचन्द्रान्तरांशज्ञानार्थमनुपातः। यद्येकेन सावनेन रविचन्द्रगत्यन्तरांशा एते १२। ११। २७ लभ्यन्ते तदाऽवमशेषान्त.पातिना किमिति गत्यन्तरांशैरवमशेष गुणनीयम्। शेषस्य कल्पचान्द्रा हरः। गुणहरौ गुणेनापवर्त्य शिष्यक्लेशो माभूदित्या-चार्येणाद्येषु सप्तस्थानेषु शून्यान्येव गृहीत्वा हरः पाठपठित इति सर्वं निरवद्यम् ॥५॥

**मरीचिः**—अथ लाघवार्थं प्रकारान्तरेण सूर्यचन्द्रान्यतरज्ञाने तदन्यतरज्ञानमुपजातिकयाऽऽह कोट्याहतैरङ्ककृतेन्दुविश्वैरिति। न्यूनाह-शेषेऽवमशेषे। अहर्गणानयने गतावमे प्राप्ते यद्ग्राह्ये शेष तस्मिन्नित्यर्थः। विश्वेदेवास्त्रयोदश प्रसिद्धा। एभिरङ्कैः स्थापितैः—१३१४९०००००००० विहृते यत् फलं भागाद्यं तद्द्वादशगुणतिथिभिर्युतं कार्यम्। अत्र तिथिशब्देन चान्द्राहर्गणः प्रागानीतः। कल्पादीष्टकाले तत्साधनात्। अनेनानीतेन रविरहर्गणानीतो भगणादिविकलावयवान्तः। अंशाद्येषु युतश्चन्द्रः स्यात्। तादृशश्चन्द्रहीनः सूर्यः स्यात्।

अत्रोपपत्तिः। सूर्यचन्द्रान्तरभागाः साध्यास्तदैव सूर्यचन्द्रान्य-तरज्ञाने तदन्यतरज्ञानं तत्साधनं च द्वादशभागान्तरेणानयोरेका तिथिरुत्प-द्यत इति प्रतिपादितत्वादेकतिथिपर्यायचान्द्रदिने तयोर्द्वादशभागान्तरं कल्पादीष्टचान्द्रदिनेषु प्रागानीतेषु किमित्यनुपातेन चान्द्राहर्गणो द्वादशगुण इष्टतिथ्यारम्भेऽन्तरांशगण.। न च लाघवात् शुक्लादिगतति-थ्यनुपातेनान्तरांशज्ञानं मासान्ते सूर्यचन्द्रयोस्तुल्यत्वादिति वाच्यम्। पूर्वा-हर्गणानीतभगणेष्विन्दुगतमासतुल्यान्तरापत्तेः। अपेक्षितस्तादृशसूर्यो-दयासन्नकालेऽहर्गणानीतस्यैतत्कालीनत्वात्। अतस्तिथ्यन्ततत्काल-मध्ये यस्तिथ्यङ्कः स द्वादशगुणः पूर्वानीतान्तरांशगणश्च योज्यः। तत्राव-

मशेषस्य सावनस्य तदन्तरे सत्त्वात् चान्द्रीकरणेन तिथ्यङ्कज्ञान सुलभमिति कल्परविसादिनैः कल्पचान्द्रदिनानि तदैतत्सावनात्मकावमशेषेण कान्यनुपातेनावमशेषस्य पूर्वं कल्पचान्द्रहरस्य कल्पचान्द्रा गुण इति गुणहरयोस्तुल्यत्वाचाशेऽवमशेषस्य कल्परविसावनदिनानि हार इति। चान्द्रावमशेषस्वरूपमिद द्वादशगुणित तदन्तराले तदन्तरांशा भवन्तीति गुणहरौ गुणेनापवर्त्य हरस्थाने खाभ्रबाणगिरिरामखत्रिगोशक्रविश्वमिताङ्क १३१४९३०३७५०० उपपन्नः। तथा चात्रमशेष भाज्यस्य हरभक्त फल भागाद्य तत्राचार्येण हरे एकादिसप्तस्थानेषु शून्यानि गणितसौकर्यार्थं कृतानि धूलीकर्मणा तादृशहरभक्तफलयोः सपूर्णैकविकलान्तराभावात्।

"महीदिनैर्द्युत्तयशेषत' फल दिनादि यत् तत् तिथिभिः समन्वितम्।
तेनार्कनिघ्नेन युतो रविः शशी हीनोऽशक्रेष्विन्दुरयोणाद्दीधितिः॥
रवीन्दुगत्यन्तरभागताडित त्तयावशेष शशिवासरोद्धृतम्।
रविघ्नतिथ्यशयुत तु निःक्षिपेद्रवौ विधुस्तद्रहितो विधू रविः॥"

इति प्रकारद्वय सिद्धान्तशेखरकृता यथागतमुक्तम्। एव चावमशेषे कोट्याहतैरङ्ककृतेन्दुविश्वैरित्युक्तहरभक्ते सूर्यचान्द्रान्तरांशास्तिथ्यन्ततत्कालान्तरे एते द्वादशगुणाश्चान्द्राहर्गणे युक्तास्तादृशसूर्योदयासवकाले तदन्तरांशाः। एतैः सूर्यो लघुगतिर्युक्तश्चन्द्रो भवत्यर्थाच्चन्द्रो हीन सूर्यो भवत्यत उपपन्न कोट्याहतैरङ्ककृतेन्दुविश्वैरित्यादि विधुरूनितोऽर्क इत्यन्तम्॥ ५॥

इदानीमधिमासावमशेषाभ्या चन्द्रार्कानयनमाह।

कोट्याहतैर्षड्द्रवभैरवाप्तं
न्यूनाहशेषे विहृते कलाद्यम्।
तत् स्याद्धनाख्यं तरणेर्विधोस्तत्
त्रिभूहतं स्वेषुगुणांशयुक् स्वम्॥ ६॥
चैत्रादियातास्तिथयः पृथक्स्था
विश्वैर्हताः सूर्यविधू लवाद्यौ।

तौ चाधिशेषाच्छशिमासलब्ध्या
हीनौ युतौ स्वस्वधनाह्वयाभ्याम् ॥ ७ ॥

वा. भा.—प्रथमशेषाद्भवभैः कोटिगुणैर्भक्ताद्यल्लब्धं कलाद्यं तद्र-विधनसज्ञं भवति। तदेव फलं त्रयोदशगुणं स्वकीयेन पञ्चत्रिंशदंशेन युतं विधोर्धनसज्ञं भवति। अथ चैत्रादिगतास्तिथयो द्विः स्थाप्याः। द्वितीयस्थाने विश्व—१३ गुणास्तावशात्मकौ रविचन्द्रौ भवतः। परमधिमासशेषाच्छशिमासभक्ताद्यत् फलं तेन द्वावप्यूनीकृतौ। तथा स्वस्वफलेन धनाख्येन युक्तौ कृतौ।

अत्रोपपत्तिः। रविवर्षान्ताद्यावन्तोऽर्कदिवसा गतास्तावन्तोऽर्कभागाः किल भवन्ति। ते कियन्त इति न ज्ञायन्ते। रविवर्षान्तोऽपि न ज्ञायते। अतश्चैत्रादिगतास्तिथयो यावन्तस्तावन्त एव सौराहाः कल्पिताः। यथाऽहर्गणानयने स एव भागात्मको रविः। असौ पृथग्विश्वगुणः कृतः। यतस्ताभिरेव द्वादशगुणाभिस्तिथिभिर्युक्तः कर्तव्यः। तिथौ तिथौ हि रविचन्द्रान्तरं द्वादश भागाः। अथ चैत्रादिगततिथितुल्याः सौराहाः कल्पितास्तेऽधिमासशेषसभूतैश्चन्द्रदिनैरधिका जाताः। यतो मध्यममेषसङ्क्रान्तिकालो रव्यब्दान्तः। तस्य चैत्रादेश्चान्तरं तिथ्यात्मकमधिमासशेषम्। यथा गोले कथितम्।

"दर्शावतः सङ्क्रमकालतः प्राक् सदैव तिष्ठत्यधिमासशेषम्।"

इति। तत् तावत् सौरचान्द्रान्तरमधिकं जातम्। तथा कल्पितचान्द्रदिनसबन्धि यत् सौरचान्द्रान्तरं तदप्यधिकं जातम्। तदप्यधिमासशेषसभूतम्। एतदुक्तं भवति। अधिमासशेषात् त्रिंशद्गुणात् स्वच्छेदेन हृताद्ये लभ्यन्ते ते चान्द्राहाः। तेषां चान्द्राणां यावन्तः सौरा भवन्ति तैरधिकोऽर्को जातः। अतस्ते शोध्याः। तेषां चान्द्राणां सौरकरणायानुपातः। यदि कल्पचान्द्राहैः कल्पसौराहा लभ्यन्ते तदाधिमासशेषस्थैः किमिति। पूर्वमधिमासशेषस्य त्रिंशद्गुणस्य सौराहा भाग-

हार इति स्थितम् इदानीं गुणकारस्तुल्यत्वात् तयोर्नाशे कृतेऽधिमासशेषस्य चान्द्राहा भागहार.। ततः पुनर्भाज्यभाजकयोस्त्रिशताऽपवर्त्तने कृतेऽधिमासशेषस्य चान्द्रमासा भागहारः । फल सौराहाः । त एव भागाः । तैरूनः कल्पितोऽर्को निरन्तरः स्यात् । पर तिथ्यन्ते । अस्यौदयिकः कार्यः । तिथ्यन्तार्कोदययोर्मध्येऽवमशेषम् । तच्च सावनम् । तेन चन्द्रार्कावौदयिकौ कार्यौ । तत्रानुपातः । यदि चान्द्राहतुल्येन परमावमशेषेण रविगतिर्लभ्यते तदेष्टेनानेन किमिति । एवमवमशेषं रविगत्या गुणनीयं चान्द्राहैर्भाज्यम् । अत्र गुणकभाजकयो रविगत्याऽपवर्त्ते कृते भागहारे किंचित् प्रक्षिप्य कोट्याहतभवभतुल्यः सुखार्थं भागहारः कृतः स्वल्पान्तरत्वात् । तेन भागहारेणावमशेषे भक्ते या. कला लभ्यन्ते ताः कला रवौ क्षेप्या इति धनसज्ञा । अथ चन्द्रस्य परमेऽवमशेषे चन्द्रगतितुल्या. कला भवन्ति । अतो रविगत्या चन्द्रगतौ हृताया स्वप ञ्चत्रिंशदशाधिक चन्द्रस्य धनं भवतीत्युपपन्नम् । एव स्वस्वफलेनाधिकौ तिथ्यन्तकालिकौ चन्द्रार्कावौदयिकौ भवत इति सर्व निरवद्यम् ॥ ६-७ ॥

**वा.भा.**—इदानीं चन्द्रार्कानयनमधिमासावमशेषाभ्यामाह । कोट्याहतैर्यद्भवभैरिति । यस्मिन् चैत्रशुक्लादितो वर्त्तमानमासि यस्यां वर्त्तमानतिथौ सूर्योदये रविचन्द्रौ कर्त्तुमिष्टौ तद्द्युगणसमसाधिताहर्गणादधिमासावमशेषे ज्ञातव्ये । नन्वधिशेषमिदमवमशेष च कयोरन्तर कि जातीयमिति चेदुच्यते । कल्पसौराहर्गणस्य खण्डत्रयम् । एक तावत् कल्पादेः समभीप्सितकालनिकटपतितगताधिमासान्तावधि । निकटपतिताधिमासन्तादिष्टसौरवर्षावधि द्वितीयम् । तृतीय तु चैत्रादिगतमासागततिथ्यवधिका ये चान्द्रास्तत्तुल्यसौराहात्मकम् । इदं तृतीय खण्ड सौरवर्षादितश्चैत्रादिमासेष्टतिथ्यवधि ये वास्तवाः सौराहास्तेषामज्ञातत्वेनेदृशमङ्गीकृतम् । एवं खण्डत्रययोगः सौराहर्गणः "कथितकल्पगतोऽर्कसमागणा" इत्यनेन कृतः । अस्य सौराहर्गणस्य चान्द्रीकरणमनुपातेन । कल्पसौरैः कल्पाधिमासास्तदेष्टसौरैः किमिति लब्ध सावयवं गताधिमासादि । इदं

दिनीकृत्य सौराहर्गणे योज्य चान्द्रद्युगणो भवति । यद्वा गताधिमासानां सावयवानामपि खण्डत्रय कृतम् । एक लब्धाधिमासानामेव ये दिवसास्त-त्तुल्यम् । द्वितीयमिष्टसौरवर्षादिजशुद्धिदिनतुल्यम् । तृतीय तु सौरव-र्षादित इष्टचान्द्रमासगततिथितुल्यसौरावधि यदधिशेषं तत्तुल्यम् । प्रथ-मसौराहर्गणखण्डे प्रथम लब्धाधिमासदिवसतुल्य योजितं जाताश्चान्द्राः । द्वितीयखण्डे सौरवर्षादिजा शुद्धिर्योज्या तत्रापि चान्द्रा भवन्ति । तृती-येऽपि सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौराहजनितं योजितं त्रयाणा योगे चान्द्रद्युगणो भवति परन्तु सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौ-राहा यस्मिन् काले भवन्ति तत्कालीनः । अपेक्षितस्तु चैत्रादित एव चैत्रादिगतचान्द्रान्तावधि । अनयोरन्तरमधिशेष पूर्वमनुपातसिद्धम् । इदं शोध्यम् । पूर्वं पृथक् पृथक् खण्डत्रयेण योजनीयमधुना युगपदेव हेय-मिति लब्धाधिमासा एव दिनीकृत्य योज्या इत्युक्तम् । चैत्रादितश्चैत्रा-दिगतचान्द्रतुल्यसौराहावधि ये कल्पचान्द्रास्तेषामन्तरम् । इद चान्द्रमेव तिथ्यात्मकम् । अतो वक्ष्यते गोले ।

"सौरेभ्यः साधितास्ते चेदधिमासास्तदैन्दवाः" ।

एवमहर्गणातः कल्पगतमाधने यश्चान्द्रगणः समायाति स तु कल्पा-दिमारभ्य चैत्रादितश्चैत्रादिगतचान्द्रावधि । तस्मादधिमासेषु साध्यमानेषु यदधिशेषं समायाति तत् सौरम् । यस्माच्चैत्रादितश्चैत्रादिगतचान्द्रावधि ये सौराः सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौराहावधि ये सौराश्च तेषामन्तरम् । अत एव वक्ष्यते "चेच्चान्द्रेभ्यस्तदा सौराः" इति । सौरेभ्योऽधिमासाधन चान्द्रीकरणार्थमेव करिष्यति । एवमवमेष्वपि योज्यम् । सौरवर्षादौ रवि' शून्यम् । सौरवर्षादित इष्टकालावधि यावन्तः सौराहास्तावन्तोऽर्कभागाः स्युः । चैत्रादितश्चैत्रादिगत-चान्द्रान्ते रविरपेक्षितः । सौरवर्षादित इष्टकालावधि ये सौरास्तेषामज्ञा-तत्वेन चैत्रादिगतचान्द्रा यावन्तस्तावन्त एव सौरवर्षादितो रवेरंशा इति कल्पितम् । तत्राधिशेष शोध्यं पूर्वन्यायेन । परन्तु सौरमधिशेषमेव

कल्पितसौरेभ्यो ह्यानुमुचित वास्तवसौरज्ञानार्थम् । यत्त तु सिद्धमधिशेष तत् तिथ्यात्मकमिति निरूपितम् । अधिशेषस्य सौरीकरणायानुपातः । कल्पचान्द्रे. कल्पसौरास्तदैक्याधिशेषेण त्रिंशद्गुणितेन कल्पसौराहभक्तेन किमिति सौरतुल्ययोर्गुणहरयोर्नाशे त्रिंशता चान्द्रेषु भक्तेषु चान्द्रमासा एव भवन्ति । तस्मादधिशेषाच्छशिमासलब्ध्या हीनाश्चैत्रादिगततिथयो रव्यंशा इष्टतिथ्यन्ते भवन्ति । अस्मिन् रवौ शुद्ध्यूनचैत्रादिगततिथयो द्वादशगुणा योज्याः । स च सौरवर्षादेश्चन्द्रो भवति । अत्र सौरवर्षादिजश्चन्द्रो योज्यः । द्वादशगुणिता शुद्धिः सौरवर्षादौ लवाद्यश्चन्द्रो भवति । तस्मादधिशेषाच्छशिमासलब्ध्या हीनास्त्रयोदशगुणाश्चैत्रादिगततिथयश्चन्द्रस्तिथ्यन्ते भवति । तिथ्यन्तसूर्योदययोर्मध्येऽवमशेषम् । तच्चान्द्रगणसिद्धत्वात् सावनम् । तत्रानुपातः । यद्येकेन सावनेन रविगतिर्लभ्यते तदाऽवमशेषेण किमिति रविगुतिर्गुणो हरस्तु कल्पचान्द्राहा. । गुणहरौ गुणेनापवर्त्य रविहरः कृतः । रविगत्या चन्द्रगतौ हृतायां स्वपञ्चत्रिंशांशयुक्तास्त्रयोदश लब्धाः । अत सर्वं निरवद्यम् । चन्द्राहतुल्येन परमावमशेषेण रविगतिर्लभ्यते तदेष्टेन किमित्यनुपातः कृतो भाष्यकारेण स त्वयुक्त एव । 'महीमितादहर्गणात् फलानी'ति सावनदिवस एव रविमध्यकला लभ्यन्ते न चान्द्रे । तस्मात् तावदिदमयुक्तम् । चान्द्रगणसाधितावमशेषस्य सावनस्येच्छास्थानीयस्य प्रमाणस्थानीयचान्द्राद्विजातीयत्वमपि दोषावहम् । त्रैराशिके प्रमाणेच्छयोः समानजातित्वनियमात् । समानजातित्व सादृश्यादवगम्यते । सादृश्यमुपाधिना क्वचिदवगम्यते । अशीतिवराटकप्रमाणकस्य पणस्याशीतिवराटकमानपणैः सादृश्यावबोधः । क्वचिज्जात्याऽपि । घटाना घटैः ।

"त्रिज्ये पृथक् कोटिभुजाहते ते कर्णोद्धृते लम्बपलज्यके स्तः" ।

इत्यत्र सर्वेष्वक्षेत्रेषु पलभा भुजो द्वादश कोटिः अक्षकर्णः कर्णो वृत्त्यैवमावर्त्तत इत्युपाधिनैव प्रमाणेच्छयोः समानजातित्वमिति न

कश्चिद्दोष । प्रकृते तु चान्द्रमिदं सावनमिदमित्युपाधिभेदेनैव भेदस्य सुज्ञानत्वात् । प्रमाणेच्छयोर्विसदृशत्वं न दण्डेन परानुद्यते । अतोऽन्यथा भाष्यं व्याक्रियते । तावच्चान्द्रदिनमध्ये सावनं पूर्वोक्तप्रकारेण ज्ञात्वा तन्मध्ये रविगतिमानमानयेत् । चान्द्राहतुल्येनेत्यत्र चान्द्रदिनेऽहः सावनं तच्चान्द्राहशब्देनोच्यते । इयमानीता रविगतिश्च रविगतिशब्देनोच्यते । तस्माद्युक्तोऽयमनुपातः । चान्द्रान्तर्वर्तिना सावनेन तन्मध्यवर्तिनी गतिर्लभ्यते तदाऽवमशेषेण किमिति । यद्वाऽवमशेषस्य कल्पचान्द्राहस्तस्मात् परमावमशेषं कल्पचान्द्रतुल्यमेव स्यात् तदेकसावनतुल्यमतो युक्तोऽनुपातश्चान्द्राहतुल्येन परमावमशेषेणेति । अत्र चान्द्राहपदेन कल्पचान्द्रा उच्यन्ते ॥ ६–७ ॥

**मरीचिः**–अथ प्रकारान्तरेणार्कचन्द्रानयनमुपजातिकाभ्यां लाघवादाह । कोट्याहतैर्यद्भवभैरवाप्तमिति चैत्रशुक्लादिष्टमासतिथिप्रारम्भसमयपर्यन्तं गतास्तिथयोऽहर्गणानयनगृहीता एव ग्राह्याः । तेन मध्येऽधिमासपातोऽपि चेत् तस्यापि तिथयो न ग्राह्या इति ध्येयम् । एताः पृथक्स्थास्त्रयोदशगुणा भागाद्यौ सूर्यचन्द्रौ स्तः । तिथिमितोऽशाद्योऽर्क. । त्रयोदशगुणितोऽशाद्यश्चन्द्र इत्यर्थः । विशेषमाह ताविति । अधशेषात् अहर्गणानयने गताधिमासेष्वागतेषु यद्वाज्यशेषं तदङ्कमितात् शशिमासलब्ध्या कल्पोक्तचान्द्रमासभक्ताप्तफलेन तौ सूर्यचन्द्रौ तिथ्यानीतौ हीनौ । पुनर्विशेषमाह युताविति । स्वस्वधनाङ्घ्रयाभ्यां यथास्थाने युतौ । एतेन धनशब्देन युतं कार्यमिति सूचनादथोदंशादिफलेनेत्युक्तं भवति । चकार समुच्चयार्थः । भागास्त्रिभद्युक्ताः । राश्याद्यौ सूर्यचन्द्रौ दिनगणानीतौ तत्तुल्यौ स्त इत्यर्थसिद्धम् । तयोर्भगणज्ञानं च गतवर्षगतचन्द्रमासज्ञानात् प्रयोजनाभावाच्च नोक्तम् । अथार्कचन्द्रयोर्धनफलानयनमाह । कोट्याहतैरिति । न्यूनाहशेषं कोट्याहतैर्भवभैरतैर्भक्तं यत् यदङ्कमितं कलाद्यं प्राप्तं तत् फलं सूर्यस्य धनाख्यं स्यात् । तत् सूर्यफलं त्रयोदशगुणं स्वपञ्चत्रिंशदशयुक्तं विधोः स्वं धनाख्यं स्यात् ।

° अत्रोपपत्तिः । "रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टम्"-इत्युक्तेन मेषाद्यर्क-सञ्चाररूपवर्षादितो ये सौरदिवसास्त एव मध्यमसूर्यांशाः । तेषामिष्ट-शुक्लादिगततिथयो द्वादशगुणिता योज्याश्चन्द्रोऽपि मध्यमः स्यात् । तत्र सौरवर्षाद्यज्ञानेन सौरदिनानां तदादीनामज्ञानात् चैत्रादिरूप-चान्द्रवर्षादिज्ञानात् । तत इष्टकालपर्यन्तं चान्द्रदिनज्ञानेन चैत्रादीष्ट-तिथ्यारम्भपर्यन्तं चान्द्रदिवसा एव सौरदिवसाः कल्पिताः । एतन्मित एवांशाद्योऽर्कः । अथ द्वादशगुणितशुक्लादिगततिथियुतश्चन्द्रज्ञानार्थं कार्यस्तत्र चान्द्रमासे पूर्णभगणान्तरसम्भवेन चैत्रादीष्टतिथयो द्वादशगुणा योजिता लाघवात् । भगणानां प्रयोजनाभावेन राश्यादिवास्तवचन्द्र-ज्ञानसम्भवात् । अतः सूर्यस्य तिथिमितत्वकल्पनाल्लाघवेन त्रयोदशगु णानां चैत्रादितिथीनां भागादिचन्द्रत्वं सिद्धम् । अत्र उपपन्नं चैत्रादी-त्यद्यर्धम् । अथ सौरदिनज्ञानात् कल्पितसौरे वास्तवचान्द्रमिते सौर-चान्द्रान्तररूपाधिशेषमधिकं वास्तवसौरदिनेभ्य इत्यधिशेषमुभयत्र रवि-सम्बन्धान्निष्काशनीयम् । तत्राहर्गणानयनेऽधिशेषं तदधिमासपतितका-लादिष्टतिथ्यारम्भपर्यन्तं ये चान्द्रदिवसाः सावयवास्तत्तुल्यसौरदिनाना-मधिशेषं चान्द्रांशाः । एतत् तत्र युक्तम् । इष्टकाले तन्मितसौराभावात् इष्टकाले वास्तवतादृशचान्द्रादधिशेषमानेयम् । तत्तुल्यचान्द्रदिनैः कल्पा धिमासास्तदेष्टचान्द्रदिनैः क इत्यनुपातेनाहर्गणोपपत्तौ दर्शितम् । एत-त्सौरमितकल्पसौरैः कल्पचान्द्रास्तदाऽनेन क इति गुणहरनाशेनाहर्गणा नयनेऽधिमासलब्धौ शेषं कल्पसौरभक्तरूपमधिशेषं चान्द्रांसद्रूमेत्रास्ति । अतः कल्पचान्द्रैः कल्पसौरास्तद्वैर्तात्सद्वैन क इति पूर्वविपरीतेन कल्पसौर-तुल्यगुणहरयोर्नाशाच्छेषं कल्पचान्द्रभक्तमित्यधिशेषं रूपं सौरं वास्तवं तत्काले सिद्धमिति वक्ष्यति । एतन्मासादिकमिति दिनात्मकार्थं त्रिंशद्गुणः । शेषस्येति गुणहरौ गुणेनापवर्त्य हरस्थाने चान्द्रमासाः । दिनत्रिंशदंशस्य मासत्वात् अत उपपन्नौ तौ चाधिशेषाच्छ्यधिमासलब्ध्या हीनाविति । अत्रैव पुष्पवन्ताविष्टतिथ्यारम्भे सूर्योदयकरणार्थमवम-

शेषेण सावनात्मकेन चाल्यौ । तदर्थं कल्पकुदिनैः कल्पसूर्यभगणकला ९३३१२०००००००० श्चन्द्रभगणकलाश्च १२४७६७१२८००००००० लभ्यन्ते तदाऽवमशेषात्मकसावनेन का इत्यनुपातेनाहर्गणसाधनेऽवमलब्धौ शेषस्य कल्पचान्द्रदिनहरस्य स्थितत्वेन भाज्यशेषं भगणकलागुणितं कल्पचान्द्ररविसावनदिनघातेनानेन खर्त्रघ्नशरेषुदेवेन्द्रतानाष्टाङ्करामगोद्वितत्त्वमितेन-२५२९३९८४९१४३३५५००००००००००० भक्तं लब्धं प्रत्येकं कलात्मकं योज्यम् । तत्र सूर्यस्य गुणहरौ गुणेनाब्जगुणितेन रविसुराङ्कमितेन ९३३१२०००००००० अपवर्त्य हरस्थाने किञ्चिन्न्यूनवेदाष्टाङ्करामाङ्काष्टषड्दिगभ्रमिता २७१०६८९३९८३ । ५९ । ३ । ४५ उत्पन्ना । अत्र गणितसौकर्यार्थं किञ्चिदधिकनृपषष्टिदिग्रामामिताः ३१०६०१६ । १५ योजिता जाता उक्तहरमिताः २७११००००००० । फलयोर्हरभक्तयोः पूर्णविकलान्तराभावात् इदं फलं सूर्यस्य योज्यमिति धनसञ्ज्ञाऽस्यात उपपन्नं कोट्याहतैरित्यादि तयोरित्यन्तम् । एवमुक्तमार्गेण चन्द्रहरेणानेन स्वर्गाङ्कनखाङ्कभनखमितेन २०२७६२०६२१ किञ्चिदधोऽवयवयुतेनावमशेषे भक्ते फलं चान्द्रचालनं स्यात् । तच्चेदं गुरुभूतं विहाय लाघवात् सूर्यफलादेव चन्द्रफलमानीतं तदर्थं सूर्यभगणैः सूर्यफलं तदा चन्द्रभगणैः किमित्यनुपातेन गुणहरौ हरेणापवर्त्य गुणस्थाने सावयवाङ्काः १३ । २२ । ७ । ४५ । इति सूर्यफलमनेन गुण्यं चन्द्रफलम् । तत्रापि खण्डगुणनार्थं त्रयोदशमितं भिन्नं कृतम् । अत्र खण्डं सावयवम् २२ । ७ । ४५ । इदमेकत्र करणार्थं खार्क—१२० वर्ग १४४०० गुणं जातम् ५३११ । तस्मात् द्वितीयस्थाने रविफलं भवत्रीषुगुणं खार्कवर्गभक्तमिति सिद्धम् । तत्रापि भवत्रीषुगुणस्य खार्कवर्गभागस्तदा त्रयोदशगुणितस्य को भाग इत्यनुपातेन लब्धो भागः किञ्चिन्न्यूनः सपादपञ्चत्रिशन्मितः ३५ । १५ । अत्र लाघवेनाधोऽवयवेऽनुपातः कृतः स्वल्पान्तरात् । सूर्यफलस्य न्यूनत्वाच्चात उक्तं विधोरित्यादि श्लोकान्तम् । आभ्यां फलाभ्यां योज्यौ क्रमेण

पुष्यवन्ताविति युतौ स्वस्वधनाद्दूयाभ्यामित्युक्तम् । एतत्प्रकारेणैव पुष्यवतोः सूक्ष्म साधनमुक्त सिद्धान्तशेखरे श्रीपतिना–

"कल्पाधिमासगुणितादवमावमावशेषात्
क्ष्माहोद्धृतात् फलयुत ह्यधिमासशेषम् ।
मासादिकं फलमतः शशिवासरैः स्यात्
क्ष्माहैर्हृताच्च दिवसाद्यवमाशेषात् ॥
चैत्रादितो विगतमासदिनैर्युत तत्
कृत्वा दिनाद्यय पृथग्गुणित च विश्वैः ।
मासादिना विरहिते विहिते क्रमेण
यद्वा दिवाकरतुषारकरौ भवेताम् ॥

इति श्लोकद्वयेन ॥ ६७ ॥

इदानीं प्रकारान्तरेण ग्रहानयनमाह ।

**अर्कसावनदिवागणो हतः**
**स्वस्वसावनदिनैस्तु कल्पजैः ।**
**खाभ्रबाणगिरिरामखत्रिगो-**
**शक्रविश्वविहृदाप्तराशिभिः ॥ ८ ॥**
**विवर्जितो विकर्त्तनो गृहादिको गृहादिकाः ।**
**ग्रहा भवन्ति वा बुधैर्विचिन्त्यमन्यदप्यतः ॥ ९ ॥**

**वा. भा**–ग्रहर्गणाद्ग्रहस्य कल्पसावनदिनैर्गुणितात् खाभ्रबाणगिरिरामखत्रिगोशक्रविश्वै–१३१४९३०३७५०० विहृताद्यत् फल राश्यादि तेन राश्यादिका रविरूनोऽभीष्टो ग्रहः स्यात् । अस्मादानयनप्रकाराद्बुधैरन्यदपि प्रकारान्तर विचिन्त्यम् ।

अत्रोपपत्तिः । भगणैरूना भभ्रमा ग्रहसावनदिवसा भवन्ति । तैः सावनैरूनास्ते भभ्रमा ग्रहभगणा भवन्ति अतोऽहर्गणाद्ग्रहद्रदनुपातेन गतभभ्रमान् ग्रहसावनदिवसांश्चानीय तैः सावनैस्ते भभ्रमा वर्जिता

द्विति तथा च गुरुत्वासमवायि कारणप्रयोज्याधःसंयोगरूपफलजनकं कर्म पतधात्वर्थस्तेन फलस्योपलक्षणत्वादवच्छेदकत्वाभावे तादृशफलवत्वस्य भूमौ सत्त्वेपि न तत्र कर्मत्वमिति ॥ अत एव धात्वर्थतावच्छेदकफलशालित्व कर्मत्वमित्यत्र पतत्यर्थे फलपद धात्वर्थतानवच्छेदकफलपरमिति शब्दमणावुक्तमुपाध्यायैः । इत्थञ्च पतिस्थलेऽन्यैव व्युत्पत्तिरिति ध्येयम् ।

**तद्धात्वर्थानधिकरणत्वे सतीति विशेषणाच्च न चैत्रस्य धात्वर्थतावच्छेदकफलग्रामसंयोगाश्रयत्वेपि कर्मत्वमिति स्वीकुर्वन्तीति संक्षेपः ।**

अथ चैत्रो ग्रामं गच्छतीत्यत्र चैत्रस्य कर्मत्वापत्तिः । धात्वर्थतावच्छेदकीभूतगमनानुकूलसंयोगस्य चैत्रेऽपि सत्त्वादित्यत आह तद्धात्वर्थेति तथा च समभिव्याहृतधात्वर्थानधिकरणत्वे सति धात्वर्थताच्छेदक फलाश्रयत्वमित्यर्थः । चैत्रस्य गमनानुकूलक्रियारूपधात्वर्थाधिकरणत्वाद्विशिष्टाभावस्य सत्त्वादिति धात्वर्थानधिकरणस्यैव कर्त्तुरीप्सततत्वरूपकर्मत्वमिति भावः । एतन्मते फलावच्छिन्नव्यापारस्य धात्वर्थत्वे तदेकद्देशफलेन सह द्वितीयार्थस्वर्थी नोपपद्य इत्यस्वरसो बोध्यः । अत्रायं सत्त्पार्थः । यद्याख्यातस्य कृतौ शक्तिस्तदाख्यातेन कर्तृकर्मणोरनभिधानात् पचति तण्डुलमित्यत्र कर्त्तरि तृतीया स्यात् । पच्यते तण्डुल इत्यात्र कर्मणि द्वितीया स्यात् । कर्त्तरि कर्मणि च तृतीयाद्वितीययोरनभिहिताधिकारीयत्वात् अनभिहिते कर्मणि द्वितीयेत्यादिसूत्रदर्शनादिति आख्यातेन कर्तृसख्यानभिहिता तदा कर्त्तेति तृतीया । यदा त्वभिहिता तदा प्रथमा । यद्याख्यातेन कर्मसख्या नाभिहिता तदा कर्मणि द्वितीया अभिहिता प्रथमेति । तथा च लाघवात्कृतावेव शक्तिरिति सत्त्पः । अत्रेदं प्रतिभाति । क्त्वाप्रत्ययस्यापि कृतावेवशक्तिः । समानकर्तृकत्वे सति पूर्वकालत्वापेक्षयाऽव्यवहितपूर्वकालत्वापेक्षया च लाघवात् । अत्रानन्तर्य्य

समानकर्तृकत्व च संसर्गस्तथा च भुक्त्वा व्रजतीत्यादौ भोजनानुकूलकृत्या श्रयकर्तृकं यद्भोजनानन्तरकालिकं गमनं तदनुकूलकृतिमाश्चैत्र इति बोधः एवं च समानकर्तृकयोः पूर्वकाल इति सूत्र सूपपन्न । अथोष्ठपुट-विभागरूपस्य मुखव्यादानस्य स्वापोत्तरकालीनतया मुख व्यादाय स्वपितीति प्रयोगो न स्यादिति चेन्न मुखव्यादानोत्तरमपि यत्किञ्चित्स्वापस्य सत्त्वादिति सङ्क्षेपः ।

तस्य शब्दस्य निराकाङ्क्षादावन्वयाबोधकत्वादाकाङ्क्षादिकं सहकारि तत्र यत्पदं यत्पदेन सह यादृशान्वयानुभवजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा भवति नामपदमुत्तरवर्त्तिविभक्तिपदेनैव सहान्वयबोधकमतस्तस्य समभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा । अत एव घटः कर्मत्वमित्यतो न घटमिति वदन्वयबोध आकाङ्क्षाविरहात् । धातुपदं च अख्यातपदेनैव सहान्वयविशेषबोधकमिति भवति तत्र आख्यातपदसमभिव्याहार आकाङ्क्षा अत एवानयनं कृतिरित्यादावानयतीति वन्नान्वयबोधः कृतिवाचकाख्यातसमभिव्याहाराभावेन निराकाङ्क्षत्वात् ।

अथ वृत्तिज्ञानैककार्यकारित्वरूपां सङ्गतिं दर्शयति । तस्येति यद्वा निराकाङ्क्षादौ प्रकृतशाब्दबोधान्वयासम्भवात्प्रकृतशाब्दान्वयसिध्यर्थमाकाङ्क्षादिरूपकारणचिन्तनादाकाङ्क्षादावुपोद्घातसङ्गतिं दर्शयति । तस्येति । अथ वा शाब्दबोधकारणस्य स्मृतत्वादुपेक्षाया अभावे प्रसङ्गसङ्गतिं दर्शयति । तस्येति । तस्य प्रमाणतया सिद्धस्य निराकाङ्क्षादौ घटः

कर्मत्वमानयनं कृतिरित्यादौ । आकाङ्क्षादिकं आकाङ्क्षादिज्ञान । आदिना योग्यतासत्तिसंग्रहः । तथा च लाघवादत्रैव योग्यतासत्योरपि सङ्गतिः प्रदर्शितेति भावः । शाब्दबोधसहकारीभूताकाङ्क्षाज्ञानविषयीभूताकाङ्क्षा केत्यत आह । यत्पदमिति । यत्पदं पटादिपदं । यत्पदेन सह द्वितीयादिपदेन सह । यादृशान्वयानुभावक पटप्रकारककर्मत्वादिविशेष्यकान्वयानुभवजनक । तत्पदस्य पटादिपदस्य । समभिव्याहारः द्वितीयादिपदेन सहानुपूर्वीविशेषः । तादृशान्वयबोधे पटप्रकारककर्मत्वादिविशेष्यकान्वयबोधे । अत्र महावाक्यार्थबोधे नेयमाकाङ्क्षेति हृदयम् । तल्लक्षणं योजयति भवतीत्यादिना । नामपदं । घटादिपदं । उत्तरवर्तिविभक्तिपदेन नामोत्तरद्वितीयादिविभक्तिपदेन । अन्वयबोधकं घटादिप्रकारककर्मत्वादिविशेष्यकनिरूपितत्वादिसंसर्गकान्वयबोधजनकं । तत्समभिव्याहारः द्वितीयादिविभक्तिपदानुपूर्वीविशेषः । तादृशान्वय बोधे घटादिप्रकारककर्मत्वादिविशेष्यकनिरूपितत्वादिसंसर्गकान्वयबोधे ।

अत एवाकाङ्क्षाया एतादृशत्वनिर्वचनादेव । घटः कर्मत्वमिति । यथा घटमित्याकारकसमभिव्याहारस्य घटप्रकारककर्मत्वविशेष्यकनिरूपितत्वसंसर्गकान्वयबोधजनकत्वं तथा न घटः कर्मत्वमेतादृशसमभिव्याहारस्येत्यर्थः । आकाङ्क्षाविरहाद् कर्मत्ववाचकद्वितीयादिपदसमभिव्याहाररूपाकाङ्क्षाविरहात् । अत्र घटः कर्मत्वमित्यादौ समानविभक्तिकत्वाद-भेदान्वये आकाङ्क्षायाःसत्त्वेपि आधेयत्वादिघटितभेदसम्बन्धेनाकाङ्क्षाया विरहादिति भावः । एवं च घटप्रकारककर्मत्वविशेष्यकबोधे घटीयपदोत्तरकर्मत्वीयविभक्तित्वं कर्मत्वीयविभक्तिपूर्वकघटीयपदत्वं वाकाङ्क्षेति फलितम् न च घटपटावानयेत्यत्र घटीयपदोत्तरकर्मत्वीयविभक्त्यभावेन घटांशे आकाङ्क्षा न स्यादिति वाच्यम् । तत्र घटपटोत्तरत्वेनानुसन्धीयमानविभक्तित्वस्याकाङ्क्षात्वस्वीकारात् । यद्वा घटांशे आकाङ्क्षाभ्रमेण निर्वा-

ह्वात्। अथवा घटपटोत्तरप्रकृतान्वयबोधविरोधिपदानुत्तरद्वितीयाविभक्तित्व माकाङ्क्षा। न हि घटपटावित्यत्र प्रकृतान्वयबोधे घटपदं विरोधीति ॥ न च तर्हि घटमात्रे द्वित्वान्वयापत्तिरिति वाच्यम्। घटपरत्वेन गृहीततात्पर्य कपटशब्दोत्तरद्विवचनस्यैव पर्याप्तिसम्बन्धेन घटपटवृत्तिद्वित्वबोधकत्वात् द्विवचनस्यैकत्र द्वित्वबोधकसामर्थ्याभावाच्च। एव विशेष्यतासम्बन्धेन विभक्त्यर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नंप्रति विषयतासम्बन्धेन धात्वर्थोपस्थितेः कारणत्व बोध्यम् ॥ धातुपदमिति। घटमानयतीत्यादौ विशेष्यतासम्बन्धेनानयनादिरूपधात्वर्थप्रकारककृतिविशेष्यकशाब्दबोधे आनयनाद्युपस्थापकधातूत्तराख्यातत्व तदुत्तरप्रत्ययत्व वाकाङ्क्षा। एव चानयेत्यत्रानयनस्य कृदर्थकर्त्रैकदेशे कृतावन्वयोपि सूपपन्न इति। अन्वयविशेषबोधक धात्वर्थप्रकारकप्रत्ययार्थविशेष्यकशाब्दबोधजनक। तत्र धात्वर्थ प्रत्ययार्थविशेष्यकशाब्दबोधे। एव विशेष्यतासम्बन्धेनाख्यातार्थभावनाप्रकारकसमवायादिसंसर्गकशाब्दबोधत्वावच्छिन्न प्रति नामजन्योपस्थितेर्विषयतासम्बन्धेन हेतुत्वमिति नील घटमानयेत्यादौ विशेषणतया कर्मत्वान्वितस्यापि घटस्य नीलान्वये न निराकाङ्क्षत्वमित्यनुपद वक्ष्यते।

ननु नामपदं द्वितीयादिसमभिव्याहृतमेव कर्मत्वादीनामाश्रयाश्रयीभावेनान्वयबोधकत्वमित्यत्र किं नियामकमिति चेत्। नाम्नः स्वार्थनिष्टकर्मत्वानुभवजनने तदुपस्थाकविभक्तिसहकारित्वमितिगृहाण। हन्तैवं यस्य पुरुषस्य घटः कर्मत्वमित्यादिवाक्यव्युत्पत्तिरभून्न कुतस्ततोऽन्वयबोध इति चेत् तस्मिन्पुरुष एव मानं नास्ति का कथा तस्यान्वयबोधे। तथापि यदि कश्चित्तादृशः स्यात्तस्य किं भविष्यतीति चेत्। शाब्दानुभववैधुर्यमेव।

ननु नामपदं द्वितीयादिसमभिव्याहृतमेवाश्रयाश्रयीभावसम्बन्धेन-नामार्थप्रकारकविभक्त्यर्थविशेष्यकान्वयबोधजनक तदैव द्वितीयापदसमभि व्याहारस्तादृशान्वयबोधे आकाङ्क्षा तत्रैव मान न पश्याम इत्याह नन्विति नाम्न इति। नाम्नो नामार्थनिष्ठकर्मत्वादिविशेष्यकबोधजनने कर्मत्वो-पस्थापकविभक्ति सहकारित्वेन तत्समभिव्याहारस्याकाङ्क्षत्वादित्यर्थ. । नचैव दधिपस्येत्यादौ दधिपदोत्तरद्वितीयाविभक्तेरभावात्कथमर्थावगम इति वाच्यम्। लुप्तद्वितीयाविभक्तेः प्रतिसन्धानात्। अत्रेद तत्त्व। कर्मत्ववि-शेष्यकाधेयतासंसर्गावच्छिन्नघटप्रकारकशाब्दबोधत्वावच्छिन्न प्रति वृत्त्या घटोपस्थापकनामोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वेन हेतुत्व । वृत्त्येति पदापादानात् षष्ठीचतुर्थ्योः कर्मत्वशक्तिविरहेपि घटस्यानयन घटाय गच्छतीत्यादौ कर्मत्वान्वय सूपपन्नः। एतेन तादृशबोधं प्रति घटपदो-त्तराम्पदज्ञानत्वेन न हेतुत्व न वा घटार्थकपदोत्तराम्पदज्ञानत्वेन। आद्ये कलशमानयेत्यादौ द्वितीये घटावानयेत्यादौ व्यभिचारात्। नापि घटार्थकपदोत्तरद्वितीयाज्ञानत्वेन घटस्यानयतीत्यादौ व्यभिचारा दित्यादि परास्तम्। निगर्वस्तु विशेष्यतासम्बन्धेन विभक्त्यर्थविशेष्यकाधेय तासंसर्गकघटप्रकारकशाब्दत्वावच्छिन्न प्रति घटोपस्थापकपदोत्तरविभक्ति ज्ञानत्वेन हेतुत्व तृतीयादिसाधारण्यात्। एवं प्रथमान्तपदोपस्थाकतादात्म्य-सम्बन्धेन घटादिविशेष्यकशाब्दबोधत्वावच्छिन्नं प्रति नामोत्तरसुप्जन्योप-स्थितिः कारणं नीलो घट इत्यादावभेदान्वयस्यानुभवसिद्धत्वादिति सुधीभिर्विभाव्य बोध्यमिति। तत इति। घटङ्कर्मत्वमित्यादौ व्युत्पन्नस्तस्य घटमित्यादावम् पदस्य कर्मत्वव्युत्पत्त्यभावात्कथ घटमित्यतोन्वयबोधस्त स्येत्यर्थः एव घट आनयन कृतिरित्यत्रैव व्युत्पन्नस्तस्यानयेत्यादौव्युत्पत्त्यभा वात्कथ ततोन्वयबोध इत्यर्थः। यद्वा तत इति घटः कर्मत्वमित्यादि-वाक्यात् कर्मत्वोपस्थापकाम्पदसमभिव्याहाराभावाच्च घटप्रकारककर्मत्व-विशेष्यकशाब्दबोध इत्यर्थः। तस्मिन् विपरीतव्युत्पन्ने। तादृशः घट-कर्मत्वमित्यादौ विपरीतव्युत्पन्न । न च तस्य घटः कर्मत्वमित्यादित

एव बोध इति वाच्यम् । पुरुषभेदेन भिन्नकारणत्वकल्पने गौरवात् वैधुर्यम पलापः ।

**अन्वयव्यतिरेकसिद्धकारणविरहादिति । एतस्याश्चाकाङ्क्षाया ज्ञानं हेतुस्तद्भ्रमेणान्वयबोधात् । अपरा च प्रकृतान्वयबोधसमानाकारस्वजन्यान्वयबोधविरहः प्रकृतान्वयबोधे स्वरूपसतिहेतुराकाङ्क्षा**

ननु कुतस्तत्रापलाप इत्यत आहान्वयव्यतिरेकेति । घटप्रकारककर्मत्वविशिष्यकशाब्दबोधे घटमिति समभिव्याहारस्यैवान्वयव्यतिरेकाभ्या कारणत्वस्य क्लृप्तत्वाद्घटः कर्मत्वमित्यतो नान्वयबोध इत्यर्थः । एवमानयेत्यादावपि बोध्यम् । अत्र पदानि पदार्थोपस्थितिपराणि बोध्यानि । अन्यथा मौनिश्लोकादौ पदाभावेन पदघटिताकाङ्क्षाया अभावात्कथ शाब्दबोधः कथ वा पदाना साक्षादनुभावकाभावाच्चासम्भवः अत्रेदम्प्रतिभाति मैत्रस्य तादृशपदोपस्थितिसमभिव्याहाररूपाकाङ्क्षायाः सत्त्वादन्वय बोधे जाते पदान्तरोपस्थितिविरहेण चैत्रस्याप्यन्वयबोधःस्यान्मैत्रस्य तादृशसमभिव्याहाररूपाकाङ्क्षाया सत्त्वादिति तत्पुरुषीयत्वमवश्य वाच्य एवं यत्पादोपस्थितिर्यत्पदोपस्थित्यासह यत्पुरुषीययादृशान्वयबोधजनिका तत्पदोपस्थितेस्तत्पदोपस्थितिसमभिव्याहारस्तत्पुरुषीयतादृशान्वयबोधे आकाङ्क्षेति पर्यवसित । एव च घटपदोपस्थितिः कर्मत्वोपस्थापकविभक्तिपदज्ञानेन सह घटप्रकारककर्मत्वविशेष्यकान्वयबोधजनिकेति ज्ञान तत्पुरुषीयशाब्दबोधं प्रति द्वयमेवाकाङ्क्षाधीःकारणमिति विशिष्य वाच्य तथा च तत्तत्पुरुषीयविभिन्नकार्यकारणभावाद्विपरीतव्युत्पन्नस्य घटः कर्मत्वमित्यादितोऽप्यन्वयबोधे बाधकाभावादिति । अत एवापभ्रंशजनिते कर्मत्वादिविशेष्यकशाब्दबोधे व्यभिचारविरह इति विविच्य बोध्यम् । एतस्याः निरुक्तायाः । ननु तत्र कि मानमत आह तद्भ्रमेणेति । स्वरूपसत्या आकाङ्क्षाया हेतुत्वे यत्राकाङ्क्षाया अभावस्तत्राकाङ्क्षाया भ्रमाच्छाब्द

भ्रमो न स्यादिति भावः । ननु घटमानयेत्यादितोऽन्वयबोधे जातेपि पुनरन्वयबोधः स्यात् निरुक्ताकाङ्क्षायास्तत्रापि सत्त्वेन निराकाङ्क्षत्वाभावादत आह अपरेति । प्रकृतान्वयबोधस्तात्पर्यविषयीभूतो योन्वयबोधस्तत्समानाकारस्तद्विषयतायाअनतिरिक्तविषयताकतादृशो यः स्वजन्यान्वयबोधः आकाङ्क्षाजन्यान्वयबोधस्तस्य यो विरहः स प्रकृतान्वयबोधे स्वरूपसती आकाङ्क्षेत्यर्थः । तथा च गामानयेत्यादौ गोनिष्ठा या प्रकारता तन्निरूपिता कर्मत्वनिष्ठाविशेष्यता कर्मत्वनिष्ठप्रकारतानिरूपिता या आनयननिष्ठाविशेष्यता आनयननिष्ठप्रकारतानिरूपिता या आख्यातनिष्ठाविशेष्यतेत्येव बोधस्तात्पर्यविषयस्तत्र गोनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताके बोधे जातेपि दण्डकरणकगोकर्मकान्वयबोधे साकाङ्क्षत्व प्रकृतायन्वयसमानाकारकान्वयबोधस्याजायमानत्वादित्यर्थः ।

अतो घटमानयतीति पदमेकदान्वयबोधे जनिते नान्वयबोधान्तरं जनयति स्वजन्यान्वयबोधवैधुर्यविरहात् । एवञ्च गामानयेत्यतोऽन्वयबोधे जाते दण्डेनेत्यन्वयबोधे निराकाङ्क्षता स्यादत उक्तं प्रकृतान्वयबोधसमानाकार इति न च गामानयेत्यन्वयबोधः प्रकृतो येन दण्डेनगामानयेत्यन्वयबोधस्तेनसमानकार इति । योग्यता चैकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वं तेन पयसा सिञ्चतीति योग्यं पयसि सेककरणत्वसंसर्गस्य सत्त्वात् यस्मिंश्च पयसि सेककरणत्वसंसर्गो नास्ति तस्मिन्न योग्यत्वं । आकाशं शब्द इत्यत्र समवायरूपसंसर्गवत्त्वमादायाभेदान्वयबोधेपि योग्यता स्यादत उक्तं प्रकृतेति अस्य च

ज्ञानं कारणं तद्भ्रमेणाप्यन्वयबोधात् । ननु संसर्गस्यापूर्वत्त्वात्कथं तद्ज्ञानसंभव इति चेदुच्यते योग्यताज्ञानमात्रं हेतुरस्ति चात्र पयः सेककरणताव-न्नवेति संशयरूपं ज्ञानं क्वचित्तन्निश्चयोपि यथा प्रत्यक्षेण दृष्टे घटोऽस्तीति

यत्र तादृशान्वयबोधो जातस्तत्राकाङ्क्षाभाव पदर्शयति । अत इति । वैधुर्यविरहादिति । तादृशान्वयबोधविरहाभावादित्यर्थः । निराकाङ्क्षतास्यादिति । आकाङ्क्षादन्यान्वयबोधविरहाभावादिति अत इति दाने तु दण्डेन गामानयेत्येतत्तात्पर्यविषयीभूतान्वयबोधसमानाकारकाकाङ्क्षाजन्यान्वयबोधविरहसत्त्वादिति भावः । न चेति । दण्डेन गामानयेत्येतत्प्रविष्टा यावतीविषयिता तच्छालिबोधः प्रकृतो न तु गामानयेतत्प्रविष्टविषयतामात्रशाली तथा च गामानयेति बोधो यदि तात्पर्यविषयीभूतनिखिलविषयताशाली स्यात्तदा दण्डेन गामानयेत्यनेन प्रकृतान्वयबोधेन समानाकारोपि स्यादित्यर्थः । दिगस्तु अनाकाङ्क्षज्ञानस्य प्रतिबन्धकत्वेन तदभाव एव हेतुरस्तु किमाकाङ्क्षाज्ञानहेतुत्वेनेति चेन्न ग्राह्याभावानवगाहिनो ज्ञानस्य जनकज्ञानविघटनद्वारैव प्रतिबन्धकत्वात् । दृष्टं च व्यभिचारज्ञाने तथा हि । अनुमितौ व्यभिचारज्ञान प्रतिबन्धक तत्त्वानुमितिजनकीभूतव्याप्तिज्ञानविघटनद्वारैवेति । घटज्ञानविरोधिनो घटाभावज्ञानस्य घटज्ञानजनकीभूतज्ञानविघटकत्वाभावाद्ग्राह्याभावानवगाहि यत्रानाकाङ्क्षाज्ञानेऽप्रमाण्यनिश्चयस्तत्राप्रामाण्यनिश्चयानास्कन्दितानाकाङ्क्षत्वज्ञानाभावापेक्षयाऽप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षानिश्चयस्यैव लाघवेन हेतुत्वावधारणात् । अनाकाङ्क्षत्वज्ञाने प्रामाण्यसंशयाच्छाब्दबोधादप्रामाण्यनिश्चयानास्कन्दितत्वस्यैव दातुमुचितत्वात् । अप्रामाण्यनिश्चयत्व च तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वाभावाप्रकारकत्वेसति तदभाववद्विशेष्यकत्वेमति तत्प्रकारकत्वप्रकारकत्व तदनास्क-

to the 'subject' of the syllogism, the 'reason' is called the 'contrary' reason

**[Page 241]** The example cited is one of such 'contrary reason' as resides in one part of the 'contrary of the subject,' as the horn is not present in all that is 'not-horse,'—for instance, it is not found in the pillar (which also is as much a 'non-horse' as the cow or the buffalo) An example of the 'contrary reason' pervading over *all* that is the contrary of the 'subject,' we have in the argument—'Sound is eternal *because it is produced*' (Where the *character of being produced* belongs to all that is *non-eternal*)

(3) That reason which, while subsisting in the 'subject,' subsists also in things of the same as well as of other classes, is called the 'Doubtful', as it always gives rises to uncertainty As an example of this, we have the argument—'this is a cow, *because it has horns*' In this case we find that the horn exists in the cow as well as in the buffalo, and hence the 'presence of the horn' would leave it uncertain whether the animal is a cow or a buffalo, and as such this would be a 'Doubtful' reason This is the instance of a reason which subsisting in the subject as well as its contraries, subsists only in a few of these contraries, and this reason is called the '*anaikāntika*,' 'Inconclusive' Another reason of the same class would be that which pervades over the whole range of the subject and its contraries, an example of this we have in the argument—'Sound is eternal *because it is cognisable*' (where cognisability belongs all things eternal as well as non-eternal) An example of that which subsists only in parts of the subject and its contrary, we have in the argument—'*Ākāça* is eternal, *because it is incorporeal*' (where 'incorporeality' is such as subsists in a few eternal and also a few non-eternal things) A reason that subsists only in a portion of the 'subject,' and pervades over the whole of its contrary, we have in the argument—'Sound is a substance, *because it is not made of constituent parts* (where it

is only a few substances that are not made up of constituent parts, while all non-substances are so constituted)

In the text we read 'that which is *common (sādhārana)* to the things of the same kind &c &c', and the author explains the meaning of the word 'common' by the words 'samāna' &c, "Just as a certain property, being found in the 'subject' as well as its contrary, would give rise to an uncertainty with regard to the object to which it belongs, and would thereby become a 'Doubtful Reason,'—so, in the same manner, when we find, in the same subject, two mutually contradictory 'reasons' (of equal validity), tending to two contradictory conclusions, we have another kind of the 'Doubtful' Reason, consisting of the collision of two contradictory reasons" Such is the view held by some people, and the author proceeds to refute it '*Some people, &c*' With a view to this, he cites an example of this kind of reason *In regard to the mind we find the two reasons—(1) 'because it has motion' and (2) 'because it cannot be felt by touch' — put forward as indicative of its corporeal and incorporeal character respectively* These reasonings may be thus amplified (1) 'The mind is corporeal, because it has actions, like the arrow,' (2) 'the mind is incorporeal because it is not felt by touch, like *Ākāça*' Here we find a collision of the two reasons, mobility and intangibility, leading to two mutually contradictory conclusions, and this gives rise to a doubt as to whether in reality the mind is corporeal or incorporeal And certainly both reasons could not be equally valid, as one and the same thing could not have two such contradictory characters (as *corporeality and incorporeality*) And as the two reasons are mutually contradictory, both could not be invalid either, as there could be no third' character for the mind, apart from both *corporeality* and *incorporeality*, But we can find no reason whereby we could feel certain of the validity of either one of the two reasons Hence on account of the two reasons—'mobility' and 'tangibility'—there arises a doubt as to the mind being

*corporeal* or *incorporeal* The *Viruddhāvyabicāri* reason differs from the *Prakaranasama* reason only on this point that, while the former creates a doubt in the mind, the latter simply fails to remove the uncertainty for the settling of which it is brought forward

*Objection* " *This would be a case of the 'Asādhārana'* "*reason &c* That is to say, each one of the two reasons— "'mobility' and 'tangibility'—does not create any doubt in our "mind, as each leads to a definite conclusion Then as for "the collision of the two, it would be nothing more than what "is known as the '*asādhārana*' reason, as the two together "do not subsist in any 'subject' (*sapaksha*) or 'contra-subject' "(*vipaksha*), apart from the mind Just as in the case of the "two qualities of *invalidity* and *perceptibility*, we find that "though each of them is not an incompatible quality, yet "conjointly they cannot exist anywhere apart from the mind "Though it is the *collision of two such properties as are not* "*incompatible and yet mutually contradictory* that constitutes "the '*Asādhārana*' reason, yet such a reason would only be "a source of uncertainty As for the 'negative' (*vyatirēki*) 'reason it is certain that it is excluded from the 'contra-subject' "(*vipaksha*) alone , and as such it leads to a definite conclusion. "The '*Asādhārana*' (uncommon) reason, on the other hand, "is such that its exclusion is never absolutely certain , as it "is as likely to be excluded from the 'subject' as from the "'contra-subject' As, if 'odourousness' being excluded from "non-eternal things' would prove 'eternity,' it would, as reason- "ably, prove 'non-eternality' also, as excluded from the 'eter- "nal thing,' *Ākāça* But as a matter of fact, both cannot be "rightly proved, as any one thing cannot have the two con- "tradictory characters of eternality and non-eternality Nor "could both be not proved, as the two being mutually ex- "clusive, there can be no intermediate stage (between 'eter- "nality' and 'non-eternality') Consequently the fact of the "Earth being 'odorous' leaves it doubtful whether the Earth

"is eternal or non-eternal, as has been declared by the revered "Kumārila Bhatta 'Where we have a certain property which "is *asādhārana*, in as much the negation of both could not "subsist in any subject, its negation becomes a source of doubt' "(*Çlokavārtika—Anumāna*, Çloka 88-89), and the author "of the *Nyāyavārtika* also has thus declared 'In as much "the character of *being born of a disjunction* which consists "in having for its substantial cause a disjunction born of another "disjunction—is not possible apart from Sound, the reason "(*being born of a disjunction*) being precluded from all things "becomes a source of doubt or uncertainty'"

To the above, our author offers the following reply *It is for this reason that we shall explain later on that such a reason is what we call the 'Anadhyavasita' 'unascertained'* That is to say, we shall point out later on that the collision of two contradictory properties constitutes the '*Asādhārana*' reason, and being '*Asādhārana*,' it becomes the '*anadhyavasita*'

The author having shown that the character of the 'Doubtful Reason' does not belong to that reason which is *Viruddhāvyābhichāri*' (not incompatible with the 'contrary'), the objector brings forward the objection that such a view would be against what has been taught by the scriptures on the subject (*i e* the *Sūtras*)—" *Nanu &c* '*ubhayathā darçan-*" *am*—' what is meant by this is that in the scriptures it has been "declared in many places that when a certain 'subject' is "found to be accompanied by two mutually contradictory "properties, there always arises a doubt in the mind of the "observer, and such is also the common experience of many "people, and when we see something that resembles what "we have seen, there arises a doubt For instance, in the case "of the *self* we have found 'incorporeality' accompanied by 'in-"tangibility', and we have observed the same in the case of "the *mind* also, then again, in the *mind* we also find 'activity

"or mobility,' which we have seen, in the *atom*, to be accom-
"panied by 'corporeality', consequently observing that in the
"*mind* we have 'intangibility'—which we have found to be
"accompanied by incorporeality,—as well as 'mobility'—which
"we have seen, is accompanied by 'corporeality, there arises a
"doubt in our mind as to whether the *mind* is corporeal or
"incorporeal (material or immaterial) The *sūtra* bearing on
"this point is as follows '*yathādrshtamayathādrshtamubha-*
"*yathādrshtatvāt samçayah*, and the meaning of this that,
"as in the case of *mind* we have seen that it has the property
"of 'mobility,' which we have found (in the *atom*) to be not
"incompatible with 'corporeality', (this would be '*yathādrshta*)',
"—so also we have seen, to the contrary ('*ayathādrshta*') we
"have found (in the *self*) that it has also the property of
"intangibility which, in its turn, is not incompatible
"with 'incorporeality', and from this twofold observation
"('*ubhayathādrshtatvāt*) there arises the doubt as to whether
"the *mind* is 'corporeal or material' on account of its 'mobility,'
"or it is 'incorporeal or immaterial' on account of its intangibi-
"lity Thus then, if you reject the fact of the *Viruddhāvya-*
"*bhicāri* Reason being a source of Doubt, you distinctly con-
"tradict what has been declared in the *sūtra*"

To the above objection, the author replies as follows *Not so, as doubt always arises from the perception of a duality of objects* That is to say, there is no such contradiction as you point out because a Doubt arises only when there is a dalu perception of objects This the author proceeds to explain further *That is to say &c* The meaning of this is that the source of Doubt lies in the dual perception of objects For instance, in regard to a tall object like the wooden post, there arises a doubt as to whether it is a post or a man standing, and the reason for this lies in the previous 'dual perception' of *tallness—viz* as found in the *post* and in the *standing man*, and the doubt is not due to the collision in one and the same object, of two contradictory properties And hence the *sūtra* cannot be

taken to mean that doubt arises from the collision of two contradictory properties not incompatible with the object in question.

Similarly, the meaning of '*drshtañca drshtavad drshtvā*' may be thus explained —'*drshta*' is the object, the *man* or the *post*, seen on a previous occasion, to be similar to another man and another post ('*drshtavat*'), and when, by some cause or other, we happen to see that *man* or *post*, at some other time and in some other place, and are not able to exercise a proper discrimination,—there arises the doubt as to the object before us being a *man* or a *post*, the particle '*ca*' after '*drshtam*' is added with a view to indicate that even though the object before us may not have been seen by us before, if it only happens to resemble the *post* and the *man* (which are the 'seen' and similar to 'the seen'), the doubt arises

There is another *sūtra*—'*yathādrshtamayathādrshtamubhayathādrshtam*' &c, and this points out the *doubt* that arises from the remembrance of a particular object (having the appearance of the object before the eyes) For instance, we see a man in a certain condition—with shaven hair or with matted locks fr , and then after sometime we see the same man, in a condition other than the one observed on the previous occasion, and then not seeing the previously seen conditions, and yet recalling to our mind both the conditions, we may have the doubt as to whether the man, on this latter occasion, has his head shaven or is wearing matted locks

Then as for the *Viruddhāvyabhicāri* reason, it can never be the source of doubt, as it is never put forward That is to say, when the 'reason' put forward first has been recognised to fulfil the aforesaid conditions (of the true reason), then the subject in question is duly ascertained to be of the character indicated by that reason, and hence there can be no occasion for the other contrary reason to be put forward, as its way is blocked by the accomplished cognition (afforded by

the former Reason) And if the previous reason fails to bring about a definite cognition, then it becomes open to this same charge (of not leading to a definite conclusion), and there is no necessity for the bringing forward of the counter-argument (based upon the 'contrary reason')

*Objection* "The previous reason becomes '*viruddhāvyabhicāri*' by reason of *its not being incompatible with,—* "*of allowing of the appearance of*—the counter-argument, "and the objection or fallacy to which such a reason is open lies "in this very possibility of the counter-argument, because "when the contrary conclusion is brought up by the contrary "reason, the previous reason fails to establish the conclusion "it was put forward to prove"

*Reply* If like the second argument, the first argument were also a properly equipped inferential reasoning, fulfilling all the conditions of a valid argument,—then, if it were found to fail in its purpose of establishing the conclusion, what confidence could we have in any inferential reason (as the mere fact of fulfilling all the conditions would no longer be sufficient security)?

*Objection* "The first reason fails to establish its conclusion for the simple reason that the subject in question is not possessed of the dual character (indicated by the two contrary reasons)"

*Reply* Who has told you that an object cannot have a dual character? The essence or character of an object consists in whatever is indicated by a means of right knowledge If the fact of any one object not having a dual character, be such as is established by a stronger and more authoritative means of knowledge, and as such, cannot be set aside,—then, in that case, the two reasons (one indicating the single and another the dual character of the object) would not be of equal strength and validity, and under the circumstances, how could there be any doubt?

*Objection* "Though in reality both are not true, yet the fact of neither of the two having any points perceived in its favour would lead us to think of them as of equal validity or reality or both"

*Reply* It may be so, but even then, just as the equal validity of both would lead to one being set aside by the other, so too would it make us reject the latter by the former, and thus there being a mutual rejection, neither of the two would be capable of proving the conclusion it may be sought to prove, but this would not make them produce any doubt in the mind of the observer Specially as in such a case what happens is that there is no definite cognition at all, and not that two mutually contradictory cognitions are brought up (and a doubt would arise only in the latter case) This is what our author means by the sentence—'*when both factors of the duality would be of equal authority &c*'

*Objection* "That which is an object must be either material or immaterial, there can be no third alternative, hence in the case of mind, when we perceive neither its materiality nor immateriality, we might presume the absence or presence of both, and this presumption would certainly give rise to a doubt in our minds as to whether it is material or immaterial"

*Reply* It is quite true that the doubt arises, but it arises, not from the collision in the *mind* of two mutually contradictory *properties*, but from the very nature of the *thing* itself, —that thing which, having been perceived to be concomitant with materiality and immateriality, is cognised as subsisting in the *mind*, and hence brings to us the recollection of those two properties

Our author has rejected the theory 'that the *viruddhāvyabhicāri* reason is a source of doubt, after having admitted the fact of two contradictory reasons having equal validity As a matter of fact however, the validity of the two is not of equal strength As the conclusion that 'the mind is im-

material,' which is indicated by one of the two reasons, has the disadvantage of being negatived by the scriptural text of the *sūtra*, '*the mind is atomic, by reason of the absence &c* If (in order to avoid this predicament) it be argued that this *sūtra* is not authoritative, then the mind would be something omnipresent, but as there is no evidence for the existence of such a mind, the argument that 'the mind is immaterial, because it is intangible' would be totally without a basis (as there would be no mind in which the properties could inhere) If the existence of mind be sought to be proved by the fact of all kinds of sense-cognition not appearing at one and the same time, then the reason in question becomes such as is set aside by the means of cognising the 'subject' (mind), as the simultaneous appearance of all sense-cognitions can be impossible only if the mind be atomic, as if the mind were omnipresent, then, in as much as all the sense-organs would all at once be in contact with it, there would be nothing to prevent the simultaneous appearance of all kinds of sense-cognition

*Question* "If the subject of Inference be such as is opposed to scriptural authority, what kind of fallacy would that be?"

The author says in answer to this *This would be another kind of the 'contrary' reason* That is to say, such a reasoning being contrary to scriptures would be only one kind of the 'wrong conclusions' that are opposed to well-recognised facts of Sense-perception, Inference &c,—all such conclusions having been precluded from 'true reasoning' by the mention of '*avirodhi*,' 'non-contradictary' or 'not incongruous,' in the definition of the *Pratijñā* or 'Declaration of Conclusion, *i e* it would not be a 'doubtful reason,' being only a kind of the 'contradictory' or 'incongruous' reasoning

The '*anadhyavasita*,' or 'unascertained' is the name given to that false reason which has elsewhere been called the '*asādhāraṇa*' 'uncommon,' and the author now proceeds to

explain it *That which subsists* &c For instance, with a view to prove that 'the effect had an existence even before the operation of its cause,' we find the reason 'because of its production,' brought forward by the Sānkhyas And here we find that the reason does not subsist in the *ākāça* which is an entity and which therefore is *sapaksha*, and yet it is not found to subsist in the 'sky-flower' which is a recognised non-entity, and which therefore is a distinct *Vipaksha*, and thus the reason cannot prove either the conclusion or its contradictory

The reason in question,—'because it is produced'—cannot be called '*asiddha*' or 'unknown,' because it is not so for the *Sānkhyas*, who hold that 'production' is only the 'manifestation' of something not manifested before

*Question* "In which sentence of the *sūtra* is this '*Anadhyavasita*' or Unascertained Reason indicated?"

[Page 245] *Answer* It is indicated by the *sūtra* '*ayamaprasiddho-napadēçah*'

*Objection* "Like the *Anaikāntika*-or 'Inconclusive' Reason, the *Asādhārana* 'or 'Uncommon Reason' only creates a doubt in the mind, and hence it would be more correct to say that it is indicated in the *sūtra* '*sandigdhaçcānapadēçah*',—and not in '*ayamaprasiddho*' *napadēçah*' This objection is what is meant when our author says—*nanu ca* &c The Locative ending in '*bhūtēshu*' has the sense of the Ablative, as the distinctive feature of things serves to distinguish them *from* things of the same kind, and also *from* those of another kind, e g the distinctive feature of the Earth, 'Odorousness,' serves to distinguish it from other members of the same class of 'Substance,' as well as from Qualities and Action (which are *not-substance*) In Sound we find the distinctive feature of 'audibility'; and there arises a question as to whether this feature serves to distinguish Sound from Colour and other things *of the same kind as itself*, or it serves to distinguish it from things of different kinds? But it is clearly seen that if Sound is a Quality,

then the said feature distinguishes it from Colour &c, which being Qualities are of the same kind or class as itself, but if it is a Substance, or an Action, then it would distinguish it from Colour &c., which, being Qualities, would be 'things of a different kind or class'? And thus the 'audibility' of Sound, if brought forward as a 'reason,' would leave it *doubtful* whether Sound was a Substance, or a Quality or an Action."

The opponent having thus brought forward the charge of contradicting the *Sūtra*, our author offers the following reply *Not so*, because *of the meaning of the sūtra being different* That is to say, the meaning of the sūtra is not that 'the *asādhārana* reason is the source of *doubt*,'—as the objector has explained it, it means something wholly different, and our author proceeds to explain this true meaning *Çabdē viçēshadarçanāt &c* Having shown that that which is comprehensible by the sense of audition is *Sound*, the author of the Sūtra has said that *with regard to this sound there arises a doubt as to whether it is a Substance or a Quality or an Action*, and the sense of this is that, with regard to that *audible thing*, there arises the doubt as to whether it may be a Substance, or a Quality or an Action

On this the opponent comes forward with the following argument "When you declare that there is doubt with regard to Sound *which is perceived by the sense of audition*, you clearly imply that 'perceptibility by the sense of audition,' or 'audibility,' constitutes the source of doubt But 'audibility' is a distinctive feature of Sound, and the recognition of such a feature could never make any doubt possible, as a doubt is always due to the remembrance of two mutually contradictory properties, and such remembrance would never be possible when a distinctive feature of the object in question has been duly recognised, specially when the distinctive feature perceived is such as has never been perceived along with any other property"

The opponent having put forward this argument, the author of the *Sūtra* has given his reply to it, and the sense of the

reply is that 'audibility' is not a distinctive feature of any one of the three larger categories, Substance, Quality or Action; in fact it comes to be common to all of these Because in each of these three we find distinctive features that distinguish them from like as well as unlike objects, 'Bheda'=that which is differentiated, different thing, hence '*dravyādibhedāh*'—Substance and other things, *viz*, Substance, Quality and Action, and in everyone of these such distinguishing features are found, as for instance, in the Earth we find the distinctive feature of *the character of earth*—which distinguishes it from its like objects other Substances—along with the *character of Substance*, in Colour we find the *character of colour*,—which distinguishes it from other *Qualities*—along with the *character of quality*, in Throwing Upward, we find the *character of throwing upward*—which distinguishes it from other Actions—along with the *character of action*, and similarly in Sound also the distinctive feature *of Audibility* is found along with the *character of Quality* Consequently this distinguishing feature also becomes common to Substances, Qualities and Actions, and as such it is only right to regard it as the source of doubt, as for the *individuality* (or the specific feature of Sound) that could never give rise to any doubt, as it would not bring to the mind any distinguishing characters It is with a view to all this that the author says—*It would not give rise to a doubt* We deduce all this meaning from the fact of the Sūtra having used the Locative ending in the words '*Tulyajātīyēshu arthāntarabhūteshu*,' instead of the Ablative The construction of the sūtra may be thus explained —On the recognition of the distinctive feature of *audibility* in Sound there arises a doubt as to whether it is a Substance or a Quality or an Action, and the reason for this lies in the fact of everyone of these three having distinguishing features that reside in their like objects (*Sapakshas*) and also in the unlike ones (*Vipakshas*)

The upshot of all this comes to be this A distinctive feature we have found in Substance, in Quality and in Action,

and in Sound also we find a distinctive feature in the shape of *Audibility*, hence the mere presence of a distinctive feature gives rise to a doubt as to which of the three things, possessing distinctive features, Sound is But if the individuality, or the specific form, of an object also were the cause of doubt, then there might be doubts with regard to the six Categories as well, as everyone of these possesses a distinct individuality, and in this way there would be no end to doubts With a view to this our Author says—'*If it were not &c*'

He recapitulates the whole thus —'*For these reasons &c*' That is to say, the 'common' property is found along with mutually contradictory properties, and the remembrance of these latter can always give rise to a doubt, hence it is the perception of the 'Common' property, and not that of the 'Uncommon' property, that creates doubt

*Text (116) The Nidarçana, Instance, is of two kinds—that which corroborates by similarity or affirmation, and that which corroborates by dissimilarity ro negation The former kind consists in the recognition of the concomitance of the 'indicative mark,' in general, with the 'subject' in general E g (in the argument cited before) we have the statement—'that which has action or motion has always been found to be a substance, as an arrow' The other kind of Instance consists in the recognition of the absence of the 'indicative mark' wherever there is absence of the 'subject,' e g (in the same argument) the statement—'anything that is not a substance has no motion, as Being'*

## Commentary.

The author now proceeds to explain the character of 'Instance' *The Instance is of two kinds, &c* That statement which points out the concomitance of the Reason with the Sub-

ject of the Inference is the *Instance corroborating by affirmation*, whereas the statement indicating the absence of the Reason from everywhere where there is absence of the subject, is the *Instance corroborating by negation*, herein lies the difference between the two kinds of Instance The rest is quite clear

*Text (117) The above definition of 'Instance' sets aside all false or wrong Instances For instance, we have the argument—'Sound is eternal, because it is immaterial', and in corroboration of this we meet with the 'Instance'—'whatever is found to be immaterial is also eternal,—e g, (1) the Atom, (2) Action, (3) the Dish, (4) Darkness, (5) like 'Ākāça,' and (6) 'that which is a substance has always been found to have action or mobility' Here we have examples respectively of the six kinds of the 'false Instance by affirmation' viz (1) the 'unknown indicative' (2) the 'unknown subject' (3) 'unknown indicative and subject' (4) not applying to its own substratum, (5) the unconnected or incoherent, and (6) connected with the contrary' Similarly we have—'that which is noneternal is material,'—as (1) action, (2) atom (3) 'like ākāça,' (4) darkness, (5) like the jar, (6) 'that which is immobile is not a substance'—as examples respectively of the six kinds of the 'false instance by negation by contraries' viz (1) not excluded from the 'indicative' (2) not excluded from the 'subject' (3) not precluded from both, (4) not applying to its own substratum, (5) Non-preclusive and (5) Precluded from the contrary*

## Commentary.

There are some instances which, though not really corroborating the conclusion, *appear* as if they were corroborative,

declaration that 'whatever is a substance is found to have mobility' would be an example of the 'Instance connected with the contrary,' as in the argument 'Air is a substance because it is mobile' we have found all cases of *mobility* to be pervaded by *substantiality*, and all *pervasion* is so constituted that it is restricted to *that which is pervaded*, and it does not belong to both the *pervader* and the *pervaded*, like Conjunction, which extends equally to both members of the relationship and the reason for this peculiarity of *pervasion* lies in the fact that the *pervader* is not always accompanied by the *pervaded* Even in a case of 'equal pervasion'—*e g* in the case of 'noneternality' and 'causedness'—where the relation of pervasion is interchangeable (both being of equal extension), though the *pervaded* also has the character of the *pervader*, yet the *pervasion*, in either case, would rest in that which would be represented as the *pervaded* in that case, and not in that which would be put forward as the *pervader*, and it is always possible for this latter (as the *pervader*) to exist where the other (as the *pervaded*) is absent This has been thus declared by the Teachers 'Though in reality the *pervaded* is taken up by the character of the *pervader*, yet the *pervader* could not prove the *pervaded*, as it is found in cases of the absence of the latter, and as such would be incompatible' Hence the *pervasion* should always be put forward as resting on the *pervaded*—*i e*, in the case in question we should have it stated in the form 'that which is mobile is a substance' (where 'mobility' is the *pervaded*' and 'substantiality' the *pervader*)—and not as resting on the *pervader*,—i e in the form 'that which is a substance is mobile,' because the *pervader* 'substantiality' is not always accompanied by the *pervaded* 'mobility'

The compound '*lingānumēya &c*'=those of which the 'linga' and the rest are '*asiddha*,' 'unknown' or 'unrecognised'

The author proceeds to describe the 'false instances of negation' *That which is non-eternal, &c* (1) In connection with the argument—'Sound is eternal because it is immaterial

न्दिताकाङ्क्षत्वज्ञानाभावत्वेन तत्र मते कारणत्वं मम मते तु तदभावव-
द्विशेष्यकत्वेसति तत्प्रकारकज्ञानानास्कन्दिताकाङ्क्षत्वाभावाप्रकारकत्वे स
त्याकाङ्क्षात्वप्रकारकत्वेन हेतुत्वे भहल्लाघवमिति कृत पल्लवितेन ॥
अथ योग्यतां निरूपति । योग्यतेति । प्रकृतससर्गवत्त्व तात्पर्य-
विषयससर्गवत्त्वं । तथा चैकपदार्थे पयःपदार्थे । अपरपदार्थस्य सेकक-
रणत्त्वपदार्थस्य तात्पर्यविषयीभूतससर्गस्य सत्त्वादित्यर्थ. कुत इत्यत आह
पयसीति। यत्र समुद्रमध्यजलाभिप्रायेण पयसा विञ्चतीत्युक्त तत्रायोग्यत्वं
निर्वक्ति यस्मिन्निति। आकाशमिति। अभेदससर्गस्यैवाभेदान्वये तात्पर्य-
विषयत्वादिति भावः। अस्याः योग्यतायाः। कुत इत्यत आह तद्भ्रमेणेति ।
स्वरूपसद्योग्यतायास्तत्राभावेन तज्ज्ञानस्याहेतुत्वे योग्यताभ्रमाच्छाब्द-
भ्रमो न स्यादित्यर्थः। अन्वयबोधात् अन्वयभ्रमात् नन्वेकपादार्थे-
ऽपरपदार्थस्य शाब्दबोधगोचरान्वयस्य ज्ञान कथं शब्दबोधात्पूर्वं भविष्यती-
त्याह। नन्विति। अपूर्वत्त्वात्शाब्दबोधात्पूर्वमसिद्धेः। शाब्दबोधात्पूर्वं
तादृशससर्गरूपयोग्यतासशयसभवेन प्रत्यक्षादिना तादृशनिश्चयसभवेन
च नानुपपत्तिरिति समाधत्ते उच्यत इत्यनेन। तन्निश्चयोपि योग्यता-
निश्चयोपि। यथेति। प्रत्यक्षेण घटेऽस्तित्वससर्गे ज्ञाते घटोऽस्तीति-
शब्दाच्छाब्दबोध इत्यर्थः। ननु सशयनिश्चयसाधारणयोग्यताज्ञानस्य
हेतुत्वे योग्यतासंशयाच्छब्दो नित्यो न वेति वाक्यादितः संशयात्मक
शाब्दबोधः स्यादिति चेन्न। अनन्यगत्या पदार्थोपस्थित्यादिरूपतदभाव
शाब्दबोधसामग्र्यास्तद्वृत्ताशाब्दबोधे तादृशतद्वृत्ताशाब्दबोधसामग्र्याश्च
तदभावशाब्दबोधे च परस्परम्विरोधित्वकल्पनात्। यदि च यथा सशयात्मि
कानुमितिस्तथा सशयात्मकशाब्दबोधोपि रत्नकोषकारमतरीतिरनुसंधी
यते तदा ससयात्मकत्वमपि वक्तु शक्यमित्यवधेयम् ।

**परेत्वसंसर्गप्रग्रहः प्रतिबन्धकस्तदभावो योग्यता स्वरूपसती हेतुः। नचैवं जलह्रदो वह्निमान् इत्यपि**

असंसर्गाग्रहदशायां योग्यं स्यात् इष्टत्वात्। न च लाघवात्संसर्गज्ञानं कारणं न त्वसंसर्गाग्रह इति वाच्यम् असंसर्गाग्रहस्य लौकिकसाक्षात्कारातिरिक्तपित्तादिदोषाजन्यविशिष्टज्ञानमात्र एव हेतुत्वावधारणात्।

नवीनमतमाह परेत्विति। असंसर्गग्रहः। तात्पर्यविषयीभूतैकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वग्रहः। तदभावो- निरुक्तप्रतियोगित्वग्रहाभावः। योग्यतेति। अन्यत्र क्लृप्ततद्वत्ताज्ञाने तदभाववत्ताज्ञानस्य प्रतिबन्धकत्वेनैवायोग्यत्वज्ञानकाले शाब्दबोधापत्तेर्वारणसम्भवेनाल योग्यताज्ञानस्य कारणत्वेनेति भावः। एवं असंसर्गाग्रह रूपयोग्यतायाः कारणत्वकल्पने। जलेति। जलह्रदो वह्निमानिति वाक्ये जलह्रादौ वह्न्यभाववत्तानिश्चयसंसर्गग्रहाभावदशायां योग्यं स्यादित्यर्थः। अथ भूतले घटवदिति स्मरणोत्तरकालीनघटाभावलौकिकप्रत्यक्षानन्तरं योग्यताज्ञानसत्त्वाद्घटवदिति शाब्दबोधापत्तेः शङ्खो न पीत इति स्मृतेरनुमितेर्वानन्तरं शङ्खः पीत इति भ्रमेपि योग्यताज्ञानसत्त्वाच्छङ्खः पीत इति शाब्दबोधापत्तेश्चेति शाब्दबोधसाधारणतया ग्राह्याभावज्ञानस्य प्रतिबन्धकताया अवश्य वाच्यत्वादित्यभिप्रायवानाहासंसर्गाग्रहस्येति। तथा च शाब्दबोधस्यापि तादृशविशिष्टज्ञानत्वेनाप्ययोग्यस्थले तदभाववत्ताज्ञानादेव न शाब्दबोध इत्यलं योग्यताज्ञानस्य कारणत्वेनेति भावः।

कथमन्यथा चन्दनं न सुरभीति निश्चये सुरभिचन्दनमितिज्ञानं न स्यात् तदभावनुमितावपि चक्षुषा घटस्य लौकिकसाक्षात्कारः शङ्खेषु पीतत्वभ्रमश्च दृश्यत इत्यजन्यान्तम्।

अन्धकारे घटाभावादिनिश्चयोत्तरमप्रामाण्यज्ञानमन्तरेणाप्यालोकादिसमवधानादितो घटादिलौकिकप्रत्यक्षदर्शनाल्लौकिकसाक्षात्कारातिरिक्तेत्यस्य कृत्यमसम्भवेपि लौकिकत्व लौकिकसंनिकर्षकजन्यत्वमित्युपनीतभानांशे लौकिकीविषयता ज्ञापयितुमाह कथमिति । यदि चोपनीतभानस्यांशेपि लौकिकीविषयता नोररीक्रियते तदाह न स्यादिति । पित्तादिदोषाजन्येत्यस्य फलमाह शङ्ख इति नेद रजतमिति वाधवुद्धौ विद्यमानाया दूरत्वादिदोषे सत्यपीदं रजतमिति भ्रमासम्भवात्पित्तादीत्युक्त । तथा च भ्रमसामान्यस्य नाप्रतिवध्यत्वमिति भावः । भूतले घटाभावनिश्चये सत्यपि आहार्यलौकिकप्रत्यक्षोदयादनाहार्यत्वमपि प्रतिवध्यकोटौ देय आहार्यत्व तु वाधवुद्धि कालीनेच्छाजन्यज्ञानत्व । इत्थ च तदभाववत्ताज्ञान त्रिविध । तदभाववत्ताज्ञान तदभावव्याप्यवत्ताज्ञान तदभावावच्छेदकवत्ताज्ञान चेति । तत्र तदभावविशिष्टज्ञानयोरेव प्रतिवध्यप्रतिवन्धकभावः-तथा हि । अप्रामाण्यज्ञानानास्कन्दिततद्धर्मितावच्छेदकतद्धर्मावच्छिन्न तदिन्द्रियजन्यतदभावनिश्चयत्वेन प्रतिवन्धकता । दोषविशेषाजन्यलौकिकसनिर्षाजन्यानाहार्यतदिन्द्रियजन्यतद्वत्ताज्ञानत्वेन प्रतिवध्यता भूतलङ्घटाभाववदिति ज्ञानेऽप्रामाण्यज्ञाने जाते भूतलङ्घटवदिति ज्ञाने वाधकाभावात्प्रतिवन्धककोटावप्रामाण्यज्ञानानास्कन्दितेति । अथ भूतलङ्घटाभाववदिदञ्च ज्ञानमपेक्षावुध्यात्मकाप्रमेत्यप्रामाण्य ज्ञानात्मको वाधनिश्चयस्ततो भूतल घटवदिति विशिष्टवुद्धिस्ततो भूतल घटाभाववदिति लौकिकप्रत्यक्षात्मको वाधनिश्चयस्तत्र य द तदप्रामाण्यज्ञानमुत्तेजक तदा द्वितीयवाधवुद्धिनिश्चयोत्पत्तिक्षणेऽग्रिमक्षणे च भूतलं घटवदिति ज्ञान स्यात् । सामानाधिकरण्यसम्वन्धेनाप्रामाण्यज्ञानवैशिष्ट्यस्य द्वितीयवाधवुद्धावपि सत्त्वात् । यदि च तदप्रामाण्यज्ञान नोत्तेजक तदा प्रथमवाधवुद्धिद्वितीयक्षणेपि भूतल घटवदिति ज्ञान न स्यादिति चेन्न । अप्रामाण्यज्ञानस्य विषयत्वसामानाधिकरण्योभयसम्वन्धेन वैशिष्ट्यस्य विवक्षितत्वात् । अत्र विषयत्वसम्वन्धेनाप्रामाण्यज्ञानवैशिष्ट्यस्य प्रथम-

बाधबुद्धावेवसत्त्वान्न दोषः। सामाधिकरण्यपदोपादानाच्चैत्रस्य बाधबुद्धौ चैत्रीयज्ञानमप्रमेति मैत्रस्य ज्ञानमादाय न दोषः॥ गेहं घटाभाववदिति निश्चयेपि द्रव्यं घटवदिति द्रव्यत्वेन रूपेण गेहे घटवत्ताज्ञाने बाधकाभावात्तद्धर्मितावच्छेदकेति प्रतिबन्धककोटौ प्रतिबध्यकोटौ च विशेषणं। ह्रदो वह्न्यभाववानिति बाधनिश्चयेपि ह्रदो द्रव्यवानिति वह्नेर्द्रव्यत्वेन रूपेण ज्ञाने बाधकाभावात्कोटिद्वयेपि तद्धर्मावच्छिन्नेति विशेषणं देयं। पर्वतो वह्निमान्नवेति संशयकालीनपरामर्शाव्यवहितोत्तरमनुमितेरुदयात्प्रतिबन्धककोटौ निश्चयत्वं विशेषणं। मण्डूकवसाञ्जनेन वंशे उरगत्वभ्रमेपि त्वचा नोरग इति ज्ञानोदयात्तदिन्द्रियजन्यत्वं कोटिद्वयेपि विशेषणं। एवं तदभावव्याप्यवत्तानिश्चयतद्विशिष्टबुद्ध्योरपि तथैव प्रतिबध्यप्रतिबन्धकभावः। यथायं स्थाणुभेदव्याप्यपुरुषत्ववान् स्थाणुत्वात्यन्ताभावव्याप्यपुरुषत्ववांश्चेति निश्चयेऽयं स्थाणुरिति न विशिष्टबोधः एवं तदभावावच्छेदकवत्ताज्ञानतद्विशिष्टबुद्ध्योरपि तथैव प्रतिबध्यप्रतिबन्धकभावः। यथायं स्थाणुत्वाभावावच्छेदकपुरुषत्ववानिति निश्चयेऽयं स्थाणुरिति न विशिष्टबुद्धिरिति। विवेचितं चेदं बाधस्यानुमितिप्रतिबन्धकत्वविचारावसर इति दिक्। एवं च निरुक्तयाह्याभावनिश्चयस्य तादृशज्ञानमात्रे प्रतिबन्धकत्वादयोग्यतानिश्चयस्य याह्याभावनिश्चयात्मकत्वेन तत्सत्त्वे प्रतिबन्धकत्वादेव शाब्दबोधानुत्पत्तिः। न च योग्यताज्ञानस्य याह्याभावज्ञानविधया प्रतिबन्धकत्वे इच्छासत्त्वे आहार्यप्रत्यक्षवदाहार्यशाब्दबोधापत्तिरिति वाच्यम्। शाब्दानुमित्योरिच्छाजन्यत्वाभावेनाहार्यत्वानङ्गीकारात्। न चैवं शाब्दबोधानुत्पत्तौ योग्यताज्ञानस्य हेतुत्वमुच्यतामिति वाच्यम्। प्रतिबध्यकोटौ शाब्दान्यत्वदानेन योग्यताज्ञानस्य पृथक्कारणत्वकल्पनेन च गौरवात्। यत्र गेहं घटवदिति स्मरणानन्तरं घटाभावलौकिकप्रत्यक्षं तत्र गेहं घटवदिति शाब्दबोधः स्यात्। स्मरणात्मकयोग्यताज्ञानस्य सत्त्वाच्च। अथ मुखं चन्द्र इत्यादौ प्रहसनादौ योग्यताज्ञानसत्त्वेपि बाधितार्थस्यापि शाब्दबोधाच्छाब्दान्यत्वमवश्यं प्रतिबध्यकोटौ

वाच्य । तथा च न योग्यताज्ञान कारण न वाप्ययोग्यताज्ञानसत्वे शाब्दबोधाभावस्य निखिलजनसिद्धत्वादयोग्यताज्ञानस्य प्रतिबन्धकत्वात् । तथा च मुख चन्द्र इत्यादौ कलहादौ च शब्दात्पदार्थोपस्थितौ मानसबोध एव । अथ वा चन्द्रपदमाल्हादके लाक्षणिक । न चैव कलहादौ मिथ्याभिज्ञापादौ च शाब्दबोधाभावे कथ दुःखोत्पत्तिरूप शाब्दधी· फलमिति वाच्यम् । शब्दात्पदार्थोपस्थितौ सत्या ममानेन गालन कृतमिति मानस ज्ञानादेव दुःखोत्पत्ते । नन्विदं वाक्यमेतदर्थं तत्प्रतीतीच्छयोच्चरितमिति तात्पर्यज्ञानस्य ससर्गघटितस्य शाब्दबोधे हेतुत्व तत्र कि ससर्गविषयकतात्पर्यज्ञानत्वेन हेतुत्व कि वा तात्पर्यविषयससर्गज्ञानत्वेनेति विनिगमनाविरहाद्द्वयोरेव हेतुत्व तत्र तात्पर्यस्य प्राधान्यात्तात्पर्यज्ञानस्य ससर्गस्य प्राधान्याच्च ससर्गरूपयोग्यताज्ञानस्य हेतुत्वमिति समायातं योग्यताज्ञानहेतुत्वेनेति चेन्न हेत्वभिमतयोग्यताज्ञानत्वस्य सशयसाधारण्यात् । तात्पर्यज्ञानस्य तु निश्चयत्वेन हेतुत्वादिति । तस्माच्छाब्दबोध साधारणक्लृप्तप्रतिवध्यप्रतिबन्धकभावेनैवोपपत्तौ कृत योग्यताज्ञानस्य हेतुत्वेनेति सक्षप. ।

न च घटेऽभिधेयत्वासंसर्गाप्रसिद्ध्या तद्ग्रहाप्रसिद्धिः । अभिधेयत्वप्रतियोगिकत्वेन योऽभावभ्रमस्तदभावस्य प्रसिद्धेः । यदि च सोपि न प्रसिद्धस्तदाऽऽस्तां तत्र योग्यता हेतुरेव । न चैवं व्यभिचाराच्छाब्दबोधं प्रति योग्यतायाः कथं कारणत्वमिति वाच्यम् । न हि शाब्दबोधत्वावच्छेदेन योग्यतायाः कारणत्वं । किं तु तदीयतादृशान्वयबोधे तदीयतादृशान्वयविरहनिश्चयाभावत्वेनैव विशिष्यैवेति क्व व्यभिचार इत्याहुः ।

केवलान्वयिनोऽभिधेयत्वस्याभावोऽप्रसिद्ध इति तद्ग्रहोऽप्यप्रसिद्ध स्तथा चात्र तादृशासंसर्गाग्रहरूपायोग्यताविरहाद्व्यभिचार इति शङ्कते न चेति । ननु मास्त्वभिधेयत्वप्रतियोगिकाभावप्रमा परन्त्वभावे ऽभिधेयत्व प्रतियोगिकत्वभ्रमे किं बाधकमिति समाधत्ते अभिधेयत्वेति । नन्व सत्ख्यात्यनङ्गीकारात्कथं तादृशभ्रमोऽपीत्यत आह । यदि चेति । तत्र-घटोऽभिधेय इत्यत्र अहेतुरेवेति पाठः ॥ योग्यता अहेतुरेव बाधबुद्ध्यभाव-रूपायोग्यता अहेतुरेव । एवं तादृशयोग्यताया घटोऽभिधेय इत्यत्र हेतुत्वे । तदीयतादृशान्वयबोधे मैत्रीयगोप्रकारककर्मत्वविशेष्यकान्वयबोधे तदी-यान्वयतादृशान्वयनिश्चयाभावत्वेन मैत्रीयगोपदार्थो नकर्मत्वसंसर्गीति-निश्चयाभावत्वेनेति तथा च गोप्रकारं कर्मत्वविशेष्यकशाब्दबोधं प्रति-गोपदार्थो न कर्मत्वसंसर्गीति निश्चयाभावत्वेनेति । विशिष्याहेतुत्वे सिद्धे घटोऽभिधेय इत्यत्र योग्यताया विरहेऽपि तत्यभावेन व्यभिचाराभावा-द्बाधनिश्चयाभावातिरिक्तयोग्यतायां माना[illegible]व इति भावः । यद्वा हेतुरेवेति पाठः । तत्र घटोऽभिधेय इत्याद्यतिरिक्तस्थले हेतुरेव । बाध बुद्ध्यभावरूपायोग्यता । एवं तादृशयोग्यताया घटोऽभिधेय इत्याद्यतिरिक्त स्थलं प्रति हेतुत्वे व्यभिचारात् । घटोऽभिधेय इत्यत्र व्यभिचारात् । अन्यत्सर्वं पूर्ववत् ।

**आसत्तिः पदाव्यवधानं । अत एव गिरिरग्नि-मानित्यासन्नं । अनासन्नं च गिरिर्भुक्तमग्निमान्देवद-त्तेनेति । न चैवं स्थाल्यामोदनं पचतीति स्थाल्यामि-त्यस्य पाकेनानासन्नतापत्तिः । ओदनमित्यनेन व्यव-धानादिति वाच्यम् । प्रकृतान्वयबोधाननुकूलव्यव-धानाभावस्य विवक्षितत्वात् । ओदनपदं च स्थाल्य-धिकरणकौदनकर्मकपाककर्तेत्यन्वयबोधानुकूलमेव**

स्थाल्यां पचतीत्यन्वये तु अनासन्नमेवेति प्राञ्चः । न चैवं श्लोकादेर्योजनयाप्यन्वयबोधः कथं व्यवहितत्वेन प्रत्यक्षसिद्धेऽव्यवहितत्वेन भ्रमासम्भवादिति वाच्यम् । तत्र हि श्लोकपदान्नान्वयबोधः । किन्तु योजना-वाक्यादित्याहुः ।

अवसरसङ्गत्यैककार्यकारित्वसङ्गत्यावाऽऽसत्तिनिर्विक्ति । आसत्तिरिति अनासन्नमिति । अत्र गिरिपदस्याग्निपदेन सहान्वये भुक्तपदस्य व्यवधा-नाद्गिरिपद नाग्निपदेन सहासन्नमित्यर्थः । एव आसन्नेऽव्यवधानघटितत्वे स्थाल्यामिति । स्थाल्यधिकारणकौदनकर्मकपाकानुकूलकृतिमानिति बोधे स्थालीपदार्थस्योदनकर्मकपाकेन सममन्वयादवासत्तेरपेक्षितत्वादव्याप्ति-रिति भाव' । प्रकृतेति । तात्पर्यविषयबोध एवात्र प्रकृतः । अत एव गिरिर्भुक्तमग्निमाननित्यत्र गिरिपदस्याग्निपदेनसहानासन्नतेति । अथ स्थाल्यामोदन पचतीत्यत्र स्थाल्यधिकरणक यदोदन तत्कर्मकपाकानु कूलकृतिमानित्यन्वये स्थाल्यामित्यस्यौदनेन सहासन्नता पाकेन सहत्व-नासन्नतेति प्राचीनमतमाह । स्थाल्यामिति । पचतीत्यन्वये पाकेनान्वये । एवं प्रकृतान्वयबोधानुकूलयदव्यवधानाभावस्यासत्तित्वविवक्षणे । श्लो-कादेरिति श्लोकादौ प्रकृतान्वयीभूतमुख्यार्थान्वयानुकूलानामपि पदाना व्यवधानसत्त्वादिति भावः । न च व्यवहितत्वभ्रमो ऽत्रप्य तत्र जायत एवेत्यत आहाव्यवहितत्वेनेति । मौनिश्लोके पदाभावेन पदघटितासत्तेर-सम्भवादाहुरित्युक्तम् ।

वस्तुतस्तु आकांक्षादिमत्वे सति तात्पर्यज्ञाने व्यवहितादप्यन्वयबोधात्तद्विलम्बेनाविलम्बाच्च नैत-ज्ज्ञानं हेतुः । किं तु व्यवहितपदतात्पर्यज्ञानं । तच्चैतत्प-

दमेतत्पदाव्यवहितोत्तरमभिसन्धातु इत्यपि सन्धापयितुरिच्छा। अत एव मौनिश्लोकेप्यासत्तिः वक्तुरभावेप्यभिसन्धातुः सत्त्वात्। शुकवाक्ये च भगवत्तात्पर्यमादायैव गतिरिति नव्याः। तदपि न सत्यर्थतात्पर्यज्ञानादावेतद्विलम्बेन शाब्दबोधविलम्बाभावात्। तस्माद्वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः। सा च स्वरूपसती हेतुः। न हि पदार्थानुपस्थितावन्वयबोधः। न च वृत्त्या पदजन्येति व्यर्थं। घटपदात्समवायेनाकाशस्मृतौ घटोस्तीति वाक्यादाकाशान्वयबोधापत्तेः ननु घटमानयेत्यत्र घटकर्मत्वानयनकृत्युपस्थितीनां न युगपत्सम्भवः। आशुविनाशिना क्रमिकाणां मेलकाभावादिति चेन्न। क्रमिकपदानुभवजन्यानेकसंस्कारैर्युगपत्तावत्पदस्मरणाद्युगपत्तावत्पदार्थोपस्थिताबन्वयबोधः सम्भवतीति संक्षेपः। अत एव व्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिरित्यपास्तम्। तृतीयान्तवैयर्थ्यात्। व्यवहितोपस्थितावेकस्या उपस्थितेर्विनाशात्।

मिश्रमतमाह वस्तुतस्त्विति तात्पर्यज्ञान इति सतीत्यनुषज्यते। ननु अव्यवधानस्य प्रकृतान्वयबोधानुगुणत्वाच्च व्यभिचार इत्यत आह तद्विलम्बेनेति। यद्वा। ननु व्यवधाने सत्यव्यवधानज्ञानस्यावश्यं तत्र सत्त्वाच्च व्यभिचार इत्यत आह तद्विलम्बेनेति। तद्विलम्बेन आसत्तिज्ञानविलम्बेन। तत्र च। अव्यवहिततात्पर्ये च। एतत्पदमिति एतत्पद-

राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः । अत्र तृतीया कर्मणीत्यस्य व्याख्यानशयनासनस्थानाना-मभावकर्माथे वचनम् । कारकात् किम् । प्रभूतौ सङ्गतिम् । अत्र तादौ च नितीति स्वरः ॥

**सप्तम्याः पुण्यम् । ६ । २ । १५२ ॥**

अध्ययनपुण्यम् । तत्पुरुषे तुल्यार्थेति प्राप्तम् । सप्तम्याः किम् । वेदेन पुण्यम् । वेदपुण्यम् ।

**ऊनार्थकलहं तृतीयायाः । ६ । २ । १५३ ॥**

माषोनम् । माषविकलम् । वाक्कलहः । तृतीयापूर्वपद-प्रकृतिस्वराऽपवादोऽयम् । अत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः । ऊनशब्देन त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् ॥

**मिश्रञ्चानुपसर्गमसन्धौ । ६ । २ । १५४ ॥**

पणबन्धेनैकार्थ्यं सन्धिः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रं किम् । गुडधानाः । अनुपसर्गं किम् । तिलसम्मिश्राः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणस्येदमेव ज्ञापकम् । असन्धौ किम् । ब्राह्मण-मिश्रो राजा । ब्राह्मणैः सहित ऐकार्थ्यमापन्नः ॥

**नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्था-स्तद्धिताः । ६ । २ । १५५ ॥**

सम्पाद्याद्यर्थकतद्धितान्ता नञो गुणप्रतिषेधे वर्त्तमानात् परे ऽन्तोदात्ताः ॥ कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् । न कार्णवेष्ट-किकमकार्णवेष्टकिकम् । च्छेदमर्हति छैदिकः । न छैदिकोऽच्छै-

दिकः ॥ न वत्सेभ्यो हितोऽवत्सीयः । न सन्तापाय प्रभवति असान्तापिकः । नञ किम् । गर्दभरथमर्हति गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेधे किम् । गार्दभरथिकादन्योऽगार्दभरथिकः । गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं सम्पादितत्वादुच्यते । तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । सम्पेति किम् । पाणिनीयमधीते पाणिनीयः । अपाणिनीयः । तद्धितः किम् । वोढुमर्हो वोढा न वोढा अवोढा ॥

## ययतोश्चातदर्थे । ६ । २ । १५६ ॥

ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात् परस्यान्त उदात्तः । पाशानां समूहः पाश्या । न पाश्या अपाश्या । अदन्त्यम् । अतदर्थे किम् । अपाद्यम् । तद्धित किम् । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यददन्त्यम् । तदनुबन्धकग्रहणे नातदनुबन्धकस्येति नेह । अवामदेव्यम् ॥

## अच्कावशक्तौ । ६ । २ । १५७ ॥

अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः । पक्तुं न शक्तः । अविलिखः । अशक्तौ किम् । अपचो दीक्षितः । गुणप्रतिषेध इत्येव । अन्योऽयं पचादपचः ॥

## आक्रोशे च । ६ । २ । १५८ ॥

नञः परावच्कावन्तोदात्तावाक्रोशे ॥ अपचो जाल्मः । पक्तुं न शक्नोतीत्येवमाक्रोश्यते । अविक्षिपः ॥

## संज्ञायाम् । ६ । २ । १५९ ॥

नञः परमन्तोदात्तं संज्ञायामाक्रोशे । अदेवदत्तः ॥

## कृत्योकेष्णुच्चार्वादयश्च । ६ । २ । १६० ॥

नञः परे ऽन्तोदात्ताः स्युः । अकर्तव्यः । उक । अनागामुकः । इष्णुच् । अनलङ्करिष्णुः । इष्णुच्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणम् । इकारादेर्विधानसामर्थ्यात् । अनाढ्यम्भविष्णु । चार्वादि । अचारु । असाधुः ॥ राजाह्नोश्छन्दसि ॥ * ॥ अराजा । अनहः । भाषायां नञ स्वर एव ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु । ६ । २ । १६१ ॥

तृन् । अकर्ता २ । अन्न । अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे ऽव्ययस्वरः ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने । ६ । २ । १६२ ॥

एभ्यो ऽनयोरन्त उदात्तः ॥ इदं प्रथमं यस्य स इदप्रथमः । एतद्द्वितीय. । तत्पञ्चम । बहुव्रीहौ किम् । अनेन प्रथम इदंप्रथमः । तृतीयेति योगविभागात् समास । इदमेतत्तद्भ्यः किम् । यत्प्रथम । प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथमो येषान्ते इदंप्रथमाः । द्रव्यगणनमिदम् । गणने किम् । अयं प्रथम एषान्ते इदंप्रथमा । इदंप्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तम् । इदंप्रथमकाः । बहुव्रीहावित्यधिकारो वनं समास इत्यत. प्राक् ॥

## संख्यायाः स्तनः । ६ । २ । १६३ ॥

बहुव्रीहावन्तोदात्तः । द्विस्तना । चतुःस्तना । संख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः ॥

**विभाषा छन्दसि । ६ । २ १६४ ॥**

त्रिस्तनां करोति ॥

**संज्ञायां मित्राजिनयोः । ६ । २ । १६५ ॥**

देवमित्रः । कृष्णाजिनम् । संज्ञायां किम् । प्रियमित्रः । ऋषिप्रतिषेधो मित्रे ॥ * ॥ विश्वामित्र ऋषिः ॥

**व्यवायिनोऽन्तरम् । ६ । २ । १६६ ॥**

व्यवधानवाचकात् परमन्तरमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवायिनः किम् । आत्मान्तरः । स्वभावोऽन्यो यस्येत्यर्थः ।

**मुखं स्वाङ्गम् । ६ । २ । १६७ ॥**

गौरमुखः ॥ स्वाङ्गं किम् । दीर्घमुखा शाला ।

**नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । ६ । २ । १६८ ॥**

उच्चैर्मुख । उपाग्निमुख इत्यादावव्ययीभावपूर्वपदकोऽयं निषेधः केषां चिन्मते प्रवर्तते । केषां चित्तु नेत्यव्ययीभावश्चेत्यत्र भाष्यकैयटयोः स्पष्टम् । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ।

**निष्ठोपमानादन्यतरस्याम् । ६ । २ । १६९ ॥**

निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ ॥ प्रक्षालितमुखः । पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । उपमानम् । सिंहमुखः ॥

## जातिकालसुखादिभ्यो ऽनाच्छादनात् क्तो ऽकृतमित प्रतिपन्नाः । ६ । २ । १७० ॥

सारङ्गजग्धः । मासयातः । सुखयातः । दुःखयातः । सुखादयः सुखादिभ्यः कर्तृवेदनायामित्यत्रत्याः । जात्यादिभ्यः किम् । पुत्रजातः । अनाच्छादनात् किम् । वस्त्रच्छन्नः । अकृतेति किम् । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः ॥

## वा जाते । ६ । २ । १७१ ॥

जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः । दन्तजातः । मासजातः ॥

## नञ्सुभ्याम् । ६ २ । १७२ ॥

बहुव्रीहावुत्तरपदमन्तोदात्तम् । अव्रीहिः । सुमाषः ॥

## कपि पूर्वम् ६ । २ । १७३ ॥

नञ्सुभ्यां पूर्वमुदात्तं कपि परे ॥ अब्रह्मबन्धुकः । सुकुमारीकः ।

## ह्रस्वान्ते ऽन्त्यात् पूर्वम् । ६ । २ । १७४ ॥

ह्रस्वान्ते उत्तरपदे समासे वान्त्यात् पूर्वमुदात्तं कपि नञ्सुभ्यां बहुव्रीहौ ॥ अव्रीहिकः । सुमाषकः । पूर्वमित्यनुवर्तमाने पूर्वग्रहणं प्रकृतिभेदेन नियमार्थं ह्रस्वान्तेऽन्त्यादेव पूर्वं नञ्सुभ्यां परमुदात्तं न कपि पूर्वमिति । अज्ञकः । सुज्ञकः । अत्र नञ्सुभ्यामिति कबन्तस्यैवान्तोदात्तत्वम् । तद्धि समासस्यान्तोदात्तत्वमिष्यते । समासान्ता वा उत्तरपदावयवा भवन्तीति । अनृचो बह्वृच इत्यत्रापि

कृते समासान्ते तेनान्तोदात्तत्व भवति । अत एव कपि पूर्वमिति सङ्गच्छते ॥

**बहोर्नञ्वदुत्तरपदभूम्नि ६ । २ । १७५ ॥**

उत्तरपदार्थबहुत्ववाचिनो बहो' परस्य पदस्य नञ परस्येव स्वर. स्यात् । बहुव्रीहि । बहुकुमारीकः । बहुव्रीहिक' । नञ्वद्वचन विदेशस्थस्यापि नञो जरमरेत्यस्यातिदेशेन प्रवृत्त्यर्थम् । बहुजर । बहुमर' । बहुमित्रः । बहुमृत. । उत्तरपदेति किम् । बहुषु मानोऽस्य स बहुमानः ।

**न गुणादयोऽवयवाः । ६ । २ । १७६ ॥**

अवयववाचिनो बहो. परे गुणादयो न नञवत्स्वरका बहुव्रीहौ ॥ बहुगुणा रज्जु. । बह्वक्षर पदम् । बह्वध्याय' । पूर्वपदप्रकृतिस्वर एव भवति । गुणादिराकृतिगण । अवयवाः किम् । बहुगुणो द्विजः । अध्ययनश्रुतसदाचारादयो गुणाः ॥

**उपसर्गात् स्वाङ्गं ध्रुवमपर्शु । ६ । २ । १७७ ॥**

प्रपृष्ठः । प्रललाट । प्रमुख इत्यत्र मुख स्वाङ्गमित्यस्य नाव्ययेति निषेध परत्वाद्बाधित्वेद भवति । ध्रुवमेकरूपम् । उपसर्गात् । किम् । प्रदर्शनीयपृष्ठः । स्वाङ्ग किम् । प्रशाखो वृक्षः । ध्रुव किम् । उद्बाहु । अपर्शु किम् । विपर्शुः ॥

**वनं समासे । ६ २ । १७८ ॥**

समासमात्रे उपसर्गादुत्तरपद वनमन्तोदात्तम् ॥ तस्येदिमे प्रवणे । प्रनिरन्त इति णत्वम् । समासग्रहण बहुव्रीह्यधिकारनिवृत्त्यर्थम् । उपसर्गात् किम् । शरवणो देशः ॥

अन्तः । ६ । २ । १७९ ॥

अस्मात् परं वनमन्तोदात्तम् । अन्तर्वणो देशः । अनुपसर्गार्थमिदम् ॥

अन्तश्च । ६ । २ । १८० ॥

उपसर्गादन्तशब्दोऽन्तोदात्तः । प्रान्तः । पर्यन्तः । समन्तः ॥

न निविभ्याम् ॥ ६ । २ । ८१ ॥

न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति स्वरितः ॥

परेरभितोभावि मण्डलम् ॥ ६ । २ । १८२ ॥

परेः परमभित उभयतो भावो यस्यास्ति तत् कूलादि मण्डलं चान्तोदात्तम् । परिकूलम् । परिमण्डलम् । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावपक्षे कूलतीरेति परिप्रत्युपेति वा प्राप्तम् ॥

प्रादस्वाङ्गं संज्ञायाम् ॥ ६ । २ । १८३ ॥

प्रगृहम् । अस्वाङ्ग किम् । प्रपदम् । संज्ञायां किम् । प्रशाखो वृक्षः ॥

निरुदकादीनि च । ६ २ । १८४ ।

अन्तोदात्तानि । निरुदकम् । निरुपलम् । निरुदकादिराकृतिगणः ॥

अभेर्मुखम् । ६ । २ । १८५ ।

अभिमुखम् । योगविभाग उत्तरार्थः ॥

## स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च । ६ । २ । १८६ ।

अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस् । अपाञ्जः । अध्वन् । अपाध्वा । उपसर्गादध्वन इत्यस्याभावे इदम् । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षि । सीरनाम । अपसीरम् । अपहलम् । अपनाम । स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च ॥

## अधेरुपरिस्थम् । ६ । २ । १८७ ।

अध्यारूढो दन्तोऽधिदन्तः । दन्तस्योपरिजातो दन्तः । उपरिस्थ किम् । अधिकरणम् ॥

## अनोरप्रधानकनीयसी । ६ । २ । १८८ ।

अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानः । प्रधानार्थञ्च कनीयोग्रहणम् । अप्रेति किम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥

## पुरुषश्चान्वादिष्टः । ६ । २ । १८९ ।

अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्त. । अन्वादिष्टपुरुषोऽनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोऽनुपुरुषः ॥

## अतेरकृत्पदे । ६ । २ । १९० ।

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् । शोभन कारकोऽतिकारकः ॥

अतेर्धातुलोप इति वाच्यम् ॥ * ॥ इह मा भूत् । शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात् । अतिक्रान्तः कारकमतिकारकः ।

## नेरनिधाने । ६ । २ । १९१ ।

निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशमित्यर्थः । निमूलम् । न्यक्षम् । अनिधाने किम् । निहितो दण्डो निदण्डः ॥

## प्रतेरंश्वादयस्तत्पुरुषे । ६ । २ । १९२ ।

प्रतेः परेंऽश्वादयो ऽन्तोदात्ताः ॥ प्रतिगतोऽशुः प्रत्यशुः । प्रतिजनः । प्रतिराजा । समासान्तस्यानित्यत्वान्न टच् ॥

## उपाद् द्व्यजजिनमगौरादयः । ६ । २ । १९३ ।

उपात् परं द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन् वर्जयित्वा ॥ उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादय किम् । उपगौरः । उपतैषः । तत्पुरुषे किम् । उपगतः सोमोऽस्य स उपसोमः ।

## सोरवक्षेपणे । ६ । २ । १९४ ।

सुप्रत्यवसितः ॥ सुरत्र पूजायामेव वाक्यार्थस्त्वत्र निन्दा । असूयया तथाऽभिधानात् । सोः किम् । कुब्राह्मणः । अवक्षेपणे किम् । सुवृषणम् ॥

## विभाषोत्पुच्छे । ६ । २ १९५ ।

तत्पुरुषे ॥ उत्क्रान्तः पुच्छादुत्पुच्छः २ । यदा तु पुच्छमुदस्यति उत्पुच्छयते शरच् उत्पुच्छः । तदा थाथादिस्वरेण नित्यमन्तस्योदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्र विभाषा । तत्पुरुषे किम् । उदस्तं पुच्छं येन स उत्पुच्छः ॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ । ६ । २ । १९६ ॥

आभ्यां परेष्वेतेष्वन्तोदात्तो वा ॥ द्विपाच्चतुष्पाच्च रथाय । त्रिपादूर्ध्व । द्विदन् । त्रिदन् । द्विमूर्धान सप्तरश्मिम् । मूर्द्धन्नित्यकृतसमासान्त एव मूर्द्धशब्दः । तस्यैतत्प्रयोजनमसत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकमनित्यः समासान्तो भवतीति । तदापि च समासान्तः क्रियते तदाऽप्यस्य स्वरस्य बहुव्रीहिकार्यत्वात् समासान्तस्य तदेकदेशत्वाच्चैतत्सूत्रविहितं समासान्तोदात्तत्व पक्षे भवत्येव । अत्र हि सूत्रे समासस्यैव कार्यित्वमुत्तरपदावयवाः समासान्ता वेति सिद्धान्तः । द्विमूर्द्ध । त्रिमूर्द्ध । द्वित्रिभ्या किम् । कल्याणमूर्द्धा । बहुव्रीहौ किम् । द्वयोर्मूर्द्धा द्विमूर्द्धा ॥

## सक्थं चाऽक्रान्तात् । ६ । २ । १९७ ॥

कृतसमासान्तः सक्थशब्दोऽन्तोदात्तो वा बहुव्रीहौ क्रशब्दान्तात् परश्चेन्न भवति ॥ गौरसक्थः । श्लक्ष्णसक्थः । अक्रान्तात् किम् । चक्रसक्थः । समासान्तस्य षचश्चित्वान्नित्यमेवान्तोदात्तत्वं भवति ॥

## परादिश्छन्दसि बहुलम् । ६ । २ । १९८ ।

छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा ॥ अजसक्थमालभेत । अत्र वार्तिकम् ॥ परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यत इति ॥ * ॥ तुविजाता उरुक्षया । उरूणा बहूना क्षयावित्यर्थ । क्षयशब्द क्षयो निवास इत्याद्युदात्त. समासस्येत्यन्तोदात्तत्व बाधित्वा कृदुत्तरपद प्रकृतिस्वरेणोत्तरपदाद्युदात्तत्व प्राप्त तत्याद्यादिस्वरेण बाधितमतो बाहुलकेनोत्तरपदाद्युदात्तत्वमिति वेदभाष्ये स्थितम् । परान्तः ।

नि येन मुष्टिहत्यया। मुष्ट्या हननं मुष्टिहत्या। हनस्तचेति क्यप्। कृदुत्तरपदप्रकृतिस्वरोऽच प्राप्तः। पूर्वान्त। विश्वायुर्धेहि। विश्वमायुर्यस्मिन् धने इति बहुव्रीहिः। विश्वशब्दः क्वन्नन्तत्वादाद्युदात्तः। तस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्व प्राप्तम्। पूर्वाद्युदाहरणं आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानमिति पूर्वोक्तं द्रष्टव्यम्॥ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्॥ * ॥ त्रिचक्रेण त्रिबन्धुरेण त्रिवृतारथेन त्रिचक्रेणेत्यादौ बहुव्रीहिस्वरे प्राप्तेऽन्तोदात्तत्व विधीयते एतदपि परान्तस्यैवोदाहरणम्। एवं पूर्वपदान्तोदात्तत्वप्रकरणे मरुद्वृधादीनां छन्दसीत्यपि पूर्वान्तोदाहरणम्।

इत्योरम्भट्टेन श्रीघोण्डभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य द्वितीय. पाद. समाप्त.॥



# अथ षष्ठाध्यायस्य तृतीयः पादः ।

## अलुगुत्तरपदे । ६ । ३ । १ ।

अलुगधिकारः प्रागानङ उत्तरपदाधिकारस्त्वा पादसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रालुगुत्तरपदे इत्येवं तद्वेदितव्यम् । वक्ष्यति । पञ्चम्याः स्तोकादिभ्य' । स्तोकान्मुक्तः । उत्तरपदे किम् । निष्क्रान्तः स्तोकान्निस्तोक । आनङ् ऋतो द्वन्द्वे । उत्तरपदे किम् । होतापोतृभ्याम् । पोतृशब्दस्यानङ् न भवति । इको ह्रस्वो । उत्तरपदे किम् । ग्रामणी. ॥

## पञ्चम्याः स्तोकादिभ्यः । ६ । ३ । २ ॥

एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे ॥ स्तोकान्मुक्त. । अल्पान्मुक्तः । एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः । द्विवचनबहुवचनान्ताना स्तोकादीना समास एव नानभिधानात् ॥ ब्राह्मणाच्छंसिन उपसख्यानम् ॥ * ॥ ब्राह्मणे विहितानि शस्त्राण्युपचाराद् ब्राह्मणानि तानि शसतीति ब्राह्मणाच्छसी ऋत्विग्विशेष । द्वितीयार्थे पञ्चम्युपसख्यानादेव ॥

## ओजःसहोऽम्भस्तमसस्तृतीयायाः । ६ । ३ । ३

ओजसाकृतमित्यादि ॥ अञ्जस उपसंख्यानम् ॥ * ॥ अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ॥ पुसानुजो जनुषान्ध इति च ॥ * ॥ यस्याग्रजः पुमान् स पुसानुजः । जनुषान्धो जात्यन्धः ॥

## मनसः संज्ञायाम् । ६ । ३ । ४ ।

मनसागुप्ता ॥

**आज्ञायिनि च । ६ । ३ । ५ ।**

मनस इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥

**आत्मनश्च । ६ । ३ । ६ ।**

आत्मनस्तृतीयाया अलुक् ॥ पूरण इति वक्तव्यम् ॥ * ॥ पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । जनार्दनस्त्वात्मचतुर्थ एवेति तु बहुव्रीहिर्बोध्यः । पूरणे किम् । आत्मकृतम् ।

**वैयाकरणाख्यायां चतुर्थ्याः । ६ । ३ । ७ ।**

आत्मन इत्येव ॥ आत्मनेपदम् । आत्मनेभाषा: । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात् समासः ॥

**परस्य च । ६ । ३ । ८ ॥**

परस्मैपदम् । परस्मैभाषा: ॥

**हलदन्तात् सप्तम्याः संज्ञायाम् । ६ । ३ । ९ ॥**

हलन्താददन्ताच्च सप्तम्या अलुक् सञ्ज्ञायाम् । त्वचिसारः । युधिष्ठिर । अरण्येतिलकः । अत्र संज्ञायामिति सप्तमीसमासः । गविष्ठिर इत्यत्र तु गवियुधिभ्यां स्थिर इति वचनादेवालुक् । हलदन्तात् किम् । भूम्यां यशो भूमियशः । सञ्ज्ञायां किम् । अक्षशौण्डः । हृद्द्युभ्यां च ॥ * ॥ हृदिस्पृक् । दिविस्पृक् ॥

**कारनाम्नि च प्राचां हलादौ । ६ । ३ । १० ॥**

स्वामिग्राह्यो भागः कारः ॥ प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् । मुकुटेकार्षापणम् । दृषदिमाषकः । पूर्वेण सिद्धे नियमार्थमिदम् । कारनाम्न्येव प्राचामेव

हलादावेवेति । क्षारनाम्नि किम् । अभ्याहितपशुः । कारादन्यस्यैतद्वयस्य नाम । प्राचा किम् । यूथपशुः । हलादौ किम् । अविकटोरणः । हलदन्तात् किम् । नद्यां दोहो नदीदोहः ॥

## मध्याद् गुरौ । ६ । ३ ११ ॥

मध्येगुरुः । अन्ताच्च । अन्तेगुरुः ॥

## अमूर्धमस्तकात् स्वाङ्गादकामे । ६ । ३ । १२ ॥

कण्ठेकालः । उरसिलोमा । अमूर्द्धमस्तकात् किम् । मूर्द्धशिखः । अकामे किम् । मुखे कामोऽस्य मुखकामः ॥

## बन्धे च विभाषा । ६ । ३ । १३ ॥

हलदन्तात् सप्तम्या अलुक् । हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः । चक्रबन्धः । हलेति किम् । गुप्तिबन्धः ।

## तत्पुरुषे कृति बहुलम् । ६ । ३ । १४ ॥

स्तम्बेरमः । कर्णेजपः । क्वचिन्न । कुरुचरः । विभाषा च भवति । सरसिजम् । सरोजम् ॥

## प्रावृट्शरत्कालदिवां जे । ६ । ३ । १५ ॥

प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्याय प्रपञ्चः ॥

## विभाषा वर्षक्षरशरवरात् । ६ । ३ । १६ ॥

एभ्यः सप्तम्या अलुक् जे । वर्षेजः । वर्षजः । क्षरेजः । क्षरजः । शरेजः । शरजः । वरेजः । वरजः ॥

## घकालतनेषु कालनाम्नः । ६ । ३ । १७ ॥

सप्तम्या विभाषा अलुक् स्यात् । घ । पूर्वाह्णतरे । पूर्वाह्णेतरे । पूर्वाह्णतमे । पूर्वाह्णेतमे । काले । पूर्वाह्णेकाले । पूर्वाह्णकाले । तन । पूर्वाह्णतने । पूर्वाह्णेतने । कालनाम्नः किम् । शुक्लतरे ॥

शयवासवासिष्वकालात् । ६ । ३ । १८ ॥

खेशयः । खशयः । ग्रामेवासः । ग्रामवासः । ग्रामेवासी । ग्रामवासी । अकालात् किम् । पूर्वाह्णशयः । हलदन्तादित्येव । भूमिशयः ॥ अपो योनियन्मतुषु ॥ * ॥ अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ ॥

नेन्सिद्धबध्नातिषु च । ६ । ३ । १९ ॥

इन्नन्तादिषु सप्तम्या अलुक् । स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबद्धः ॥

स्थे च भाषायाम् । ६ । ३ । २० ॥

सप्तम्या अलुक् न स्यात् । समस्थः । भाषायां किम् । कृष्णोऽस्याखरेष्ठः ॥

षष्ठ्या आक्रोशे । ६ । ३ । २१ ॥

चौरस्यकुलम् । आक्रोशे किम् । ब्राह्मणकुलम् ॥ वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥ * ॥ वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ॥ आमुष्यायणामुष्यपुत्रिका मुष्यकुलिकेति च ॥ * ॥ अमुष्यापत्यमामुष्यायणः । नडादित्वात् फक् । अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका । मनोज्ञादित्वाद् वुञ् । एवमामुष्यकुलिका ॥ देवानां प्रिय इति च मूर्खे । अन्यच देवप्रियः ॥ शेपपुच्छलाङ्गूलेषु शुनः ॥ * ॥

शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । दिवश्च दासे ॥ * ॥ दिवोदासः ॥

### पुत्रे ऽन्यतरस्याम् । ६ । ३ । २२ ॥

षष्ठ्याः पुत्रे परे ऽलुग्वा निन्दायाम् । दास्याः पुत्रः । दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ॥

### ऋतो विद्यायोनिसम्बन्धेभ्यः । ६ । ३ । २३ ॥

विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक् ॥ होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ॥ विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरग्रहणम् ॥ * ॥ नेह । होतृधनम् । पितृगृहम् ॥

### विभाषा स्वसृपत्योः । ६ । ३ । २४ ॥

ऋदन्तात् षष्ठ्या अलुग्वा स्वसृपत्योः परयोः । मातुःष्वसा । मातुःस्वसा । पितुःष्वसा । पितुःस्वसा । मातृष्वसा । पितृष्वसा । दुहितुःपतिः । दुहितृपतिः ॥

### आनङ् ऋतो द्वन्द्वे । ६ । ३ । २५ ॥

विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः । मातापितरौ । ऋत इत्यनुवर्तमाने पुनरृत इत्युक्तिः सर्वावयवद्वारा द्वन्द्वविशेषणार्था । तेन पितृपितामहादौ नानङ् । नकारोच्चारणमुरण्रपर इति व्यावृत्त्यर्थम् । अथ ऋकारस्य निर्दिश्यमानत्वेऽपि ङकारो मित्रावरुणावित्यादावन्त्यादेशत्वायोत्तरार्थः । पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्र इत्यनु-

॥ श्रीः ॥

ॐ नमः परमात्मने ।

श्रीचक्रपाणिदत्तकृतस्य

# प्रौढमनोरमाखण्डनग्रन्थस्य

## प्रस्तावः ।

महर्षिपाणिनिकृतसूत्रपाठाध्यायास्तथा तद्व्याख्यानस्य महर्षिपतञ्जलिकृतमहाभाष्यस्य एवं कौणिन्यवृत्तेः काशिकावृत्तेः भोजराजकृतसरस्वतीकण्ठाभरणाभिधवृत्तेरपि क्रममनादृत्य कैयटहरदत्ताद्याचार्याणां मतं च क्वचिद्विखण्ड्य सिद्धान्तकौमुदीं तद्व्याख्यां च श्रीभट्टोजिदीक्षिताः प्रणीतवन्त इति नैव तिरोहितमस्ति विदुषाम् । किन्तु

"अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृत ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव "(१) ॥

इति कहृत्तो दुर्गसिंहोक्तमवलम्ब्य श्रीचक्रपाणिदत्तेन प्रौढमनोरमाग्रन्थस्य खण्डनं कृतम् । एवं पण्डितसम्राड्जगन्नाथेनापि प्रौढमनोरमाकुचमर्दनाख्यं खण्डनं कृतमित्युभयोरन्वेषणे कृते मयैकं चक्रपाणिदत्तकृतप्रौढमनोरमाखण्डनपुस्तकं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तमानं विक्रमीय१८५८संवत्सरे लिखितमन-

(१) तिमिङ्गिलो मत्स्यभेद इति अमरकोशे । राघवो मत्स्यभेदेऽपीति कोशः ।

लिखुद्धं समधिगतं मुद्रणद्वारा तत्प्रकाशने प्रवृत्तम्। अस्य ग्रन्थस्य समालोचने कृते भट्टोजिदीक्षितपौत्रेण कृते शब्दरत्नग्रन्थे तद्व्याख्याने बालभट्टापरनामधेयवैद्यनाथभट्टपायगुण्डेकृते भावप्रकाशे च "इति खण्डनकारोक्तमपास्त"मित्यादि(१)दर्शनान्माननीयत्वेनास्मिन् ग्रन्थे महासमादरः सञ्जात इति काशीविद्यासुधानिधिनामकेऽस्मिन् मासिकपत्रे प्रकाशितः सन्नचिरेणैव सर्वेषां सुलभो भवेदित्येतदर्थाय मुद्रयितुमारब्धोऽधिकं तु समाप्ते मुद्रणे निरूपयिष्यामीति शिवम् ॥

---

(१) दीर्घेत्युपलक्षणं यणोऽपि प्रत्यासत्त्या ऋन्निमित्तकार्यमात्रस्य तेन वारणात्। अत एवाह गुणेति। ऋतो ङीत्यनेनेति भाव। यत्तु गुणे तस्य स्थानिवत्त्वेन दीर्घो न यणिति जगन्नाथादिस्तन्न तथा सति बाधकस्य जागरूकत्वात् पूर्वस्यैव स्थानिवत्त्वाच्च। एतेन गुणोत्तरमपीत्यादिखण्डनकृदादुरुक्तिरपास्ता। वार्तिकस्य साधारणत्वादाह। भाष्ये चेति। सर्वत्रेत्युक्त्या तस्य प्रकृतिभावपरत्वेनावङ्परत्वमिति खण्डनकृदुक्तिः परास्ता। खण्डनकारोक्तिं खण्डयितुमाह। तस्येति। चाक्रवर्मणस्येत्यर्थः। अनुसर्तव्यत्वादितीति। एतेन नलोपं प्रति नुटोऽसिद्धत्वान्नुट् स्यादिति मूलोक्तं चिन्त्यमिति खण्डनकारोक्तमपास्तम्। यत्तु प्रत्ययान्तपर्युदासे कार्ये सुब्लोपनिमित्तप्रत्ययलक्षणं नेत्यत्रेदं मानं विशेषापेक्षत्वात् एवञ्चाहानित्यत्र तिङ्लोपनिमित्तप्रत्ययलक्षणस्य तत्र कार्ये दुर्वारत्वेनाधातुरिति न कार्यमिति खण्डनकृत्। तत् खण्डयति। न चेति। ज्ञापकमिति ॥

बनारस
गवर्नमेण्टसंस्कृतकालेज
पुस्तकालये
१७ फरवरी १९११ ई०।

} विन्ध्येश्वरीप्रसादद्विवेदी



ॐ नमः परमात्मने ।

भट्टोजिदीक्षितकृत—

# सिद्धान्तकौमुद्या व्याख्यानस्य प्रौढमनोरमाग्रन्थस्य खण्डनम् ।

श्रीचक्रपाणिदत्तविरचितम् ।

विरोधिनां तिरोभावभव्यो यद्भारतीभरः ।
वटेश्वरं गुरुं शेषवंशोत्तंसं भजामि तम् ॥ १ ॥
दारितरिपुवक्षोजं सच्चक्रपाणिर्नरहरिं नत्वा ।
विद्वन्मण्डलहृद्यं तत्परमतखण्डनं तनुते ॥ २ ॥

## हयवरट् ।

हद्वयोपदेशोऽणिणोः शल्लोश्च हकारग्रहणार्थः । यत्तु हयवरट्सूत्रे हकारोपदेशप्रयोजनमडादौ तद्ग्रहणमित्युक्त्वा हल्सूत्रमुपादाय एतत्सूत्रप्रयोजनं शलादौ ग्रहणम् । तेनाधुक्षदित्यादि सिध्यतीत्युक्तम् । तत्र प्रथमं हकारोपदेशप्रयोजनमुत्तरत्र सूत्रप्रयोजनमिति भेदेन ग्रहणे किंबीजम् । न तावदाद्ये हका-

रानुपादानेऽपि आदिग्रहणाय सूत्रमावश्यकमिति ह-
कारोक्तिः। अन्त्ये तु हकारानुपादाने वलादयः प्रत्या-
हारा रेफेणैव ग्राह्या इति लकारोऽपि नोपादेय इति
सूत्रोपादानमिति। तथा सति रेफात् पूर्वं होपदेशे
रेफेण च वलादिग्रहणे रुदिहीत्यादिसिद्धौ लकारो-
पादानप्रयोजनानुक्तेर्न्यूनतेति चिन्त्यम्। किन्तर्हि चर-
मलकारोपादाने प्रयोजनमिति चेत्। हरिर्हरिरित्यत्र
खरवसानयोरिति विसर्जनीयस्य तस्य वा शरीति विस-
र्गविकल्पादेश्चाप्रवृत्तिः। एवं वाग्घरिरित्यादावपि
चर्त्वाप्रवृत्तिः। रेफात् पूर्वं होपादाने तस्य खर्षरोर्ग्रह-
णादिति॥

## हलन्त्यम्।

अत्र हल्प्रत्याहारसिद्धावनेन लस्येत्सञ्ज्ञा त-
त्सिद्धौ च हल्प्रत्याहारसिद्धिरित्यन्योन्याश्रय इति
हलित्यावर्तत इत्याकरः। अत्र केचित्। स्यादेतत्।
हलित्येकदेशस्य तन्त्रावृत्त्येकशेषान्यतममस्तु हस्य ल
इति च व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः। यद्वा। मास्तु
तन्त्रादि अस्तु समाहारद्वन्द्वः। हल् च ल् चेति। लका-
रस्य संयोगान्तलोप इति चेन्नैवम्। आद्ये समासस्य
क्लिष्टत्वात्। न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणस-

मीपवर्त्यन्यदीयः कम्बलः प्रतीयते । न वा चित्रगुश-ब्दाच्चित्रगवीनां समीपवर्ती इत्यादिः प्रतीयते । अत एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे । किम्बहुना ब्राह्मणस्य कम्बलश्चित्रा गौर्यस्येति व्यस्तप्रयोगोऽपि तत्रानिष्टः । द्वितीयेऽपि संयोगान्तलोपो दुर्लभः । यत्नः प्रतिविधारम्भात् । तत्प्रत्याख्यानपक्षेऽपि झलो झलीति झल्ग्रहणमपकृष्य झलः संयोगान्तलोपविधानाच्च । किञ्च पदार्थबोधं विना वाक्यार्थबोधासम्भवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः । अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः । सहविवक्षाया ऽसम्भवात् । तस्मात्सूत्राद्वृत्तिरेव न्याय्येत्याहुः । तत्र सामीप्यस्य षष्ठ्यर्थत्वे षष्ठीति च समासविधायके सति कः क्लेश इति तावच्चिन्तनीयम् । न च सामीप्यस्य षष्ठ्याऽबोधात्तत्र षष्ठ्यभावः क्लेशः । गङ्गायास्तीरमित्यादौ षष्ठ्या सामीप्यप्रतीतेः । समर्थसूत्रे च देवदत्तस्य गुरुपुत्र इत्यत्र सापेक्षत्वात्समासाभावमाशङ्क्य प्रधानस्य पुत्रस्य देवदत्तसम्बन्धसापेक्षत्वं न तु गुरोरित्युत्तरिते बाधकत्वेनोपन्यस्तस्य तथा सति गुरुपुत्रो देवदत्तस्य किञ्चिदिति बुध्येतेति भाष्यस्य कैयटेन सामीप्यादेरपि प्रतिपत्तिप्रसङ्ग इतिव्याख्यानात् । षष्ठी स्थानेयोगेति सूत्रे ऽसंभूरस्तेः

स्यादेऽनन्तरे समीपे इति सामीप्यस्यापि षष्ठ्यर्थत्वेन भाष्योदाहरणाच्च । एतेन व्यस्तप्रयोगस्यानिष्टत्वं प्रत्युक्तम् । कथं तर्हि ब्राह्मणस्य कम्बल इत्यादौ न ब्राह्मणसमीपवर्त्यन्यदीयकम्बलप्रतीतिः । तत्र तात्पर्यज्ञानाभावात् । सति च तस्मिन्निष्टापत्तेः । न च सामीप्यषष्ठ्या समासाभावोऽनन्तरादिषु समासाभावस्याकरसिद्धत्वादिति क्लेश इति वाच्यम् । अनन्तरादिषु बहुव्रीहेरेवानभिधानेनाभावात् । एतच्चतस्य लोप इति सूत्रे कैयटे मतुप्सूत्रे च भाष्ये स्पष्टम् । अत एव गङ्गातीरमिति षष्ठीसमासप्रयोगः सर्वजनसिद्धः । यच्च संयोगान्तलोपो दुर्लभ इति । तन्न यणः प्रतिषेधारम्भात् । न वा झलो लोपात् । बहिरङ्गलक्षणत्वादेति लाघवोपष्टब्धस्य बहिरङ्गपक्षस्य च परमुपन्यासेन प्राबल्यानुमानात् । प्रकृते च बहिरङ्गत्वाभावात् संयोगान्तलोपे बाधकाभावात् । अत एवात्र सूत्रे लकारश्चेति वक्तव्यमिति न विभक्तौ सूत्रस्य च लुप्तनिर्द्दिष्टो यकार इति भाष्य कैयटेन संयोगान्तलोपपरत्वेन व्याख्यातम् । अत एव उरण्सूत्रे अण्ग्रहणप्रयोजनकथनावसरे आनङोऽपि रपरत्वं स्यादित्यर्थकं होतापोताराविति भाष्यमुपादाय रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यादिति कैयटः सङ्गच्छते । अत एव कर्मवत्सूत्रे व्यत्ययो बहुलं

लिङ्याशिष्यङिति अकारेखपञ्च द्वितीयलकारं प्रश्लिष्य तस्य संयोगान्तलोप इत्युक्तं सङ्गच्छते। यदपि द्वन्द्वो दुर्लभ. सहविवक्षाया असम्भवादिति। तत्रेदमालोचनीयम्। पाणिनिना स्वसङ्केतितानामणादिशब्दानां सङ्केतलघुनोपायेन बोद्धारः प्रतिपद्यन्तामित्यादिरन्त्येनेति सूत्रं प्रणीतम्। तत्रानेन सूत्रेण लस्येत्संज्ञायां हल्पदसङ्केतग्रहस्तस्मिंश्च सति अनेनेत्संज्ञाग्रह इति बोद्धॄन् प्रति अन्योन्याश्रयो न वक्तारं प्रति विवक्षा च वक्तुः सा चास्मात् पदादमुमर्थमयं जानात्वितीच्छा तथा चादिरन्त्येनेति सूत्रव्यापारात् प्रागपि हल्पदसङ्केतविषयानर्थान् पाणिनिर्जानात्येवेति कथं सह विवक्षाया असम्भवः। न चैवमपि द्वन्द्वघटकहल्पदार्थज्ञानाभावात् द्वन्द्वार्थज्ञानाभावे द्वन्द्वार्थशाब्दबोधोऽपि कथं बोद्धॄणामिति वाच्यम्। तथापि सहविवक्षासम्भवस्यानुपपादनात्। द्वन्द्वघटकहल्पदार्थज्ञानात् पूर्वं लकारेत्संज्ञाने हल्पदार्थप्रसिद्धौ क्रमेण द्वन्द्वार्थबोधसंभवाच्च। न हि समासघटकैकपदार्थाज्ञाने तद्घटकपदार्थान्तरस्यापि न शाब्दबोध इति नियमः। मुखनयनं पश्येत्युक्तौ मुखपदार्थमजानतोऽपि नयनं पश्येति प्रतितेरानुभविकत्वात्। न च सह विवक्षाया द्वन्द्वविधानात् सहितबोधस्यैव वक्तृतात्पर्यविषयत्वेन कथं

केवललकारबोधः पूर्वमिति वाच्यम् । शाब्द-सामान्ये तात्पर्यज्ञानस्याकारणत्वेन तदविषयेऽपि केवललकारबोधे बाधकाभावात् । कारणत्वेऽप्येकदेश-तात्पर्यज्ञानात् प्रथमबोधेन हल्पदार्थप्रसिद्धौ चरमं ता-त्पर्यविषयबोधसम्भवात् । न हि यादृशं वक्तुस्तात्पर्यं तादृशतात्पर्यबोधमादायैव दोषपरिहार इति नियमः । अत एव हल्प्रत्याहारसिद्धेः प्राक् संयोगसञ्ज्ञाया असि-द्धौ कथं संयोगान्तलोप इत्याशङ्कायां हलोऽनन्तरा इति सूत्रे हल्प्रत्याहारसिद्धेः प्रागनन्तरा हकारलकाराः संयोग इति वाक्यार्थबोधानन्तरं लकारपदस्य संयोगस-ञ्ज्ञायां तदन्तलोपेन लकारस्येत्सञ्ज्ञायां हल्प्रत्याहा-रसिद्धौ वास्तवार्थबोध इति कैश्चित् समाहितम् । आश-ङ्का चेयमतिस्थूलदृशः । न हि संयोगान्तलोपलक्षणानु-सन्धानाभावे लुप्तलकारार्थतदनुकार्यलकारानुसन्धानं न सम्भवति । लौकिकव्युत्पत्त्यैव तत्संभवात् । अन्यथा क्विब्लोपलक्षणमजानतोऽग्निचिदित्यतः क्विबर्थबोधो न स्यात् । कथमन्यथा सुप्प्रत्याहारसापेक्षलक्षणवि-हितो द्वन्द्वो हल्पदाद्वृत्तिपक्षे षष्ठीतत्पुरुषस्य तव मते सङ्गच्छेत । प्रकृते लकारबोधपूर्वकद्वन्द्वार्थबोधतात्पर्यक-ल्पने बाधकाभावाच्चेत्यलम् । एवञ्चान्योन्याश्रयपरिहा-राय हलन्त्यमिति सूत्रमावर्त्य वाक्यद्वयं प्रकल्प्य हल्सूत्रे-

ऽन्यमित्यर्थकेनैकेन वाक्येन लकारेत्सञ्ज्ञायां हल्स-ञ्ज्ञासिद्धौ द्वितीयं वाक्यं णकारादीनामित्सञ्ज्ञार्थमिति तेषामुक्तिर्गौरवपराहतेति प्रक्रियाकौमुदीप्रकाश एव स्फुटमिति ॥

## उपदेशे ।

उपदेश इति करणे बाहुलकाल्ल्युडभावे घञिति भाष्यकारादयः । अनाद्योच्चारणमुपदेशः । भावे घञ् । भाष्यादिषु करणे घञिति तु प्रौढिवाद इति केचित् । तन्न । भाष्यकारैः करणघञन्तस्योपदेशशब्दस्य लोकेऽपि साधुत्वस्वीकारात् । तदनुरोधेन करणे घञोऽवश्यस्वीकर्तव्यत्वात् । न च सौत्रस्यैवोपदेशशब्दस्य साधुत्वं भाष्यसम्मतं न तु लौकिकस्यापीति वाच्यम् । तथा सति सौत्रत्वेन परिहारसम्भवे कृत्यल्युटो बहुलमिति बाहुलकस्वीकारानुपपत्तेः। सर्वार्थत्वे बाहुलकस्य सम्भवति सौत्रमात्रविषयकत्वेन सङ्कोचे मानाभावाच्च । अत एव एओङ्सूत्रे सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणमिति वार्त्तिके उपदेशशब्द उपदेशप्रयोजने करणव्युत्पत्त्या प्रयुक्तः। कौस्तुभे स्वयं व्याख्यातश्चेति । यत्तु प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिः परास्ता । परत्वेन ल्युडा

शप्रत्ययस्य बाधादिति तन्न । बाहुलकेन ल्युडभावेन करणेऽपि प्रक्रियेति रूपसिद्धिः । न चात्र बाहुलकस्वीकारे मानाभावः । कृञः श चेति सूत्रे हरदत्तेन यदा भावकर्मणोः शस्तदा सार्वधातुके यक् रिङ्शयग्लिङ्क्ष्विति रिङादेशः । अन्यत्र श एव परतो रिङादेश इत्यभिधानात् करणे शस्य स्वीकारात् । न च भावे अकर्तरि च कारके इत्यनुवृत्त्या कृञः श चेति सूत्रेण सिद्धस्य करणाधिकरणयोर्ल्युटा बाधेऽपि संप्रदानापादानयोर्हरदत्तोक्तिविषयत्वमिति वाच्यम् । भीमादयोऽपादान इति सूत्रे ताभ्यामन्यत्रोणादय इति पर्युदासे प्राप्त इति काशिकोक्तेः भीमादिगणपठितभ्रष्टिप्रस्कन्दनादेरपि क्तिन्नादेः पर्युदासः प्राप्त इत्यवगम्यते । तेन ताभ्यामन्यत्रेत्यत्र उणादिशब्देन तर्तीयिकतृतीयचतुर्थचरणोक्तप्रत्यया गृह्यन्ते न तु पञ्चपाद्युक्ता एवेत्यवगमात्तृतीयचरणोक्तस्यासंप्रदानापादानयोरप्राप्तेरिति । न च कृत्यल्युट इति सूत्रे कृत्यस्थाने कृद्ग्रहणस्य वार्तिककृतोक्तेर्बाहुलकात् संप्रदानादावेव शः कुतो नेति वाच्यम् । सौत्रस्य कृत्यल्युटमात्रविषयकबाहुलकस्य प्रथमोपस्थितेस्तमादाय ल्युडभावस्यैव करणे स्वीकर्तुमुचितत्वात् । विनिगमकाभावेनाप्युक्तरीत्या करणे शस्योचितत्वाच्च । यत्तु यत्तु धातुसूत्रेत्यादि पठन्ति यच्च

व्याचक्षते करणव्युत्पत्त्या पूर्वार्द्धोपात्तानामुपदेशत्वं कर्मव्युत्पत्त्या त्वागमादीनाम्। उणादिलिङ्गानुशासनयोः सूत्रत्वात् सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन। एवं गणत्वादेव सिद्धे धातोरपीत्यादि। अत्रेदं वक्तव्यम्। किमेषामुपदेशसञ्ज्ञा उत योगमात्रम्। नाद्यः। सञ्ज्ञायाः शास्त्रकारैरनुक्तेः। असञ्ज्ञात्वात् घप्रत्ययो नेति भाष्योक्तेश्च। किञ्च न धातुलोप इति सूत्रे धातुग्रहणं किं लूञ् लविता पूञ् पवितेति भाष्यमुपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येवं परः कैयटग्रन्थश्च विरुध्येत। अपि च घ्वसोरेद्धाविति सूत्रे लोपश्चेति द्विशकारको निर्देशः। द्वितीयः शकार इदिति अलोन्त्यात्सूत्रस्थभाष्यकैयटादिकमपि विरुध्येत। [न द्वितीयः। योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात्। धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च। उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यहलित्यर्थ इति स्वग्रन्थविरोधाच्चेति वदन्ति। तत्रोच्यते। उपदेशशब्दस्य करणघञन्तस्य शिष्यसौकर्यार्थं केषाञ्चिदर्थानां धात्वित्यादिनोदाहरणमात्रं न तु परिगणनम्। तेन श्रोत्रियन्नादिनकारादीनामित्संज्ञा सिद्धा। हलन्त्यमित्यत्रास्यैवोपदेशशब्दस्यानुवृत्तेः। न च धात्वाद्युदाह-

रणप्रयोजनं दुर्लभं धात्वादीनामनुबन्धरहितानामेव धात्वादित्वात्। उपदेशकाल एवानुबन्धानामित्वेन लोपात्। अत एव न धातुलोपसूत्रस्थभाष्यकैय्यटयोरविरोध इति वाच्यम्। अत्र धात्वादिपदेनानुबन्धसहितानां धातुपाठपठितानां ग्रहणात्। तेषामेवोपदेशत्वात्। तैरेव हि प्रयोगस्था धात्वादय उपदिश्यन्ते। अत एव हलन्त्यसूत्रे धात्वादीनामन्त्यं हलित्यर्थकभाष्यस्थधातुपदमप्येवम्परत्वेन व्याख्येयमिति न काऽप्यनुपपत्तिः। यत्तु व्याख्यातृग्रन्थदूषणं धात्वादिष्वित्यादि सोऽयमनुक्तोपालम्भः। तत्र हि न पूर्वोदाहृतधात्वादिष्वेव करणव्युत्पत्तिकथनं किन्त्वागमादावपि। अत एव करणसाधनव्युत्पत्त्याऽज्ञातस्वरूपज्ञापनपराणां शास्त्रवाक्यानामुपदेशत्वमिति। शास्त्रवाक्यानां शास्त्रसम्बन्धिवचनानामिति कुशादिवचनसाधारणमुक्तम्। सर्वानुदाहृत्य एते च कर्मव्युत्पत्त्योपदेशा इति कथने एतच्छब्देन सर्वेषां धात्वादीनामुपादानम्। चकार. कर्मव्युत्पत्त्येत्यत्र सम्बन्धेन करणव्युत्पत्तेः समुच्चायक इति सर्वत्र व्युत्पत्तिद्वयस्य तदभिप्रेतत्वात्। उपदेशताप्रयोजकेत्यस्योपदेशतापर्याप्त्यधिकरणतावच्छेदके-त्यर्थ.। अत एवोपदेशत्वं यावति पर्याप्तं तत्रैत्युपदेश इति व्याख्यायोपदेशतेत्यादिसमुदितवाक्यार्थ उक्त इति

स्वग्रन्थविरोधोऽप्यपास्त इति दिक्। यत्तु प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणेति क्लिष्टं व्याख्यानमिति तन्न। भावाकर्तृकारकविहितस्याङो लाघवाद्भावे शक्तिरन्यत्र लक्षणेति तद्व्याख्यानभावात् क्लेशाभावात्। न हि तस्मिन्नर्थे विधानमात्रेण तत्र शक्तिः क्लृप्तोगषष्ठ्याः कर्तृकर्मणोर्विधानेऽपि प्रचुरप्रयोगेण सम्बन्धमात्रशक्तायाः कर्तृकर्मणोर्लक्षणास्वीकारादिति। यत्र। यत्तु अमन्ताड्ड इति। अमि अमन्तेष्वनिडेक इष्यत इति च अम् वार्त्तिककृता व्यवहृत इत्याहुस्तद्भ्रमाभिधानम्। आद्यस्योणादिसूत्रत्वात्। द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वादित्याहुः। तन्न। अम् वार्त्तिककृता व्यवहृत इति तैरनभिधानात्। चय् अम् वार्त्तिककृदिष्ट्या न तु सूत्रकृत्संमत इति हि तेषामभिधानम्। तत्र वार्त्तिककृद्व्याघ्रभूत्युणादिकृतोरप्युपलक्षणम्। सूत्रं चाष्टाध्यायीस्थं तत्करणञ्च विशेषणम्। तेनोणादेः सूत्रत्वेऽपि अष्टाध्यायीकर्तृकणादिकर्तृत्वेऽपि न क्षतिः। तथा चाष्टाध्यायीव्यवहृतानामेकचत्वारिंशत्वाभिधानमिति फलितमिति दिक्॥

## तुल्यास्य।

स्थाननिरूपणे अमङणनानां नासिका चेति केचित्।

तन्न । तेषां नासिकास्थानत्वे मानाभावात् । अनुस्वार-यमाना नासिकास्थानमुच्यत इति पाणिनिशिक्षायां यमानुस्वारयोरेव ग्रहणात् । नासिकाव्यापारमात्रेण तत्स्थानत्वेऽनुनासिकाकारादीनामपि नासिकास्थानत्वं प्रसज्येतेति तदकथने न्यूनता । किञ्चैवं सति तुल्या-स्यमित्यत्र किञ्चित्स्थानसाम्ये आश्रीयमाणे ञमङणा-नाना स्पृष्टप्रयत्नानां परस्परं सावर्ण्यं स्यात् । तथा च त्वन्नयसीत्यादावनुस्वारस्य परसवर्णो वा पदान्तस्ये-त्यनुस्वारान्तरतमा ङकारादयोऽपि स्युः । सर्वस्थानसा-म्याश्रयणे कङादीनामपि सावर्ण्यं न स्यादिति त्वङ्क-रोषित्यादौ ङकाराद्यप्रसङ्ग इति । न च सवर्णस-ञ्ज्ञायां तुल्यास्यप्रयत्नत्वमन्यूनास्यप्रयत्नत्वम् । तथा च यद्यस्यान्यूनास्यप्रयत्नं तत्तस्य सवर्णमिति सवर्णस-ञ्ज्ञासूत्रार्थः । एवञ्च ङकारादीना नकारन्यूनस्थानत्वा-त्त्वन्नयसीत्यादौ नातिप्रसङ्गः । ककाराद्यन्यूनस्थानत्वाच्च त्वङ्करोषीत्यादौ नाप्रसङ्गः । परस्परान्यूनस्थानप्रयत्न-त्वस्य सवर्णसञ्ज्ञायामनपेक्षणात् ककारादीनां ङकारा-द्यन्यूनस्थानत्वाभावेऽपि क्षतिविरहादिति वाच्यम् । एवं सति वकारस्य लकारसावर्ण्यं स्यादिति तोर्लीत्यत्र लकारस्याण्त्वेन वकारग्रहणप्रसक्तौ तद्वांस्त्वत्यादौ तव-र्गस्य वकारसवर्णापत्तेः । रलो व्युपधादित्यत्र रल्निवि-

ष्टलकारेण वग्रहणाद्दिदेविषतीत्यत्रापि सनः किन्त्वा-
पत्तेः । तंल्लोकमित्यादावनुस्वारस्य ययीत्यनुस्वारस्य
लसवर्णानुनासिकवकारापत्तेश्च । न च शिक्षायां
दन्तोष्ठस्य द्वन्द्वेन निर्देशात् समुदितस्य वकारस्थानत्वं
न तु प्रत्येकमिति दन्तस्थानत्वाभावाद्वस्य न लसावर्ण्यं
ङकारस्य तु पृथक्कण्ठनासिकास्थानत्वं निर्दिष्टमिति
कण्ठस्थानाद्भवति कसावर्ण्यम् । अत एव धात्वादे-
रिति सूत्रे ऽज्दन्त्यपरा इत्यत्र ष्विदादयः पृथङ्निर्दिष्टाः ।
अन्यथा दन्त्यपरसादित्वेन तेषामपि संग्रहेण तेन पृथङ्नि-
र्दिश्येरन्निति वाच्यम् । तथा सत्यदुह्वहीत्यत्र लुग्वा दुहेति
क्सलुको वुवूर्षत इत्यत्र उदोष्ठ्यपूर्वस्येत्युकारस्य चाना-
पत्तेः । अज्दन्त्यपरा इत्यत्र च दन्त्यग्रहणेन वकारो
न गृह्येतेत्याशङ्का स्यादिति ष्विदादयो भेदेन निर्दि-
ष्टा इति कैयटेनाशङ्कामात्रविषयत्वेन पृथङ्निर्देशस्या-
भिधानादिति । अन्यैरपि पृथक् ष्विदादिग्रहणादिह
दन्त्यशब्दः केवलदन्त्यपरत्वेन ष्विदादिनां नेत्यभिद-
धद्भिरन्यत्र दन्त्यग्रहणे वकारग्रहणं सूचितम् । किञ्च ।
कुण्ड रथेनेत्यत्रानुस्वारस्य परसवर्णाभावायानुस्वारस्य
ययीत्यत्र जातिपक्षमाश्रित्य स्थानेऽन्तरतमपरिभाषयैक-
वाक्यतया ऽनुस्वारान्तरतमः परसवर्णो भवतीति वा-
क्यार्थं आश्रितः । तथा च ञादीनां नासिकास्थानत्वे

तेषामेवानुस्वारान्तरतमत्वेन त्वङ्करोषीत्यादावनुस्वारस्य ङादिसिद्धावपि संवत्सर इत्यादौ वकारो न सिध्येदिति ॥

## पूर्वत्रासिद्धम् ।

अत्र सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्धमिति प्रक्रियोक्तौ मनोरथ इत्यादि न सिध्येदिति केचित् । तन्न । प्रक्रियोक्तेर्हि कार्यं प्रति कार्ये कर्तव्ये ऽसिद्धं पूर्वमेव न जातमित्यर्थः । शास्त्रासिद्धत्वेऽप्ययमेव फलितोऽर्थः । तदुक्तं कैय्यटेन । यच्छास्त्रमुच्चारितं तस्यासिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनातिदेश आश्रीयत इति । तथा चातिदेशेन कार्याप्रवर्तकस्वरूपोऽसिद्धधर्मः शास्त्रे ऽतिदिश्यमानः कार्यासिद्धत्व एव फलति । एवं च मनोरथ इत्यत्रोत्वे कर्तव्ये रुलोपस्य पूर्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथसिद्धिरप्रत्यूहेति । ऋलृवर्णयोरित्यत्र ऋ च ऋ च ऋलौ तौ च तौ वर्णौ चेति कैश्चिद्विगृहीतम् । तत्र ऋलोरन्तरङ्गत्वेन प्रथमतो दीर्घत्वे राविति स्यात् । ऋत्यक इति प्रकृतिभावे ऋष्ट्र-लाविति स्यादिति रलावित्यनुक्तिसम्भवमिति । न च वार्णादाङ्गं बलीय इति पूर्वमृतो ङीति गुणस्ततो यणि रलाविति सेत्स्यतीति वाच्यम् । आङ्गवार्णयोर्युगपत्

प्रवृत्तौ स्वाङ्गं बलवद्यथा कारक इति। प्रकृते च विभ-
क्त्युत्पत्तेः पूर्वं गुणप्रवृत्तावन्तरङ्गत्वात् सवर्णदीर्घप्र-
वृत्तौ बाधकाभावात्। न चान्तरङ्गपरिभाषाबाधिकया
ऽकृतव्यूहपरिभाषया गुणप्रवृत्तौ दीर्घाप्रवृत्तिरिति
वाच्यम्। यत्र बहिरङ्गेणान्तरङ्गस्य निमित्तविघातो
न त्वन्तरङ्गेण बहिरङ्गस्य तत्राकृतव्यूहपरिभाषाप्रवर्त-
नात्। पेचुष इति यथा। प्रकृते चान्तरङ्गेण दीर्घेण
बहिरङ्गस्य गुणस्य ह्रस्वऋकाररूपनिमित्तविघातेनाकृ-
तव्यूहपरिभाषाया अप्रवर्तनात्। किञ्चेदृशस्थलेऽन्तरङ्गेण
बहिरङ्गनिमित्तविघातेऽपि अकृतव्यूहपरिभाषा न प्रव-
र्तत इत्यवश्यमभ्युपेतव्यम्। अन्यथा जनसनेति विटि
विड्वनोरिति नकारस्याकारे ऽन्तरङ्गत्वात् सवर्णदीर्घे
आतो धातोरित्याकारलोप इति प्रक्रियया पशुष इत्या-
दि न सिध्येत्। अतो लोपे भाविनि सवर्णदीर्घस्यान्त-
रङ्गस्याप्रवृत्तेः। अभ्युपगतञ्च पशुष इति रूपमसिद्धव-
त्सूत्रे भाष्ये इति चिन्त्यम्। अथ ऋल्क अस्यामेवावस्थायां
ऋत्यक इति प्रवृत्तावपि ऋतो ङीति गुणे ऋत्परत्वाभा-
वात् प्रकृतिभावाभावे यणा यथोक्तसिद्धिः। न चेकोसवर्णे
इति प्रकृतिभावः। समासे तन्निषेधात्। वैकल्पिक-
त्वेन पक्षे तस्याप्रवृत्तेश्चेति चेन्न। अचः परस्मिन्निति
गुणस्य स्थानिवद्भावेन ऋत्परत्वात् प्रकृतिभावतादव-

वक्ष्यमाणत्वात् । न च पदान्तविधिः कार्यान्तराभावपर्यवसायिनः प्रकृतिभावस्य पदानवयवत्वात् । यदपि उञ्ञो-ल् च रलोरिति विग्रहीतम् । तदपि चिन्त्यम् । ओसो क्ङितोऽङीति गुणानिमित्तत्वादिति दिक् ॥

इति सञ्ज्ञाप्रकरणम् ।

# इको गुणवृद्धी ।

इह भाष्याद्यनुक्तोऽपि नियमपक्षः सुसाधस्तच्छेषपक्षाद्विशिष्टश्चेति निरूपितं प्रक्रियाप्रदीपे ऽस्माभिः । तथाहि एतत्परिभाषाया अलोऽन्त्यशेषत्वे मिदेर्गुणः पुगन्तलघूपधस्य च मृजेर्वृद्धिरित्यादौ दोषमुद्भाव्य मिदइर्मिदिः पुक्यन्तः पुगन्तः लध्वी उपधा लघूपधा ततः समाहारद्वन्द्वः । मृजेर्वृद्धिरित्यत्राचोऽञ्णितीत्यत्र इत्यपकृष्यत इति प्रकृतिपरिभाषानुपस्थानेऽपि स्थान्युपादानादेवेष्टस्थानिलाभो भाष्यकृतैवोक्तो नियमपक्षेऽप्युन्नेयः । किन्त्वेवं सति क्ङिति चेत्यत्र लैगवायनादावतिप्रसङ्गाभावाय चस्येत्यर्थकत्वेन इक इति विहितयोर्गुणवृद्ध्योर्निषेधः इत्यर्थाल्लघूपधगुणस्येक इत्यविहितत्वाद्भिन्न इत्यादौ निषेधायोगात्तच्छेषपक्षे गुणो दुर्वारो नियमपक्षे तु रुणद्धीत्यादावनिकोऽपि लघ्व्या उपधायाः सत्वात् तत्प्रवृत्ताविक इति नियमितो लघूपधगुण इति

तन्निषेधः सुलभ इति। एतेन नियमपक्षमनूद्य तच्छेष-पक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वात् तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिरिति परेषां रिक्तं वच इत्यवगन्तव्यम् ॥

## मिदचोऽन्त्यात्—।

अत्र सूत्रेऽन्त्यादचः परो मिदिति प्राचोक्तावत्तौ चाच इति निर्द्धारणे षष्ठी न तु पञ्चमी जातौ चैकवचनम्। तथा चाचां मध्येऽन्त्यादित्यर्थः। तेनाच इति वृत्तावन्त्यादिति समानाधिकरणा पञ्चमीत्यभिमानेन श्रीसुवादीनामित्यादावव्याप्त्यभिधानं प्रत्युक्तम्। यत्त्वभक्तत्वे नपूणीत्यत्र दीर्घो न स्यादित्यनूद्य तत्तदादिग्रहणं स्यादिनुमर्थमिति वार्त्तिकेनैव दूषितप्रायमिति व्याख्यातृवचनदूषणम्। तन्न परादित्वे वहंलिह इत्यादावनुस्वारादि न स्यादत एवाभक्तत्वपक्षोऽप्युपेक्ष्यः। नपूणीत्यादावनान्तत्वादङ्गस्य दीर्घाप्रसङ्गश्चेति व्याख्यातृग्रन्थस्तत्र च परादित्वदूषणेनाप्युपपत्तेरुक्तदोषनिरासादिति। यत्त्वादेः परस्येति सूत्रं विवृण्वता प्राचा पञ्चमीनिर्देशेनेत्याद्युक्तं तदसम्बद्धमिति केचित्। तन्न परत्वानुवादेन यस्य यत् कार्यं तत्तस्यादेरित्येव सूत्रार्थः परत्वानुवादश्चोत्परस्यात इत्येतद्विषयो न। तन्नात इति

स्थानिनिर्देशात्। किन्तु तस्मादित्युत्तरस्येति परिभाषो-पस्थितोत्तरत्वविषय इति स्पष्टप्रतिपत्तये पञ्चमीनिर्देशे-नेत्यादि प्राचो वचनं कथमसम्बद्धमिति तच्चिन्त्यम्॥

इति परिभाषाप्रकरणम्।

## इको यणचि।

यत्तु इक्यणोर्यथासंख्यत्वाभावोपपादनाय षट्ष-ष्टिरिको यणः सप्त भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रह-णादिति। तत्र गुणानामभेदकत्वपक्षे कथं सप्तत्वे अनुनासिकयवलग्रहणं हेतुरिति चिन्त्यम्। इग्य-णोर्यथासङ्ख्यत्वोपपादनं यथासङ्ख्यसूत्रोपन्यासप्रयो-जनमिगादीनां दीर्घाद्युपस्थानोपायस्य प्रक्रियाप्रदीपा-दवसेय इति॥

## अनचि च।

अत्र वा द्वे इत्यनुवृत्त्यैव सिद्धे त्रिप्रभृतिष्विति त्रिसूत्री व्यर्थेति केचित्। तत्र दीर्घादाचार्याणामि-त्यस्य नित्यत्वात् कथं वैयर्थ्यम्। न चाचार्यग्रहणेनास्य वैकल्पिकत्वम्। तस्य पूजार्थत्वात्। अत एव नादिनी-त्यत्रानचिचेति अरोचीत्यत्राचो रहाभ्यमिति प्राप्तिः काशिकायामुक्ता। त्रिप्रभृतिष्विति सूत्रद्वये द्वित्वप्राप्ति-

मनुद्भाव्य दीर्घादाचार्याणामित्यत्र अनचि चेति प्राप्ति-
र्हरदत्तेनोद्भाविता । तस्य न्यायमाश्रय उन्नीयते ।
त्रिप्रभृतिष्विति सूत्रद्वयं वैकल्पिकनिषेधविधायकम् ।
तत्र प्राप्त्युद्भावन नावश्यकम् । विकल्पस्याप्राप्तिविषय-
स्यापि सम्भवात् । नित्यनिषेधे तु तदुद्भावनमावश्यक-
मिति । एवञ्च त्रिप्रभृतिष्विति सूत्रमावश्यकम् । अन्य-
था राष्ट्रमित्यादौ दीर्घात् परस्य द्वित्वं न स्यात् । न
चास्त इत्यत्र माधवेन द्वित्वकरणात् कथमिदमिति वा-
च्यम् । तस्य माधवग्रन्थस्यात एव प्रकाशे दूषितत्वात् ।
आत्वा रथमित्यत्र प्रातिशाख्यभाष्ये द्वित्वप्रवर्तन च
छान्दसत्वेन निर्वाह्यम् । वाक्क् वाक् इत्यत्र भाष्योदा-
हृतद्वित्वनिर्वाहस्य दीर्घादाचार्याणामित्यत्रानचीत्य-
स्य हलीत्यर्थकस्यानुवृत्तेरित्यादि प्रक्रियाकौमुदीप्रका-
शादवसेयम् । एतेन दीर्घादाचार्याणामिति सूत्रे
आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्यो-
दाहृतविकल्पे उपपत्तिचिन्तायैं क्लेशो मुधैव । पूजार्थं-
तायाः प्रामाणिकैरनुक्तेरित्यादि परास्तम् । यत्तु स्थानि-
वत्सूत्रे धात्वङ्गेत्याद्युदाहरणाव्ययस्याङ्गपदाभ्यां पृथगुप-
न्यासवैयर्थ्यंदूषणोपन्यसनं तत् कौस्तुभे स्वयमेव गोब-
लीवर्दन्यासेन समाहितत्वादनादेयम् ॥

यत्तु यस्त्वाहुर्वार्त्तिककृतो वचनं प्रत्याख्यानप्रकारद्व-
यन्तु भाष्यकृत इति तन्निर्मूलम्। मतभेदे प्रमाणाभावा-
दिति। तन्न। भाष्ये तु संयोगान्तलोपे धुरो लोटो ना-
स्तीति समर्थितमिति कातन्त्रपरिशिष्टोक्तेरेव मानत्वा-
त्। धुडिति हि सत्युच्यते। यदपि काव्यं कलत्रं शाल्वं
चाचक्षाणः काव् कलत् शाल् अधबित्यनूद्य तत्र सयो-
गान्तलोपो दुर्लभः। आद्यपक्षद्वयैकरूप्यार्थं पूर्वपूर्वम-
न्तरङ्गं परं परं बहिरङ्गमित्यल्ल पणिलोपयोरसिद्धत्वात्।
वान्तयोः क्विपि क्वौ विधिं प्रत्यस्थानित्वादूठो दुर्वार-
त्वात् णिचि लोपो व्योरित्यस्य प्रसङ्गाच्च। गिरिवेश्म-
यतेस्तु क्विपि यणः प्रतिषेधार्थं वचनारम्भपक्षे गिरि-
वेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति। तदप्य-
सत्। स्कन्दयतेः स्कन्नित्यादि न पदान्तसूत्रस्थकैयटे-
र्न कुस्मयतेः कूरिति बहिरङ्गापक्षाभिप्रायेण माधवेन
च स्वग्रन्थेन विरोधात् पूर्वपूर्वमित्यादु्यो्योर्हतत्वात्।
णिचि काव्यशब्दाण्णिचि संयोगान्तलोपस्यासिद्धत्वाद्यलो-
पेऽलोपादेः स्थानिवत्त्वाभावेऽपि शाल्वशब्दे तदभावा-
ल्लोपो व्योरित्यस्यासम्भवाच्च। अत एव काव्यशाल्वशब्द-
यो र्वैषम्यात् तदत्र किमत्त्वमिति चिन्त्यमिति प्रकाशकृ-

द्भिरुक्तम्। वस्तुतो हलन्त्यमिति सूत्रोक्तभाष्यादिबलात् स्वयं गिरिवेडित्यत्र फलभेदस्वीकारेण च नेह पचाणामैकरूप्यमित्युक्तालोगाश्रयणन्निर्मूलमेवेत्यास्तां तावत्। सुध्युपास्य इत्यत्र पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वेऽनुभयद्वित्वे च नव इति प्रक्रियाकौमुद्यां प्रकाशकृद्भिर्धस्य जश्त्वे दस्य द्वित्वं धस्यैव वेत्युक्त्वाऽन्ते धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे अनुभयद्वित्वे च नव रूपाणि । तथा हि । एकधं त्रिधा । एकयं द्वियं त्रियं च । एवं द्विधं त्रिधं चेति। न चान्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम् । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादित्युक्तम्। अत्र केचित्। एकस्यां व्यक्तावेकं लक्षणं सकृदेव प्रवर्तत इति एकः पूर्वपरयोरिति सूत्रे भाष्ये सिद्धान्तितत्वात् कथं पुनर्द्वित्वप्रवृत्तिरन्यथा द्वित्वानन्त्यापत्तेः । न च झरो झरीति हलो यमामिति च लोपेन निर्वाहस्तस्य वैकल्पिकत्वात्। किन्त्वेवं सति सर्वस्य द्वे इति द्वित्वमपि पुनः पुनः प्रवर्तेत । अत एव लिटि धातोरिति सूत्रे ऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम्। सन्नन्ताद्यङन्ताद्वा णिचि चङि द्वित्वाभावार्थं तदिति कैयटादिभिरुक्तम्। तत्र प्रकाशोक्तप्रथमपक्षे तावन्न दोषः।

पूर्वत्रासिद्धमद्वित्व इति जशोऽसिद्धत्वाभावाज्जशि कृते दकारस्य द्वित्वमिति व्यक्तिभेदात् पुनर्द्वित्वप्रवृत्तेः। अत एव संयन्तेत्यादौ परसवर्णयकारद्वित्वे भाष्यकृता षट् सन्त इत्यत्र टकारद्वित्वं रामादित्यत्र जश्त्वे वाऽवसान इति चर्त्वे द्वित्वे च रूपचतुष्टयं भवतीदाहृतम्। तत्सिद्धये च पूर्वत्रासिद्धीयमद्वित्व इत्युपन्यस्तम्। असिद्धत्वमभ्युपेत्य प्रवृत्तद्वित्वपक्षे ऽष्टाष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनत्वे स्थान्यादेशव्यक्त्योश्च भेदाद्दकारादिद्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावात्। एकः पूर्वपरयोरिति सूत्रे भाष्ये सकृत्प्रवृत्त्यभिधानं चानवधाननिबन्धनम्। तथाधानादिशास्त्रदृष्टान्तेन क्वचिदेवैकस्मिन् प्रयोगे अनुष्ठापकत्वं स्यान्न प्रयोगान्तर इत्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिप्रवृत्तेरेव सिद्धान्तितत्वान्न तु सकृच्छास्त्रप्रवृत्तेः। आनन्त्यापत्तिरपि प्रकृते न दोषः। स ह्यनन्तकार्यसहितप्रयोगस्याशक्यत्वाच्छास्त्रकर्त्तव्यस्य परिनिष्ठितप्रयोगस्याभावात्तच्छास्त्रस्यानुष्ठापकत्वापत्त्या दोषः। प्रकृते च सा नास्ति द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात्। लिटि धातोरिति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवात् प्रथमप्रवृत्तावेव विश्रा-

न्तिकल्पनाद्व्यासग्रहणं प्रत्याख्यातम्। अत एव सर्वस्य द्वे इत्यस्यापि न पुनः प्रवृत्तिः सकृत्प्रवृत्तेन द्वित्वेनाभीष्टार्थे बोधाच्च। अत एव परेर्वर्जन इति वैकल्पिकस्याऽपि न पुनः प्रवृत्तिः। अयमत्र निष्कर्षः। लक्षणस्य पुनः प्रवृत्त्यप्रवृत्त्योर्व्यक्तिभेदाभेदावतन्त्रे किन्तु सकृल्लक्षणे प्रवृत्ते निमित्ताभावात् पुनरप्रवृत्तिः। क्वचिदानन्त्यात् क्वचिल्लक्ष्यानुरोधेन वक्ष्यादौ प्रथमपुरुषबहुवचनादिशास्त्रसंकोचस्यैव तत्र तत्र लक्षणस्यासकृत्प्रवृत्तिरिति सङ्कोचस्य च कल्पनात्। यथा सुध्युपास्य इत्यादाविको यणचीत्यादेः पुनरप्रवृत्तिः। रमाया इत्यादौ याट्शास्त्रादेः। अवोढुमित्यत्र ढत्वादीनामसिद्धत्वाद्धलन्तवृद्धौ ढादौ सहिवहोरित्योकारे च कृते प्रसक्तस्याऽपि हलन्तवृद्धिशास्त्रस्य। प्रकृते तूत्सर्गतः प्रवृत्तस्य द्वित्वशास्त्रस्य पुनः प्रवृत्तौ न किञ्चिद्बाधकम्। अत एवाऽसिद्धवत्सूत्रे युटो यणि सिद्धत्वविधायकवार्त्तिकप्रत्याख्यानाय युड्विधानसामर्थ्यं वर्णयितुं न व्यञ्जनपरस्यैकस्यानेकस्य वा श्रुतौ विशेषोऽस्तीति भाष्यकृतोक्तेः। श्रुतिभेदपक्षेऽपि यणो मय इति द्विर्वचनाद्धलो यमामिति पक्षे यलोपविधानात् पक्षे यकारद्वयं भवत्येवेति नार्थो युटेति। तद्विधानसामर्थ्याद्यण्न भवतीति कैयटः। इदञ्च द्वित्वस्य पुनः प्रवृत्तावेव सङ्ग-

च्छति । अन्यथा युट्पक्षे द्वित्वे त्रियकारं रूपं तदभावे द्वियकारमिति कथं श्रुतिभेदपक्षे युड्विधानसामर्थ्यं पुनः प्रवृत्तौ तु युडभावेपि पुनर्द्वित्वप्रवृत्त्या त्रियकारमिति सामर्थ्यसङ्गतिरिति । प्रकाशे नवत्वोक्तिस्तु मूलकृदुदाहृतद्वित्वद्वयानुसारेणेति कृतं पल्लवितेन । यच्च । यदप्युक्तं त्रैपादिक इत्यादि । तदपि न । नार्कुटो नार्पत्य इत्यत्र विसर्गनिवारणाय रुढेरसिद्धत्वस्य भाष्ये स्पष्टत्वादिति । तन्न । नार्कुट इत्यादौ विसर्गनिवृत्तेर्बहिरङ्गपरिभाषानिराकरणपूर्वकं वचनेनैव सिद्धिरिति पाक्षिकभाष्यार्थस्य कैय्यटेन करणात्तत्पक्षेणास्य ग्रन्थस्योपपत्तेः । त्रैपादिक इत्यस्य क्वाचित्कत्रैपादिकपरत्वेन बहिरङ्गत्वेन यणः प्रतिषेध इत्यस्य प्रत्याख्यानस्य सुवचत्वादिति । यत्तु दृषार्द्धिरित्यत्र त्रिधादिरूपवचनं रुद्धेर्धकारस्य द्वित्वमिति । तद् झलाञ्जशीति जशोऽप्रतिहतप्रसरत्वादुक्तन्यायेन जशः सिद्धत्वाच्चायुक्तम् ॥

## झरो झरि—।

यत्तु प्राचो विकल्पानुवृत्तेरनुक्तेर्न्यूनतेति तन्न । मूलन्यूनतापरिहाराय तद्व्याख्यानेऽन्यतरस्यामित्यनुवर्तितत्वात् । कथमन्यथा गुरोरनृत इत्यत्र

देवदत्त इत्यत्र भवदुदाहरणे व्याख्याने ऽस्य एहीत्यादि-
पूरणेऽपि मूले वाक्यानुदाहरणान्न न्यूनता। एवमेव दूरा-
द्धूते चेति सूत्रे प्राचोक्तं कृष्ण एहीत्युदाहरणमपि प्रसी-
देत्यादिपूरणेन व्याख्येयम्। यच्च यदपि व्याख्यातृभिः शरो-
ऽचीति ज्ञापकमुपन्यस्य तत्संवादार्थं भाष्यमुपन्यस्तम्। अ-
नुवर्तते हि विभाषा शरोऽचि यद् वारयत्ययं द्वित्वमिति
तन्न। तदुत्तरभाष्ये एवोक्तज्ञापकस्य दूषितत्वात्। लोपस्य
हि नित्यत्वेऽचोरहाभ्यामिति द्वित्वं लोपापवादः स्यात्
तथा च शरोऽचीत्यस्य सार्थक्यं स्पष्टमेवेत्यादि। तत्र ज्ञा-
पकमुपन्यस्येत्यनुक्तोपालम्भः। इत्थं हि तेषां ग्रन्थः।
विकल्पेनायं लोप इति काशिकादौ स्थितम्। तथा
च भाष्यम्। अनुवर्तत इत्यादि। तथा च लोपस्य वैक-
ल्पिकत्व एव भाष्यसंवादस्तेषामभिप्रेतो न तु शरो-
ऽचीत्यस्य ज्ञापकत्वेऽपि तद्वाक्यनिविष्टत्वेन परं तल्लेखः।
अत एव कैयटोऽपि लोपो विकल्पेनेत्याहेति लोपस्य
वैकल्पिकत्वमात्राय एव कैयटसंवादस्तैरुपन्यस्तः।
यत्तु द्वित्वविधानाद्द्वावेव शिष्यत इत्यत्र लोपस्य वैक-
ल्पिकत्वेन द्वित्वस्य चरितार्थत्वादिति दूषणं तत् तदाश-
यानवबोधात्। अचो रहाभ्यामिति द्वित्वे द्वयोः श्रवणं
न स्याल्लोपेनैकस्यापहारादित्याशङ्कायां द्वित्वविधाना-
दिति ग्रन्थस्तदर्थश्च द्वित्वविधानसामर्थ्याल्लोपस्य वैक-

ल्पिकत्वात् पर्च्चं द्वयोः श्रवणमिति द्वित्वविधानं लोपस्य वैकल्पिकत्वज्ञानद्वारा द्वयोरेव श्रेषे हेतुरिति तदाशय इति । प्राट्छोढो । अत्र क्रान्तस्पोटशब्दस्यार्थवतो ग्रहणं ज्ञापकमर्थवद्ग्रहणेनानर्थकस्येत्यन्नेति सीरदेवः । यत्तु नन्वेतदयुक्तम् । फणादिना राजिना साहचर्यात्तस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेन्न । विभ्राट् विभ्रागिति हि रूपद्वयं साध्यम् । तच्च व्रश्चादिसूत्रे राज इति पठित्वाऽपि सुसाधमेकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात् । भ्राजभासेति विकल्पस्यात्मनेपदमात्रफलकताया वक्ष्यमाणत्वेन तत्स्थानेऽकारस्य सुपठत्वाच्चेति । तत्राशङ्का तावदतिनिर्दला । अर्थवद्ग्रहणपरिभाषाभावे व्रश्चेति सूत्रेऽफणादिभ्राज्येकादेशस्यापि राजेः सत्वेन फणादेरेव ग्रहणमिति नियामकाभावेन तत्साहचर्येण फणादिभ्राजिग्रहणार्थं भ्राजिग्रहणमित्यस्यानाशङ्क्यत्वात् । भ्राजेः फणादेरेव ग्रहणमिति नियमे ऽपि राजिग्रहणे फणादेर्ग्रहणासम्भवेन किन्तद्व्यावृत्तये राजिसाहचर्येण फणादेरेव भ्राजेर्ग्रहणार्थं भ्राजिग्रहणेनेति । राजिसाहचर्यात् फणादेर्ग्रहणमित्याकरग्रन्थास्त्वर्थग्रहणपरिभाषायां स्थितायामिति न तद्विरोधः । एवं च सूत्रधातुन्यासभङ्गेन समाधानमपि निष्फल-

म्। किंच राज् इति सानुबन्धकनिर्देशे यङ्लुकि राराष्टीत्यादौ षत्वं न स्यात्। किञ्चैवं भ्राजेर्ग्रहणं न स्यादकारस्य समुदायानुबन्धत्वादिति दिक्। यदप्युपसर्गेणैव धातोराक्षेपे सिद्धे इति प्रतीकमुपादाय तद्धेतुत्वेन व्याख्यायां यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्तत्वादित्युपन्यसनं तदपि मुधा। उपसर्गाः क्रियायोग इति यथाश्रुतसूत्रादेव धातोराक्षेपसम्भवात्।

## एङि पररूपम्।

अत्र प्रेजतीति मूलोदाहरणमभिप्रेत्य एज् कम्पन इति प्रकाशः। कम्पनार्थस्यैजतेः परस्मैपदत्वादिति बोध्यम्। एवे च। अनियोगोऽवधारणभिन्ने सम्भावने तथा च॥

अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्॥

इति श्लोकवार्त्तिकमिति प्रकाशः। तत्र वृत्तौ भवं वार्त्तिकम्। अध्यात्मादित्वाट्ठञ् बोध्यम्। तेन वार्त्तिकोक्ती रभसादिति केषाञ्चिदुक्तिः सैव रभसिकीति ध्येयम्। यत्तु शकन्ध्वादिष्वित्यत्र टिसञ्ज्ञासूत्रोदाहरणम्। तट्टिसञ्ज्ञाप्रयुक्तकार्याभावादनुचितम्।

अत्वतः किं दकारान्ते मा भूदिति प्राचोक्त-प्रश्नोत्तरयोर्निरालम्बनत्वमिति । तत्रात इति न ह्रस्वाकारनिर्देशः । अतो गुण इत्यत एव तदनुवृ-त्तेरस्यानर्थक्यापत्तेः । नाम्रेडितस्येति ज्ञापकाच्च । ता-दृकारनिर्देशे आम्रेडितनिषेधोऽकारस्य स एवान्त्य इति विकल्पोऽपि तस्यैव स्यादिति निषेधविकल्पयो-रेकविषयत्वापत्तिरिति तकारान्तनिर्देशो वाच्यः । तच्च प्रतिपत्तिलाघवायाद इत्येव निर्देश्यमुदाहरणे च झलां जशोऽन्त इति जशि कृतेऽदःसम्भवात् । रोरु-त्वन्यायेन च जशोऽसिद्धत्वाभावादिति प्रश्नाशयः । उत्त-रस्य जश्त्वं विना अदकारान्तमनुकरणं तत्र मा भूदित्यर्थः । एवं च तत्र पररूपस्य चरितार्थत्वाद्रोरुत्वन्या-याभावेन जशोऽसिद्धत्वात्तकारान्ते न स्यादिति द्रष्ट-व्यम् । तपरस्तत्कालस्येत्यत्र दकारप्रश्लेषपक्षे त्वद इति निर्देशेऽपि ह्रस्वाकारपरत्वसम्भवात्तन्निवृत्तये उक्तयु-क्त्यनुसन्धानावश्यकत्वे प्रतिपत्तिलाघवस्याभाव इत्यपि द्रष्टव्यमिति कथं प्रश्नोत्तरयोर्निरालम्बनत्वमिति । यदपि यत्तु व्याचख्युः । अतो गुण इत्यतोऽत इत्यनुवर्त्य मुन्दाधिकारात् सिद्धमिति प्रश्नः । यदा जश्त्ववशाद्द्वा-

न्तत्वं तदापि स्यात् पुनरद्ग्रहणे तु तान्तत्वस्य विवक्षणा-न्नेत्युत्तरमिति। तच्चिन्त्यम्। जश्त्वशास्त्रस्यासिद्धत्वेन पर-रूपस्यैव प्रवृत्तेः। नाम्रेडितस्येति निषेधे पटत्पटदिती-त्युदाहरणस्यासम्बद्धत्वापत्तेश्च। तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति दान्तत्वादिति तदपि न। जश्त्वशास्त्र-स्यासिद्धत्वेऽपि पुनरद्ग्रहणेन जश्त्वाविषयतात्पर्येण पररूपाप्राप्तेः। अत एव व्याख्यातृभिरत इत्यनुवृत्तेऽपि यदा अच्छब्दस्य जश्त्ववशाद्दान्तत्वं तदापि स्याज्जश्त्व-स्यासिद्धत्वाद्व्रत्ययमच्छब्द इति प्राप्नोति। पुनरद्ग्रह-णेन त्वत इत्यस्य विशेषणात्तान्तत्वविवक्षार्थान्न भवि-ष्यतीत्युक्तम्। तत्र दान्तत्वमित्यस्य सम्भाव्यत इति शेषः। अन्यथा दान्तत्वे जश्त्वासिद्धत्वोक्तिरसंभाविनी स्यात्। तान्तत्वस्य विवक्षार्थादित्यस्य जश्त्वाविषय-विवक्षार्थादित्यर्थः। अन्यथा पुनरद्ग्रहणाभावेऽपि तान्तत्वविवक्षासम्भवात् पुनरद्ग्रहणेन तु इत्यसम्बद्धं स्यात्। अत एव हरदत्तोऽपि पटदितीत्यत्र पररूपमा-शङ्क्य काशिकायामभिहितं दकारान्तानुकरणमेत-दिति प्रतीकमुपादाय तकारान्तानुकरणे रूपमेवैतन्न स्यादपदत्वे जश्त्वाभावाद्यथा पटिति करोतीत्याह। पटत्पटदित्यन्त्यपररूपविकल्पेऽभावोदाहरणम्। तत्र द्वितीयाद्ग्रहणासंबन्धइत्यस्य व्याख्यातृभिरेवोक्तत्वात्।

अन्यपररूपनिषेधोदाहरणात्तु पटत्पटेतीति नाम्रेडि-
तेति दूषणस्याप्ययुक्तत्वात्। अत्रैकाचो नेत्यस्य अदि-
तीति कथमुदाहरणमिति तु चिन्त्यम्॥

## अकः—।

अत्राकोऽकि दीर्घ इत्येव सुवचमिति केचित्। यथा-
संख्यसम्बन्धेनैवासवर्णव्यावृत्तिरिति तेषां भावः। तच्चि-
न्त्यम्। तथा सति ऋति ऋ वेत्यादिवार्त्तिके स्वयमुप-
न्यस्ते दधि ऋकार इत्यादावतिप्रसङ्गवारणायाधिकस्य
सवर्णग्रहणस्य सूत्रे चाकीत्यस्य करणेऽतिगौरवात्॥

## सर्वत्र विभाषा गोः।

## अवङ् स्फोटायन—।

अत्र हे चित्रगो इत्यादाववङ्प्रकृतिभावयोरभावाय
स्थानिवत्त्वनिषेधस्वीकारावश्यकत्वात् तेनैव चित्रग्वग्र-
मित्यादावपि तयोरप्रवृत्तौ यत् केश्चिदेङ इति तद-
र्थमनुवर्तितं तन्निष्फलम्। न चैङनुवृत्तौ लाक्षणिकत्वा-
च्चित्रगो इत्येङस्तयोरप्रवृत्तौ स्थानिवत्त्वनिषेधो नावश्य-
क इति वाच्यम्। आदेच इत्यत्र चेतेत्यादिलाक्षणिकस्यै-
चो वारणफलकस्योपदेशग्रहणस्य वर्णग्रहणे लक्ष-
णप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापकत्वात्। अ-

न्यथा चक्रे इत्यादिप्रतिपदोक्त एवैङः पदान्तादित्या-
दि प्रवर्तेत न हरे इत्यादौ। अन्यत्र स्वयमपि तथा-
भ्युपगमाच्च। न च गो. पूर्वत्व इति वार्त्तिके पूर्वरूप
एव स्थानिवद्भावनिषेधस्योक्तत्वेन पूर्वरूपमेवानिष्टमि-
ति प्रतीयते न त्ववङ्प्रकृतिभावाविति कथं तयोर-
प्रवृत्तये स्थानिवत्त्वनिषेध आवश्यक इति वाच्यम्।
एवमप्येङनुवृत्तिप्रयोजनानुक्तेः। चित्रग्वग्रमिति वार्त्ति-
कोदाहरणे भाष्योक्ते एङः पदान्तादतीति पूर्वरूपस्या-
ल्विधित्वेन तत्प्रवृत्तये वार्त्तिकस्यासम्भवनीयत्वेन तत्पू-
र्वरूपपदस्य पूर्वरूपबाधकावङ्प्रकृतिभावपरत्वाच्च। न
चैवमपि सर्वत्र विभाषेति सूत्रस्यैव भाष्ये उदाहरणात्
प्रकृतिभावपरत्वे ऽपि पूर्वरूपस्यावङ्परत्वे किं मान-
मिति कुतोऽवङोऽनिष्टत्वमिति वाच्यम्। एवम-
प्येङनुवृत्तेर्निष्फलत्वस्यापरिहारात्। न चावङ्सूत्रे
ऽवक्तव्यः स्वरसिद्ध्यर्थमिति वार्त्तिककृता गवाग्र-
मिति बहुव्रीहौ गोशब्दौकारस्योदात्तस्यावङ् कदा-
चिदन्तो दात्तोऽपि स्यादित्यगागमोऽवङ्समानरूपबा-
धक उक्तः भाष्ये च तत्प्रत्याख्यानायाद्युदात्तोऽवङ् निपा-
त्यत इत्युक्तम्। एवं च चित्रग्वग्रमित्यत्रावङो रूपभे-
दात् स्वरसिद्धिमात्रस्यागुक्तिप्रयोजनोक्तिः कथं वा-
र्त्तिककृतः सङ्गच्छताम्। कथं चाद्युदात्तनिपातनमात्रेण

तत्प्रत्याख्यानं भाष्यकृत इति तत्रावङोऽनिष्टत्वात्तन्निष्ट-त्तये ऽवङ्विधाने एङनुवृत्तिः। चित्रगोऽग्रमित्यत्र त्ववङ इष्टत्वे किं बाधकमिति नावङि स्थानिवत्त्वनिषेध इति वाच्यम्। आद्युदात्तनिपातने हि अक्समानस्वरः साध्यः स चावङ्स्वीकारे न सिध्यति। अक्यामन्त्रितस्वरेणाद्यु-दात्तत्वादवङि गकाराकारस्य सति शिष्टोदात्तत्वादिति स्वरभेदात्। न च गवाग्र इत्यादावङ आद्युदात्तत्वस्य श्रवणं मा भूदिति तस्योपदेशिवद्भावो वाच्य इति समासान्तोदात्तादिवामन्त्रिताद्युदात्तादपि प्रागवङ्-स्वरप्रवृत्तौ पश्चादामन्त्रितस्वरे स्वरभेदाभाव इति वाच्य-म्। उपदेशिवद्भावेन हि समकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्तिः क्रियत इति कैयटादिभिर्व्याख्यातत्वात् समासान्तोदात्तत्वेन न बाध्यत इति वामनोक्तेरन्तरङ्गाबाधेनोपपत्तौ तद्बाधकल्पन-स्यान्याय्यत्वाच्च। अन्तरङ्गस्य प्रथमप्राप्तस्यामन्त्रित-स्वरस्यावङः स्वरात् प्राक्प्रवृत्तौ बाधकाभावात्। तस्मा-दुक्तोदाहरणेऽवङ्प्रकृतिभावयोरनिष्टयोरभावः स्थानि-वत्त्वनिषेधेनैव साध्य इति तद्विधाने एङनुवृत्तिर्निष्फ-ला। अत एव माधवेन चित्रग्वग्रमित्यत्र स्थानिवत्त्वा-भावेनैव तयोरप्रवृत्तिरुक्तेत्यलम्। यच्चावङ्सूत्रे पदा-न्ते किं गवीति प्रत्युदाहृत्य गवे इति प्रत्युदाहरण-

प्रयुक्तं पररूपेणाप्येतत्सिद्धेरित्युक्तम् । तत्तदाशयानवबो-
धात् । न हि गवे इति ङयि सिद्धं रूपं तदाशयविष-
यः किन्तु ङावापाद्यम् । तथा च ङौ गवे इति स्यादि-
त्यध्याहारेण प्रत्युदाहरणवाक्यार्थः । गवीति प्रत्युदाहर-
णमपि अत्रावङ् मा भूदिति अध्याहारेणैव योज-
नीयम् । अन्यथा ऽनन्वयात् । प्रायशश्च प्रत्युदाहरण-
वाक्येष्वध्याहारेणैव योजनमित्यलम् । यत्तु सर्वत्र विभा-
षेति प्रकृतिभावमुक्त्वा प्लुतप्रगृह्या इत्यतः पूर्वमथ
प्रकृतिभाव इति वचनम् । तदनवधानात् । दूरा-
द्धूते च गुरोरन्तत एतत्सूत्रद्वये यद्वक्तव्यं तत्कारो
करोति सूत्रे उक्तम् ॥

## ईदूदेत् –।

अत्र द्विवचनान्तं प्रगृह्यमिति प्राचः प्रवाद
इति केचित् । तन्न । द्विवचनमित्येव प्रायशः
पाठात् । अत एव ईदूद्द्विवचनस्य विशेषणं तेन च
तदन्तविधिरित्याह । ईदूदेदन्तमितीति प्रकाशः ।
द्विवचनान्तमिति पाठेऽपि इहान्तशब्दः स्वरूपवाची ।
अन्तं स्वरूपे ना न स्त्री शेषेऽन्तिके त्रिषु इति मेदिनी-
कोशात् । तेन च द्विवचनशब्दस्य कर्मधारयः । तेन
कुमार्योरगारमित्यादावनतिप्रसङ्गात् । सुप्तिङन्तमि-

स्यन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि चरितार्थत्वाभावाच्चेति ॥

ऊं ।

यस्यस्यानुनासिकत्वे यद्येतनं इत्यत्रानुनासिकार्थं कृतं यरोऽनुनासिक इत्यत्रानुनासिकग्रहणं प्रमाणम् । अन्यथा यरो यमि यम्वेत्येवावक्ष्यदिति । तन्न । एवं हि निर्देशे यथासंख्यप्रतीतौ एतन्मुरारित्यत्रानुनासिको न स्यात् । अत्र हि जातिपक्षाश्रयणस्यावश्यकत्वेनैतन्नयनमित्यादौ चरितार्थोऽयं चतुर्मुख इत्यादाविवेहापि न प्रवर्तते । अनितेः क्विपि सम्बुद्धौ आन् चिनोति इत्यत्र नश्छव्यीति रुत्वे अत्रानुनासिक इति पूर्वस्यानुनासिके यद्येतनांश्चिनोतीत्यत्रानुनासिको नस्याच्चेति ॥

मय उञः-।

मयः परादिति पञ्चम्यन्तस्योञ्विशेषणत्वे उञ इति षष्ठ्यभावादुञः स्थानित्वदुर्घटत्वादिति केचित् । तन्न । मय गताविति धातोः प्रत्याहारस्य च मयः सम्भवात् प्रकृते कतरो मय् गृह्यत इत्यतो मविशेषणत्वेन परादित्यस्य प्राचां कथनात् ।

पं पकारं राति ददाति ग्राहयतीति तदर्थात् प्रत्याहारग्रहणमिति प्राचो भावादुञ् इत्यस्य षष्ठ्यन्तत्वे बाधकाभावात् । प्रत्याहारग्रहणे हेतुश्च बहुविषयसंग्रह इति दिक् ॥

## इत्यच्सन्धिः ।

## यरोऽनु-।

यत्तु यत्तु प्राचा मयटि नित्यं पठितं यच्च हलन्तप्रकरणे षण्मां षड्णामित्युदाहृतम् । यच्च यरोऽनुनासिक इति वानुनासिक इति व्याख्यातं तत्सर्वं प्रत्यये भाषायां नित्यमिति भाष्यविरोधादुपेक्ष्यमिति केचित् । तन्न । मयटीत्यस्य प्रत्ययमात्रोपलक्षणत्वात् । षड्णामिति स्थितिप्रदर्शनम् । परिनिष्ठितं च षण्मामिति व्याख्यातत्वात् । एवंच वानुनासिक इति प्राचो व्याख्यानं चिन्त्यमिति प्रकाशकृद्भिरेवोक्तमिति प्राचोक्तौ तद्व्याख्यातुरुक्तौ च न कश्चित् क्षुद्रोपद्रवः। अत्र यचि भं तसौ मत्वर्थ इति संहितापाठे तसाविति तात् पूर्वं दकारं प्रश्लिष्य भत्वेन ककुद्मन्त इत्यत्र नानुनासिक इति समादधुः। यत्तु दकारप्रश्लेषे ऋनुमाग्नित्यादावतिप्रसङ्ग इति तत्तुच्छम् । अय इति

मतुपो मस्य वत्वावश्यंभावान्मन्मानिति रूपस्यैवासिद्धेः ॥

## उदः स्थास्त—।

सकारस्य पूर्वसवर्णस्तकार इति हरदत्तमाधवादयः। यद्यपि महाप्राणत्वघटितान्तर्यवांस्थकार इहोचितस्तथाप्युदः परस्य स्कन्देः सस्य पूर्वसवर्णविधायकस्य रोरेवेति वार्त्तिकस्योत्कन्दो रोग इति भाष्यस्योदाहरणे थकारास्यवणान्महाप्राणत्वाघटितमान्तर्यमिह पूर्वसवर्णनियामकमिति सामान्यतो ज्ञाप्यत इति तेषां भावः। उक्तोदाहरणे थकारश्रवणं सन्दिग्धं ज्ञापकञ्चोत्कन्द इत्युदाहरणविशेषमात्रविषयकमिति वादिनाम्मते तु सस्य थ इति मतं हरदत्तादिभिरन्येत्वित्यनेनोपन्यस्तमिति। एवञ्च सकारस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ता इति निरस्तम्। यदपि चयो द्वितीयाः शरीत्यस्योपन्यसनं तदतिरभसादिति। तन्न। अन्ये तु द्वियकारं रूपमाहुरित्युक्ता न चैतदप्रामाणिकम्। चयो द्वितीयाः शरि पौष्करसादेरिति सत्वे थकारश्रुतेरवर्जनीयत्वादिति हि प्रकाशकृद्भिरुपन्यस्तम्। तत्र राभस्ये पूर्वसवर्णतकारस्यासिद्धत्वं शर्परत्वाभावो वा हेतुः स्यात् स च न सम्भ-

वति । उदस्तकारस्य थकारः पूर्वसवर्णतकारस्य च झरो झरीति लोप इति द्विथकारकं रूपमिति तद-भिप्रायात् । न चोदस्तस्य चर्त्वभूतस्य थकारं प्रत्य-सिद्धत्वं चयो द्वितीया इत्यस्य काशिकायां भवतु-स्त्वित्युदाहरणस्योदाहृतत्वेन थं प्रति चर्त्वस्य नमुने इत्य-सिद्धत्वाभावात् । नादिन्याक्रोशे इत्यत ऊर्ध्वमुद इत्यतः पूर्वं चयो द्वितीया इत्यस्य भाष्ये पाठात्तस्य च काशिकोदाहरणोपष्टम्भाच्च उत्तरद्वैशत्वकल्पनाच्चेति ॥

## शश्छोऽटि ।

तत् शिव इत्यत्र जश्त्वे कृते इति प्रक्रियाकौमुदी क्विबन्ततनोतिनिष्पन्नताच्छब्दपरत्वेन प्रकाशे व्या-ख्याता तेन न दान्तस्य जश्त्वोपन्यासवैयर्थ्यदोषः । न चैवमपि चर्त्वमुपन्यस्य श्चुत्वोपन्यासो विरुद्धः । श्चुत्वं प्रति चर्त्वस्यासिद्धत्वादिति केचित् । तन्न । तथोप-न्यासे चर्त्वश्चुत्वक्रमस्याविवक्षितत्वात् । कथमन्यथा भवतोऽपि छत्वमुपन्यस्य श्चुत्वचर्त्वोपन्यासः सङ्गच्छता-म् । श्चुत्वमोमन्यन्त इत्युक्त्या अगतिकगतिकस्येहाप्या-श्रयणे प्रमाणाभाव इत्यस्वरसः प्रकाशित इति न कश्चित् क्षुद्रोपद्रवः ॥

## ङः सि धुट् ।

धुटस्तत्वेन तकारः । यत्तु तस्य चयो द्वितीया इति पक्षे थ इति तन्न । चर्त्वस्यासिद्धत्वादिति केचित् । तन्न । उदः स्थेत्यत्रोक्तदूषणग्रस्तत्वात् । अत एव धुटि कृते चर्त्वं तस्य पूर्ववत् पक्षे थ इति हरदत्तः । अत एव प्रक्रियालाघवार्थं तुक्येव विधेये धुट्करणं वैचित्र्यार्थमिति प्रकाशोक्तं सङ्गच्छते । न सङ्गच्छते च तत्र चयो द्वितीया इति पक्षे थकारापत्तिदूषणं धुट्पक्षे थकारस्येष्टत्वात् । असङ्गतं च धुडभावपक्षे षट् सन्त इत्यत्र टस्य ठो नेति । तत्रापि पक्षे ठस्येष्टत्वादिति ॥

## नश्च ।

नकारात् परस्य सस्य धुड् वेत्याचार्याः । यत्तु अधिकृतपदविशेषणं न इतीति तदन्तविधिना नकारान्तादिति विवरणम् । तत्र पदानुवृत्तौ प्रयोजनं चिन्त्यम् । यदि तु ङमो ह्रस्वादित्यादौ तदनुवृत्त्यनुरोधेनेहापि तदनुवृत्तिरिति तदा ङ्णोः कुक् टुक् शरि ङः सि धुट् इत्यत्रापि तदनुवृत्त्यावश्यकत्वे ङकारणकारयोरिति ङात् परस्येति च विवरणानौचित्यात् । कथं तर्हि श्वि तुगित्यत्र नस्य पदान्तस्येति प्रक्रियाकौमुदीति चेत् ।

तत्र पदान्तग्रहणरहितपाठस्यैव प्रायशो दर्शनात् क्वाचित्कतथापाठेऽपि अपदान्तनकारस्यानुस्वारेण भाव्यमिति पदान्तस्यैव तुगितिव्युत्पादनमात्रपरत्वेनाधिकृतपदग्रहणाविवरणात् । अत एव नकारान्तस्येति न विवृतम् । नश्चेत्यत्रापि कुतो नैवं व्युत्पादितमिति चेन्न । एकजातीयस्यार्थस्यैकत्र व्युत्पादनेनैवान्यत्र तदवगमात् । न चैवं ममापि नकारान्तादिति व्युत्पादनमिति वाच्यम् । पदाधिकाराभावे न इत्यस्य विशेषणत्वाभावेन तदन्तविवरणासाङ्गत्यं स्यादिति । पदाधिकारलभ्यस्य तदन्तविवरणस्यान्यत्रापि तदन्तोपलक्षणत्वे तु कथंचित् समाधानेऽपि पदादित्यनुक्तेर्न्यूनतेति बोध्यम् ॥

## शि तुक् ।

अत्र तुकः पूर्वान्तत्वात् कुर्वन्च्छेते इत्यत्र पदान्तस्येति णत्वनिषेधो न स्यादिति पूर्वपक्षे स्तोः श्चुना श्चुरित्यत्र स्तोः श्चुनेति योगविभागे णो नेत्यनुवर्त्य श्चुना योगे स्तोर्णत्वनिषेध इति समाधानम् । एवं नश्चेत्यत्र धुटः परादित्वे कुर्वन् सीदतीत्यत्र पदान्तस्येति णत्वनिषेधः प्रयोजनमिति प्राचां ग्रन्थः । तत्र बहिरङ्गपरिभाषया गतार्थमिदमुभयमिति प्रकाशः

कार्यकालपक्षमाश्रित्येति बोध्यम् । यत्तु तत्र त्रैपादि-
केऽन्तरङ्गे परिभाषेयं न प्रवर्त्तत इति सुध्युपास्य इत्यु-
दाहरणे स्वोक्त्या सह विरोध इति । तन्न ।
तत्र त्रैपादिक इत्यस्य क्वाचित्कत्रैपादिकपरत्वेन
व्याख्यानेनाविरोधादिति । सञ्छम्भुरित्यत्र ॥

अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥

इति केचित् । तन्न चयो द्वितीया इति छत्व-
विकल्पनाद्रूपद्वयस्य द्विर्बोध्या ॥

## ङमः-।

अत्र लाघवात् । ङमो ह्रस्वादचि द्वे इति
सूत्रयणीयम् । कुर्वन्नास्ते इत्यादौ तु बहिरङ्गस्य
द्वित्वस्यासिद्धत्वेन पदान्तस्येति णत्वनिषेधसंभवात् ।
राज्ञ इत्यादौ त्रैपादिकेऽन्तरङ्गे यथोद्देशपक्षाश्रयणेन
बहिरङ्गपरिभाषाऽप्रवृत्तिस्वीकारेऽपि नार्कुट इत्यादौ
त्रैपादिके विसर्जनीय इवात्र णत्वनिषेधे लाघवानु-
रोधेन कार्यकालपक्षाश्रयणे तत्प्रवृत्तिस्वीकारौचित्या-
दिति प्रकाशकृतः । अत्रेदं तावदवधेयम् । नित्यग्रहणस्य
विस्पष्टार्थत्वेन करणाकरणे न्यासद्वयेऽपि तुल्येऽनभि-
ष्टभागेऽर्धमात्रालाघवायोक्तप्रतिपत्तिगौरवसहनं न सह-

दयचमत्कारकारि । तस्मान्मात्रालाघवाय इ अचि ह्रस्वान्ङम इति सूत्रयणीयम् । यत्तु .परमदण्डिना-वित्यादौ अन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यादिति । तन्न । नुटो नलोपं प्रत्यसिद्धत्वेन नलोपापादनस्यैवोचि-तत्वादिति । अत्रानुनासिकः अनुनासिकात् पर इति सूत्रयो रोः पूर्वस्येति रो. पूर्वस्मादिति चोक्त्वा व्याख्यानेऽपि रुग्रहणस्योपलक्षणत्वमनुक्त्वा समो लोपे केषां-चिदनुनासिकानुस्वारयोरूपमानवधानात् । संपुंकाना-मिति । यत्तु पुंस्कोकिल इत्यादावव्युत्पत्तिपक्षे षत्वप्राप्तौ संपुङ्कानामिति स इति तन्न । पुमुङ्गसोःषत्वप्रतिषेधा-त् । सति हि सत्रचने तेनैव षत्वनिवृत्तौ पुनः षत्वनिषेधो-ऽनर्थकः । तदभावे तु तस्यावश्यकत्वादिति । न चैव-मपि पुंस्त्वमित्यादौ ह्रस्वात्तादौ तद्धित इति षत्वनिवृ-त्त्यर्थमयं सकारः स्यादिति वाच्यम् । कृतेऽपि सकारे तस्य विसर्गः । डुकःत्यनुरोधेन विसर्जनीयस्थानिकत्वात् विसर्जनीयस्थानिकस्येदुदुपधस्येति षस्य निवृत्तावपि रुत्वादिति सस्थानिकस्यानिवृत्तेः । का तर्हि पुंस्त्वमि-त्यादौ षत्वाभावाय गतिरिति चेदियम् । इदुदुप-धस्येत्यत्र पुमुङ्गसोः प्रतिषेध इति वचने पुंग्रहणं नैतत्षत्वनिवृत्त्यर्थं सकारविधानादेव तन्निवृत्तेः सिद्ध-त्वादिति. ह्रस्वादिति.षत्वनिवृत्त्यर्थं तस्मात् पुंस्त्वमि-

त्यादौ वाचनिकी षत्वनिवृत्तिरिति । इदमेवाभिसन्धाय ह्रस्वात्तादाविति सूत्रे पुंसःप्रतिषेधः पुंस्त्वं पुंस्तेति हरदत्तो व्याजहार। तस्य भाव इति सूत्रे पुंस्त्वमिति भाष्योदाहरणन्तु न षत्वाभावज्ञापकम्। अनुस्वारपक्षे इस्वात् परत्वाभावेन षत्वाभावे तदुदाहरणसंभवात् । वस्तुतस्तु समादीनां रोर्विसर्जनीयस्य वा सविधानापेक्षया तेषां साक्षात्सविधानमुचितम्। तच्चैवं समः सुटीत्यत्र सकारान्तरप्रश्लेषात् समः सकारो विधीयते स एव पुमः खय्यीत्यत्रानुवर्त्तते कानाम्रेडित इत्यत्र च मण्डूकप्लुत्येति। न चैवं कानः सस्य रुप्रकरणबहिर्भावात्ततः पूर्वस्य कथमनुनासिकादि । अनुनासिकानुस्वारयोस्तावत्पर्यन्तमधिकृतत्वात्। एवं सति कान एव रोः सवचनारम्भेऽपि संपुमोर्वचनानर्थक्याच्च कांस्कानित्यस्य कस्कादित्वे तु तदर्थमपि न सवचनारम्भ इति ॥

## पुमः—।

इह व्याघातौ नेति केचिदिति प्रक्रियाग्रन्थो यथानिर्बाधस्तथा तत्प्रदीपादवधेयम् ॥

## कुप्वोः—।

यत्तु प्राचा विकल्प इत्युक्तम्। तन्न । ≍क≍पाभ्यां-

मुक्ते सत्वप्रसङ्गादिति । सोऽयमनुक्तोपालम्भः । ख्यादि-सर्ग इत्येव पाठात् क्वाचित्के तथा पाठे ऽपि चानुकृष्टे विसर्गे ≍क≍पयोर्विकल्पः फलतीत्यर्थः ॥

## कस्का—।

≍क≍ पयोरपवाद इति केषांचिद् ग्रन्थे विसर्जनीयस्य चेति शेषः । न च कस्कादेराकृतिगणत्वात् संस्कर्त्रित्यस्यापि कस्कादित्वादेव सत्वं कुतो नेति वाच्यम् । वचनेन कस्कादित्वकल्पनेन वा सकारकरणे विशेषाभावात् । संस्कर्त्रित्याद्यर्थं समः सवचनस्यावश्यकत्वाच्चेत्यवधेयम् ॥

## इति हल्सन्धिः।

यत्तु सोऽपदादाविति सूत्रेऽपदाद्योः कुप्वोरितिमूलप्रतीकमुपादायोक्तं सूत्रे तु व्यत्ययेनैकवचनम् । यदि तु खर्विशेष्यते ऽपदादौ खरीति तदा यथाश्रुतं साधु । किन्तु खरीति मण्डूकप्लुत्याऽनुवर्त्यमिति क्लेश इति । तन्न । खरीत्यनुवृत्तावपि कुप्वोरिति न समानाधिकरणं भिन्नवचनत्वादिति षष्ठ्यन्तं वाच्यम् । षष्ठ्यर्थश्चान्तर्गतत्वं तथा च कुप्वन्तर्गतेऽपदादौ खरीत्यर्थः फलितस्तथा च खरीत्यननुवृत्तावपि का क्षतिर्यतो मण्डूकप्लुतिक्लेशः स्यात् । एवं खर्विशेष्यतेऽपदादौ खरीत्युत्प्रेक्ष-

णमप्यनुचितमिति चिन्त्यम्। अत एव कुप्वोः ≍क≍पौ चेति सूत्रे कुप्वोरिति षष्ठी व्याख्याताचार्यैः। सप्तम्या हि सत्यामपदादावित्यत्र व्यत्ययाश्रयणापत्तेरिति। इदुदुपधस्य चाप्रत्ययस्येति प्रत्ययस्य यो विसर्जनीयो न भवतीत्याकरः। अप्रत्ययस्येति समानाधिकरणं विसर्जनीयविशेषणमित्यन्ये। तन्न। सर्पिष्करोतीत्यत्रेसुसोःसामर्थ्ये इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्रेदुदुपधस्येति नित्यषत्वप्रसङ्गात्। न चेष्टापत्तिः। आकरमते उणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिति वाच्यम्। व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्। इसुसोरित्यत्र सर्पिष्करोतीत्युदाहरणेन व्युत्पत्तिपक्षस्यैवात्राकरस्वीकृतत्वानुमानात्। अन्यथेदुदुपधस्येति षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थ इति स्वग्रन्थविरोध.। अपि च इणः ष इति सूत्रे सर्पिष्पाश्वामित्याद्युदाहरणासङ्गतेः। इदुदुपधस्येत्यनेनैव षत्वसिद्धेरित्यलम्॥

## इति विसर्गसन्धिः॥



## ससजुषो रुः ।

अत्र पदस्येति वर्त्तते तच्च सेन विशेष्यते । तेन येन विधिरिति तदन्तग्रहणात् सान्तस्य पदस्येत्यर्थः । ततोऽलोन्त्यपरिभाषया सान्तस्य पदान्तस्येत्यर्थः । सजुषा तु पदविशेषणे ग्रहणवतेति तदन्तग्रहणनिषेधात् । सजुष्शब्दस्य पदस्येत्यर्थः स्यात् । तथा सति परमसजूरित्यादौ रुर्न स्यादिति परस्परानन्वितमेव पदस्येति । सजुष इति च स्थानषष्ठ्यन्तम् । तच्चालोन्त्यपरिभाषया स्वस्वान्त्यपरम् । तच्च सान्तपदान्तस्य रुविधिसामर्थ्यात् परस्परमभेदेनान्वितम् । एतदर्थक एव सजुष्शब्दो यत् पदमिति तादात्म्यं च इति प्रकाशः तच्च सजुष्शब्दस्य पदशब्दस्य च स्वस्वान्त्यपरत्वात् । तथा च पदान्तस्य सजुषन्तस्य च रुः स्यादिति फलित व्याचष्टे । पदान्तस्येति । सजुषशब्दस्य चेति । षस्येत्यपेच्यत इति प्रकाशः । यत्तु सजुषा पदं विशेष्यते सजुषन्तं यत् पदं तस्य च रुः स चालोन्त्यस्य । न च ग्रहणवतेति तदन्तविधिनिषेधः । प्रत्ययविधिविषयकोऽयं निषेध इति दिव उत्सूत्रे कैय्यटहरदत्ताभ्यामुक्तत्वात् । एवं स्थिते इह सजुष्शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापातत इति । तन्न० । ग्रहणवता प्रातिपदिकेन तदन्तविधिव्यपदेशि-

वद्घावयोः प्रतिषेधः सामान्यविषय इति सीरदेवेन मतान्तरत्वेनोक्तमिति तदभिप्रायकत्वात् प्राचामुक्तेः। दिवउत्सूत्रे कैय्यटोक्त्युपन्यासस्यातिरभसात्। न चैवं दिवउदित्यत्र दिवा समासैकदेशस्य पदस्य विशेषणात् तदन्तविधिर्न स्यात् तथा च विमलद्युरिति न सिध्येदिति वाच्यम्। पारिभाषिकस्यानित्यत्वादिह निषेधाप्रवृत्तेः। अत एव निषेधस्य विशेषविषयत्वेऽपि मेघर्त्तीत्यादिखजादिप्रत्ययविधावपि भयाद्यादिग्रहणमुपपदविशेषणं येनविधिरित्यस्य प्रयोजनत्वेन वार्तिककृतोपन्यस्तम्। अत एव च स्यत्यात् सूत्रे कैय्यटेन शेषोऽस्यसखीति सूत्रे हरदत्तेन चैतदुपन्यस्तमिति दिक्॥

## अतो रो—।

यत्तु अप्लुतादिति विशेषणे तु तत्सामर्थ्यात् प्लुतो नासिद्ध इति केचित्। तन्न। यस्मिन् सति यदर्थवत् तत्तेन ज्ञाप्यते। यथा सुप्तिङन्तमित्यन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति। प्रकृते तु प्लुतस्य सिद्धत्वेऽप्यप्लुतग्रहणमनर्थकमिति कथं तत्तस्य ज्ञापकमिति। अत एव चुरादौ यन्त्र्यादीनामिदित्करणं चुरादिणिज्विकल्पज्ञापकमित्युक्तिर्णिज्विकल्पेऽपीदित्करणवैयर्थ्यापरिहारेण तैरेव निराकृतेत्यालोचनीयम्॥

# भोभगो—।

अशि किम् । देवाः सन्तीत्यत्र यत्वस्यासिद्धत्वाद्विसर्जनीये सत्यपि तस्य स्थानिवत्वाद्यत्वं मा भूत् । न चाल्विधिः रोरितिसमुदायाश्रयणादिति केचित् । तदसत् । रोरित्यतो र इत्यनुवृत्त्याल्विधित्वात् । तस्मादुत्तरत्रानुवृत्त्यर्थं तदित्यस्मत्कृतप्रदीपोक्त एव निष्कर्षो बोध्यः । यदपि यदि तु भोस् भगोस् अघोसिति सान्तं रान्तं वानुकृत्य भो इत्यादीनां त्रयाणामलोन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते तर्ह्यसन्धिर्न्याय्य एव । युक्तञ्चैतत् । अन्यथा विभोरिदं सुप्रभगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः । भवति ह्ययं भोशब्दादिपूर्वो रुः । न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम् । विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकेन निष्पन्नानां भवदादिप्रकृतीनां भोशब्दादीनामपि लाक्षणिकत्वाविशेषात् । अनर्थकत्वमप्युभयत्र तुल्यम् । रुविशिष्टानामेवार्थवत्त्वादिति । तदपि चिन्त्यम् । सान्तानुकरणत्वपक्षे भवदादिप्रकृतिकभोशब्दादीनामसंग्रहादव्याप्तेः । अन्यथा स्वग्रन्थविरोधाच्च । किञ्च निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वात् न तु सम्बुध्यन्ता लाक्षणिकत्वादित्याशङ्का

क्तातरञ्चैतत्। हे भवन्निनितिवत् हे भो इति प्रयोगस्या-
भीष्टत्वात् तस्य च वार्त्तिकारम्भ एव सिद्धेः। स्युः पाट्
प्याडङ्क है हे भो इत्यमरोक्तानां तु सम्बोधनार्थानां
निपातानां सह प्रयोगायोगात्। किञ्च तत्र भवा-
नित्यादिवत् तत्र भो इत्याद्यपि वार्त्तिके सत्येव सिध्यति।
इतराभ्योऽपि दृश्यन्त इति सर्वविभक्त्यन्तात् त्रतसोर्भव-
दादिप्रयोग एवेष्टत्वात्। किञ्चामन्त्रितत्वे पदात् पर-
स्याष्टमिको निघात आमन्त्रितमित्यविद्यमानवद्भावो
वाक्यादेरामन्त्रितस्येति द्विर्भावः सुबामन्त्रित इति परा-
ङ्गवद्भावस्चेत्यादि सिध्यति। भगो अघो इति निपातावपि
यदि प्रामाणिकौ तर्हि स्तां नाम। आमन्त्रितकार्यसिद्धि-
स्तु वार्त्तिकायत्तैव। यत्तु वदन्ति। सकारान्तान्नेवैतान्नि-
पातानाश्रित्याय रुत्वात्वे भाष्ये प्रत्याख्यात इति तदतिरभ-
सादिति। अत्रेदं वक्तव्यम्। मतुवसोरिति सूत्रे हि
विभाषित्यादि वार्त्तिकं व्याख्याय भाष्यकार आह सम्बु-
द्धावित्युच्यते तत्रेदं न सिध्यति। भो ब्राह्मणा इति
तथा विभक्तौ लिङ्गविशिष्टाग्रहणं नेतीह न प्राप्नोति।
भो ब्राह्मणि। नैष दोषः। अव्ययमेष भोःशब्दो नैषा
भवतः प्रकृतिः। कथमव्ययत्वं विभक्तिस्वरप्रतिरूपकाश्च
निपाताः निपातोऽव्ययमित्यव्ययसंज्ञेति। अत्र कैयट-
ट.। विभक्तिस्वरेति केचिदाहुः। भोशब्दस्य विजन्त-

स्य सौ यद्रूपं रेफान्तं तत्प्रतिरूपको निपातः तस्य रेफस्य यत्वे लोपे च भो ब्राह्मणा इत्यादि सिध्यति। भवच्छब्दस्यापि भोः शब्दसिद्धये वार्त्तिकारम्भस्तेनेतराभ्योऽपि दृश्यन्त इति भवदादियोगे विधीयमानास्तसिलादयस्ततो भोस्तत्र भो इत्यत्रापि भवन्ति। एवञ्च भवच्छब्दप्रकृतिकभोःशब्दप्रतिरूपकत्वमेव निपातत्वमाश्रयणीयम्। भवतेर्विजदर्शनादित्यन्य आहुरिति। तन्न। वार्त्तिकानुयायिद्वितीयमते भवच्छब्दस्यापीत्युक्तिसन्दर्भात् विजन्तानुधावनक्लेशाच्चाद्यव्याख्याने वार्त्तिके भवच्छब्दः प्रत्याख्यात इति प्रतीयते। अस्मिन् पक्षे एषा भोशब्दमात्रप्रवृत्तिर्भवच्छब्दस्य न किन्त्वव्ययस्यैवेति भाष्यार्थः। प्रयोजनाभावसहकृतलाघवेन भाष्यस्योक्तार्थत्वौचित्यादिति भावः। अत एवैतन्मतोपमर्दनाय भाष्यविरोधमनुक्त्वा त्रतसिलादिप्रयोजनमेवोक्तं पक्षान्तरे। तत्रैषा भो ब्राह्मणा इत्यादौ भोःशब्दप्रवृत्तिरित्यादि भाष्यार्थः। पक्षद्वयं चेदं वृत्तिपदमञ्जर्योरपि सम्मतम्। एवं च भवच्छब्दप्रत्याख्यानाप्रत्याख्यानपक्षयोर्भाष्यादिसकलग्रन्थसम्मतत्वात् कथं भाष्यस्वरसरीत्या वार्त्तिकमारब्धव्यमेवेत्युक्तम्। कथ वा चादेराकृतिगणत्वात् सान्ता निपाता इत्ययुक्तमिति नोक्तं त्रयाणां निपातत्वस्य तस्याकृतिगणत्वप्रयोज्यत्वस्य च भाष्यकैय्यटाभ्यामनुक्तत्वात्। भौनि-

पातस्य सान्तत्वानुक्तेर्भगोअघोशब्दयोस्तु सुतराम्। भाष्यादौ हि भोशब्दस्यैव विभक्तिप्रतिरूपकत्वात् निपातत्वमुक्तं विभक्त्यन्तं तु द्वितीयपक्षे रेफान्तं न सान्तम्। अत एव भोशब्दस्य विजन्तस्य सौ यद्रूपं रेफान्तं तत्प्रतिरूपको निपात इति कैय्यट आद्यपक्ष उक्तम्। हरदत्तेन च भोभगोअघो इत्येषां निपातत्वमुक्तं न तु सान्तत्वम्। अथ वृत्तिपदमञ्जर्योर्वार्त्तिकप्रत्याख्यानाय त्रयाणां तावच्चादेराकृतिगणत्वात् निपातत्वमुक्तम्। भोभगोअघो पूर्वस्य रोर्यत्वमिति वृत्तिकृद्व्याख्यानुरोधेन सान्तत्व चानुमीयते। अन्यथा भोशब्दादिपूर्वस्य रोरप्रसिद्धेः। वार्त्तिकाङ्गीकारपक्षे तन्निष्पन्नानामेव यत्वापत्तेश्चेति सान्तानां त्रयाणां निपातत्व स्थित तदनुरोधेन भाष्यमप्युपलक्षणादिना तत्परतयैव योज्यमिति मतं तर्हि तथैव वार्त्तिकमप्रत्याख्यानतया कथं न भाष्यं योज्यते। अथ भाष्यस्वारस्याद्युक्तिविधानाच्च न तत्परता इत्येवं कैय्यटोक्तव्याख्ययोर्विभक्तिप्रतिरूपकस्य भोरित्यस्य रेफान्तनिपातस्य रेफस्य यत्वमिति प्रतीतिस्वारस्यात् भोशब्दादिपूर्वस्य रोरित्यर्थस्य स्वयमेव प्रागुक्तप्रतिपादनाच्च कथं त्रयाणा सान्ताना निपातनं युक्तं कथं वा वृत्त्युक्तार्थनिराकरणावसरे सान्तनिपातानुकरणपक्षः स्वयमुक्तः। यदि तु भाष्ये विभक्तिशब्देनोपदिष्ट-

विभक्तेः पुरस्फूर्त्तिकतया तदन्तप्रतिरूपकस्य सान्तस्यैव भोशब्दस्य प्रतीतिरत एव कैय्यटेन रेफान्तस्य निपातत्वं मतान्तरेणोपन्यस्तम्। न च भवतेर्विजदर्शनादुपदिष्टविभक्त्यन्तप्रतिरूपकस्य भोशब्दस्यासम्भव इति वाच्यम्। भवतेर्विजनभिधाने मानाभावात्। शम्भोरित्येकदेशानुकरणस्य वा विभक्त्यन्तस्य प्रतिरूपकसम्भवादिति विभाव्यते तथापि भगोअघोशब्दयोर्भोशब्दस्य चादेराकृतिगणत्वेन चादित्वे भाष्यस्वारस्यं स्पष्टमनुक्त्वा प्रत्याख्यानेऽस्पष्टं तत्कथमुच्यत इति विभाव्यताम्। यत्तु तत्र भो इत्याद्यपि वार्त्तिके सत्येव सिध्यतीति तत्र भवच्छब्दे सत्येवेत्युचितं तदपि कैय्यटादावेवोक्तम्। नापूर्वं ह्यस्यर्थलभ्यं भवदादीनामपरिगणितत्वेन निपातप्रयोगेऽपि त्रतसिलादिसिध्या प्रकाशे दूषितं च। आमन्त्रितत्वमपि न भवत्पदोपादानप्रयोजनं निपातभोःशब्दस्य स्वयमेव सम्बोधनार्थत्वोक्तेस्तदुत्तरप्रथमायास्तदर्थकत्वेनामन्त्रितत्वसाम्राज्यात्। सह्यप्रयोग. परं प्रयोजनमवशिष्यते तदप्यन्ये त्वित्यादिना द्वितीयपक्षोत्थापनाय प्रकाश उक्तं नापूर्वम्। तदपि न वास्तवम्। निपातस्योक्तकोशेन सम्बोधनार्थत्वेऽपि भवदर्थत्वस्यापि वक्तुं शक्यत्वात् निपातानामनेकार्थत्वदर्शनात्। यथाऽस्तीति तिङन्तप्रतिरूपकमव्यय-

स्यास्तिमानित्यादौ घनार्थत्वेऽप्यस्तिक्षीरेत्यादौ तिङन्तार्थत्वमपि दृश्यते। युक्तं चैतत्। कथमन्यथा भो ब्राह्मणा इत्याद्यनुपपत्तिनिराकरणे नैष दोष इत्यादिनाऽव्ययभोशब्देन भाष्यकृदुक्तं सङ्गच्छते। न ह्यर्थभेदे सति शब्दमात्रान्यथासिध्या पूर्वपक्षनिराकरणं युज्यते। कथं वा हे भो इति सहप्रयोग इव भवन् ब्राह्मणेत्यर्थे भो ब्राह्मणेति प्रयोगः प्रयोजनं नोक्तं परैरपि। एवं च भोसोऽव्ययस्य भवदर्थत्वध्रौव्ये तेनैव यथोक्तसकललक्ष्यसिद्धौ वार्त्तिके भवच्छब्दप्रत्याख्यानं कैश्चिदव्याकृतमेवोपोद्बलयितुं भाष्यादौ तु सकारान्तानेवैतान्निपातानाश्रित्य रुत्वोत्वे भाष्ये प्रत्याख्यात इति प्रकाशकृद्भिरुक्तम्। तत्र भगो अघो इत्येतयोर्निपातयोः प्रामाणिकत्वे तयोरुक्तरीत्या भगवदघवदर्थकत्वेन चाशङ्का न चोत्तरम्। अप्रामाणिकत्वे तु भाष्ये भवच्छब्दः प्रत्याख्याता इत्यादौ तु सर्वमित्यभिप्रायः। अत एवात्रेदं वाच्यमित्यादिना कैयटोक्तान्यमतमुपोद्बलयितुं भो इत्यादीना भवदाद्यर्थकत्वाभावबोधनाय भोः प्रभृतयः सम्बोधनार्था आभिमुख्यद्योतका असत्त्ववचना इतिवन्न स्थितिस्तत्र हे भो इत्यादिसहप्रयोगो न स्यादिति प्रकाश उक्तमिति दिक्। यत्तु यत्तु वदन्तीत्यादि

भाष्ये प्रत्याख्यातमित्यन्तमनूदितम् । सोऽयमनुक्तोपालम्भ इति सहृदयैराकलनीयम् ॥

## सोऽचि—।

अत्र सोऽहमाजन्मशुद्धानामित्यादि सिध्यर्थं लोपे सत्येव पादश्चेत् पूर्यतेति सावधारणं केचिद्व्याचख्युः तेषां सास्मा अरमित्यादौ सुलोपानापत्तिः । तत्र हि सः अस्मै इति छेदः । बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मशुद्धानामित्याद्यव तथोपपाद्यतां किमवधारणेनेति ॥

## इति स्वादिसन्धिः ।

---

## अर्थवत्—।

अर्थवदिति प्रतिवर्णं वनमित्यादौ प्रातिपदिकसंज्ञानिवृत्तये । न चाधातुरिति पर्युदासादर्थवत्त्वलाभः । असत्वार्थकत्वेनाऽपि पर्युदासोपपत्तेः । न चैवमप्रत्यय इति व्यर्थं वचे इत्यादौ सेप्रत्ययादीनां वारिणी भूयत इत्यादीनां च प्रातिपदिकनिवृत्त्यर्थत्वात् । न चैषां सति प्रातिपदिकत्वे किं बाधकमिति वाच्यम् । आद्ये सति प्रातिपदिकत्वे औत्सर्गिकैकवचने तस्याव्ययत्वेन

लुक्यपि प्रत्ययलक्षणेन से इत्यस्य पदत्वेन षत्वनिषेधस्य द्वितीये चौत्सर्गिकैकवचनश्रवणस्य लिङ्गसर्वनामनपुंसकत्वे च ह्रस्वस्य प्रसङ्गात् । न चैवमप्यप्रत्यय इति पर्युदासादर्थवत्त्वलाभः । तथाऽप्यसत्वार्थकत्वविशिष्टार्थवत्त्वविशिष्टस्य प्रातिपदिकत्वप्राप्तेः । न च तथाप्यर्थवत्त्वलाभवैयर्थ्यम् । पर्युदासार्थकनञ्समभिव्याहारव्युत्पत्तिसिद्धसादृश्यबोधस्य सामग्रीसत्वेनानिवारणात् । न चैतावता प्रातिपदिकत्वनिमित्तमर्थवत्त्वम् । तन्निवर्त्यस्यानर्थकस्य धातुपर्युदासलभ्यासत्वार्थकत्वेनैव निवर्त्तनात् । तथाप्यप्रत्यय इत्यनुग्रहायाधातुरित्यनेनार्थवत्त्वमेव सादृश्यं बोध्यन्तामिति चेन्न औत्सर्गिकस्य व्याप्यधर्मरूपसादृश्यबोधस्य त्यागायोगात् । कथमन्यथौषधेस्त्र विभक्तावप्रथमायामकर्त्तरि च कारके संज्ञायामित्यादौ प्रथमादिपर्युदासेन विभक्त्यादिलब्धौ विभक्त्यादिग्रहणं नञिवयुक्तन्यायस्यानित्यत्वं ज्ञापयेत् प्रत्ययत्वादिरूपस्यापि सादृश्यस्य सम्भवात् । एवं च धातुपर्युदासमात्रेणासत्वार्थकत्वं लभ्येतेति वनादौ प्रतिवर्णमिव रामादावपि प्रातिपदिकत्वं न स्यादित्यर्थवत्पदोपादानम् । तत्सामर्थ्याच्च नासत्वार्थकत्वलाभः । एतेन धात्वादिपर्युदासबलेन यद्यप्यर्थवत्त्वं लभ्यते तथाप्युत्तरार्थं तदिति केषांचिदुक्तिः परास्ता ।

यस्तु पर्युदासो नार्थवत्त्वं गमयत्यनर्थकस्येडादेर्घातो-
र्यौवादिकनादेश्च प्रत्ययस्य सत्त्वादिति हरदत्ततदनु-
यायिग्रन्थमंशेनानूद्य धात्वादेरनर्थकत्वे क्रियावाचित्वा-
भावे धातुत्वाभावस्य स्वार्थिकानां प्रकृत्यर्थेन चैवस्व-
सिद्धान्तभङ्गस्य चापत्तेरिदमयुक्तमिति दूषणं तदेत
दस्वरसप्रवृत्तेन न च ज्ञायते केन धर्मेण सादृश्यमिति
हरदत्तादिग्रन्थेनासत्त्वार्थकत्वरूपेण सादृश्य स्यादिति
तात्पर्यकेण तैरेव निराकृतमित्यनादेयमिति । यदप्य-
प्रत्यय इति प्रत्ययान्तपर्युदासो न प्रत्ययपर्युदासोऽपि
तस्यापि व्यपदेशिवद्भावेन प्रत्ययान्तत्वादिति हरदत्ताद्यु-
क्तौ प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रह-
णात् केवलस्य चातथात्वादिति केषाञ्चिद् दूषणम् । तद-
पि न । सात्पदाद्योरित्यत्र सातिग्रहणात् प्रत्ययग्रहण
इत्यादेस्तद्बहिर्भूतकर्त्तनविषयतायाः प्रकृते कल्पना-
दिति दिक् । इदन्त्ववधेयम् । अतः कृकमीत्यत्र
कंसग्रहणेन ज्ञापिते उणाद्यव्युत्पत्तिपक्षे डित्यादीनाम-
नेन प्रातिपदिकसंज्ञा विधीयते । व्युत्पत्तिपक्षेऽपि डित्था-
दीनां कृदन्तत्वात् कृत्तद्धितसमासाश्चेत्यनेन प्रातिपदि-
कसंज्ञासिद्धावपि बहुपटव इत्यादौ प्रातिपदिकसंज्ञा-
र्थमिदं सूत्रमावश्यकम् । न च कृत्तद्धितेत्यत्र तद्धित-
ग्रहणं तद्विशिष्टपरमिति कृत्तद्धितेत्यनेनैवात्रापि सं-

ज्ञासिद्धौ किमनेन सूत्रेणेति वाच्यम् । तथा विवक्षणे पचतकीत्यादावतिप्रसक्तेः । किं चासत्यस्मिन् सूत्रे उत्तरसूत्रस्थसमासग्रहणं विध्यर्थं स्यात्तथा च मूलकेनोपदंशमित्यत्र कृद्ग्रहणे गतिकारकपूर्वस्यापीति परिभाषया कृदन्तत्वात् संज्ञापत्तिः । सति त्वस्मिन्नुत्तरसूत्रस्य समासग्रहणस्य नियामकत्वेनोदाहृतवाक्यव्यावृत्तिरित्याद्याकरसिद्धम् एवंच पक्षद्वयेऽप्यस्य सूत्रस्य आवश्यकत्वेनेदं सूत्रमुणादीनामव्युत्पत्तिपक्षज्ञापकमिति केषांचिदुक्ती रभसादिति ध्येयम् ॥

## कृत्तद्धित—।

यत्तु समासग्रहणं नियमार्थम् । नियमश्च यत्र सङ्घाते पूर्वो भागः पदमुत्तरश्च प्रत्ययो न तस्य चेत् समासस्यैवेति तेन बहुज्विशिष्टस्य जन्मवानित्यादेश्च प्रातिपदिकत्वं सिध्यतीति । तन्न । अयमियानित्यादेः समुदायस्य नियमेन प्रातिपदिकत्वावारणात् तत्र पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादिति । यत्र सङ्घाते पूर्वो भागः पदमुत्तरश्च तद्विहितः प्रत्ययो नेति तु वक्तुमुचितम् । वस्तुतस्तु यत्तदर्थयोरननुगमाच्छब्दानुगमस्य चाकिञ्चित्करत्वात्तदननुगमेऽपि न क्षतिरिति ध्येयम् ॥

७॥

# ङ्याप्प्रातिपदिकात् ।

एतदधिकारफलं सर्वस्य विकारः सार्वे इत्यत्रानुदात्तादेरित्यञ् । सति ह्यस्मिन्नधिकारे ऽनुदात्तादेरिति ङ्याप्प्रातिपदिकविशेषणम् । तत्प्रकृतिकसुबन्तात् प्रत्यय इति विधिवाक्यार्थे ऽन्तोदात्तसर्वप्रकृतिकात् सर्वस्येति षष्ठ्यन्तादञ्सिद्धिः । अन्यथा ह्यनुदात्तादेरिति सुबन्तविशेषणं स्यादिति सर्वस्य सुपीत्याद्युदात्तात् सर्वशब्दात् षष्ठ्यन्तादञ् न स्यादित्याकरः । यत्त्वन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्याद्युदात्ताप्रवृत्तावेतदधिकाराभावेऽप्यञ्सिद्धिरिति । तन्न । सर्वस्तोम इत्यत्र लुगाद्युदात्तयोः समावेशादविरोधाल्लुकाद्युदात्तस्याबाधात् । न चाविरोधेऽप्युदात्तेन लुकः प्रतीक्षणादञः पूर्वमनुदात्तादित्वं सुबन्तस्याक्षतमेवेति वाच्यम् । समर्थानां प्रथमाद्वेति समर्थग्रहणस्याकृतव्यूहपरिभाषाज्ञापकत्वोपवर्णनेनाविरोधे लुकः प्रतीक्षाभावोन्नयनात् । सौत्थितिरित्यत्र कृतसवर्णदीर्घादिञ्स्यात् । न तु सुउत्थितेत्यकृतसवर्णदीर्घादित्येवमर्थं हि परिनिष्ठितपरं समर्थपदं तत्रातरङ्गत्वादेव सवर्णदीर्घे न्यायसिद्धे किं तदर्थेन समर्थग्रहणेनेत्यकृतव्यूहपरिभाषां ज्ञाप-

यति। अविरोधेऽपि लुकः प्रतीक्षायान्तु दीर्घेणा-पोऽनिमित्तप्रातिपदिकत्वनिमित्तस्य लुकः प्रतीक्षणा-त् उत्थितेत्यवस्थायामिञि सावुत्थितिरिति स्यादि-त्यन्तराङ्गानपीति परिभाषाबोधनेन समर्थपदसार्थ-क्येऽकृतव्यूहपरिभाषाज्ञापकायोगादिति। किञ्च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यनेन बहुव्रीहिकाले पूर्वपदस्वरस्य प्रकृतिभावमात्रं विधीयते तथा चाद्युदा-त्तेन लुकः प्रतीक्षायां बहुव्रीहिकाले सर्वशब्दस्यान्तो-दात्तत्वाद्बहुव्रीहिस्वरेण तस्यैव प्रकृतिभावः स्यान्नत्वा-द्युदात्तस्येति। यद्यपि प्रातिपदिकग्रहणे लिङ्गविशि-ष्टस्यापि ग्रहणात् किं ङ्याब्ग्रहणेन तथाऽप्यत्यन्तस्वा-र्थिकात् परादन्तरङ्गाच्च कनः प्राक् ङ्यापोः प्रवृ-त्त्यर्थं तत्। तेन लोहितार्यशब्दयोर्वर्णादिति ङीप्न-कारयोर्विकल्पेनोदीचामात स्थाने इतीत्वविकल्पेन च लोहिनिका लोहितिका आर्यका आर्यिकेति सिध्यति। यत्तु सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सुपश्च प्रागन्तरङ्गत्वात् स्त्रीप्रत्यय इति न्यायसिद्धैव ङ्यापोः प्राक् प्रवृत्तिरिति तन्न। सुबन्तात्तद्धितोत्पत्ति-रिति सिद्धान्तो हि न्यायमूलकः। तथाहि। सु-बर्थसंख्यादिसम्बन्धस्तद्धितार्थसम्बन्धापेक्षयाऽन्तरङ्गः। लिङ्गसम्बन्ध इव सुबर्थसम्बन्धापेक्षया। तथा च सुब-

पेक्षया स्त्रीप्रत्ययस्येव तद्धितापेक्षया सुपोऽप्युत्पत्तिः प्रागेवेति न्यायः स च नात्यन्तस्वार्थिकेष्विति प्रातिपदिकादेव सुबपेक्षया परत्वादन्तरङ्गत्वाच्च तदुत्पत्तौ बाधकाभावात्। तदुक्तं भाष्ये। स्वार्थमभिधाय शब्दो द्रव्यमाह समवेतम्। समवेतस्य च वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान् विशेषानपेक्षमाणस्य कृत्स्नमात्मानं प्रियकुत्सनादिषु ततः प्रवर्तते सौ विभक्त्यन्त इति। अत एव तरबादेः स्त्रीप्रत्ययापेक्षया बहिरङ्गत्वमुक्त्वा कथं कालिकेत्यादिभाष्यप्रश्नस्यात्यन्तस्वार्थिकात् कनः स्त्रीप्रत्ययस्यान्तरङ्गत्वं नास्तीत्यभिप्रायः कैयटेन वर्णितः हरदत्तोऽप्येवमिति। न चैवं बहुगोमत्केत्यादौ कपः प्रागुगिल्लक्षणो ङीप् स्यादिति वाच्यम्। समासात् प्रागलौकिकवाक्य एवोत्तरपदावयवसमासान्तस्य प्रवर्त्तनात्। स च विभक्तेः परस्तादिति पक्षः कैश्चिदुपन्यस्तः। स बहुधर्मिकेत्यादावपि सुपः परत्वं स्यादिति कात् पूर्वं स्यात इत्वाभावापत्तेरुपेक्ष्यः। तस्मात् परस्तात् पक्ष एव युक्त इति दिक्॥

## सुपः।

सुपस्त्रीणि त्रीणि पदान्येकैकवचनादिसंज्ञानि स्युरित्याचार्याः। यत्त्वन तान्येकवचनेत्यादि संप्रश्नसूत्रमनुवर्त्तत